तस्माद्वेदव्रतानीह चरेत् स्वाध्यायसिद्धये।
शौचाचारमशेषन्तु शिक्षयेद्गुरुसन्निधौ॥ ५
अजिनं दण्डकाष्ठञ्च मेखलाञ्चोपवीतकम्।
धारयेदप्रमत्तश्च ब्रह्मचारी समाहितः॥ ६
सायं प्रातश्चरेद्भैक्षं भोज्यार्थं संयतेन्द्रियः।
आचम्य प्रयतो नित्यं न कुर्य्याद्दन्तधावनम्॥ ७
छत्रञ्चोपानहञ्चैव गन्धमाल्यादि वर्ज्जयेत्।
नृत्यगीतमथालापं मैथुनञ्च विवर्ज्जयेत्॥ ८
हस्त्यश्वारोहणञ्चैव सन्त्यजेत् संयतेन्द्रियः।
सन्ध्योपास्तिं प्रकुर्व्वीत ब्रह्मचारी व्रतस्थितः॥ ९
अभिवाद्य गुरोः पादौ सन्ध्याकर्म्मावसानतः।
तथा यागं प्रकुर्व्वीत मातापित्रोश्च भक्तितः॥ १०
एतेषु त्रिषु नष्टेषु नष्टाः स्युः सर्व्वदेवताः।
एतेषां शासने तिष्ठेद्ब्रह्मचारी विमत्सरः॥ ११
अधीत्य च गुरोर्व्वेदान् वेदौ वा वेदमेव वा।
गुरवे दक्षिणां दद्यात् संयमी ग्राममावसेत्॥ १२
यस्यैतानि सुगुप्तानि जिह्वोपस्थोदरं करः।
सन्न्याससमयं कृत्वा ब्राह्मणो ब्रह्मचर्य्यया॥ १३
तस्मिन्नेव नयेत् कालमाचार्य्ये यावदायुषम्।
तदभावे च तत्पुत्रे तच्छिष्ये वाथवा कुले॥
न विवाहो न सन्न्यासो नैष्ठिकस्य विधीयते॥ १४
इमं यो विधिमास्थाय त्यजेद्देहमतन्द्रितः।
नेह भूयोऽपि जायेत ब्रह्मचारी दृढ़व्रतः॥ १५

यो ब्रह्मचारी विधिना समाहित
श्चरेत् पृथिव्यां गुरुसेवने रतः।
सम्प्राप्य विद्यामतिदुर्लभां शिवां
फलञ्च तस्याः सुलभन्तु विन्दति ॥ १६

इति हारीते धर्म्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

गृहीतवेदाध्ययनः श्रुतशास्त्रार्थतत्त्ववित्।
असमानार्षगोत्रां हि कन्यां सभ्रातृकां शुभाम् ॥ १
सर्व्वावयवसम्पूर्णां सुवृत्तामुद्वहेन्नरः।
ब्राह्मेण विधिना कुर्य्यात् प्रशस्तेन द्विजोत्तमः ॥ २
तथान्ये बहवः प्रोक्ता विवाहा वर्णधर्म्मतः।
औपासनञ्च विधिवदाहृत्य द्विजपुङ्गवाः ॥ ३
सायं प्रातश्च जुहुयात् सर्व्वकालमतन्द्रितः।
स्नानं कार्य्यं ततो नित्यं दन्तधावनपूर्व्वकम् ॥ ४
उषःकाले समुत्थाय कृतशौचो यथाविधि।
मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ॥ ५
तस्माच्छुष्कमथार्द्रं वा भक्षयेद्दन्तकाष्ठकम्।
करञ्जं खादिरं वापि कदम्बं कुरवं तथा ॥ ६
सप्तपर्णपृश्निपर्णीजम्बुनिम्बं तथैव च।
अपामार्गञ्च विल्वञ्चार्कञ्चोडुम्बरमेव च ॥ ७
एते प्रशस्ताः कथिता दन्तधावनकर्म्मणि।
दन्तकाष्ठस्य भक्षस्य समासेन प्रकीर्त्तितः ॥ ८

सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ।
अष्टाङ्गुलेन मानेन दन्तकाष्ठमिहोच्यते ।
प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत् ॥ ९
प्रतिपत्पर्व्वषष्ठीषु नवम्याञ्चैव सत्तमाः ।
दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥ १०
अभावे दन्तकाष्ठानां प्रतिषिद्धदिनेषु च ।
अपां द्वादशगण्डूषैर्मुखशुद्धिं समाचरेत् ॥ ११
स्नात्वा मन्त्रवदाचम्य पुनराचमनं चरेत् ।
मन्त्रवत् प्रोक्ष्य चात्मानं प्रक्षिपेदुदकाञ्जलिम् ॥ १२
आदित्येन सह प्रातर्मन्देहा नाम राक्षसाः ।
युध्यन्ति वरदानेन ब्रह्मणोऽव्यक्तजन्मनः ॥ १३
उदकाञ्जलिनिक्षेपा गायत्र्या चाभिमन्त्रिताः ।
निघ्नन्ति राक्षसान् सर्व्वान् मन्देहाख्यान् द्विजेरिताः ॥ १४
ततः प्रयाति सविता ब्राह्मणैरभिरक्षितः ।
मरीच्याद्यैर्महाभागैः सनकाद्यैश्च योगिभिः ॥ १५
तस्मान्न लङ्घयेत् सन्ध्यां सायं प्रातः समाहितः ।
उल्लङ्घयति यो मोहात् स याति नरकं ध्रुवम् ॥ १६
सायं मन्त्रवदाचम्य प्रोक्ष्य सूर्य्यस्य चाञ्जलिम् ।
दत्त्वा प्रदक्षिणं कुर्य्याज्जलं स्पृष्ट्वा विशुध्यति ॥ १७
पूर्व्वां सन्ध्यां सनक्षत्रामुपासीत यथाविधि ।
गायत्रीमभ्यसेत्तावद्यावदादित्यदर्शनात् ॥ १८
उपास्य पश्चिमां सन्ध्यां सादित्याञ्च यथाविधि ।
गायत्रीमभ्यसेत्तावद्यावत्तारां न पश्यति ॥ १९
ततश्चावसथं प्राप्य कृत्वा होमं स्वयं बुधः ।

सञ्चिन्त्य पोष्यवर्गस्य भरणार्थं विचक्षणः ॥ २०
ततः शिष्यहितार्थाय स्वाध्यायं किञ्चिदाचरेत्।
ईश्वरञ्चैव कार्य्यार्थमभिगच्छेद्द्विजोत्तमः ॥ २१
कुशपुष्पेन्धनादीनि गत्वा दूरं समाहरेत्।
ततो माध्याह्निकं कुर्य्याच्छुचौ देशे मनोरमे ॥ २२
विधिं तस्य प्रवक्ष्यामि समासात् पापनाशनम्।
स्नात्वा येन विधानेन मुच्यते सर्व्वकिल्विषात् ॥ २३
स्नानार्थं मृदमानीय शुद्धाक्षततिलैः सह।
सुमनाश्च ततो गच्छेन्नदीं शुद्धजलाधिकाम् ॥ २४
नद्यान्तु विद्यमानायां न स्नायादन्यवारिणि।
न स्नायादल्पतोयेषु विद्यमाने बहूदके ॥ २५
सरिद्वरं नदीस्नानं प्रतिस्रोतःस्थितश्चरेत्।
तड़ागादिषु तोयेषु स्नायाच्च तदभावतः ॥ २६
शुचिदेशं समभ्युक्ष्य स्थापयेत् सकलाम्बरम्।
मृत्तोयेन स्वकं देहं लिम्पेत् प्रक्षाल्य यत्नतः ॥ २७
स्नानादिकञ्च सम्प्राप्य कुर्य्यादाचमनं बुधः।
सोऽन्तर्ज्जलं प्रविश्याथ वाग्यतो नियमेन हि।
हरिं संस्मृत्य मनसा मज्जयेच्चूरुमज्जले ॥ २८
ततस्तीरं समासाद्य आचम्यापः समन्ततः।
प्रोक्षयेद्वारुणैर्मन्त्रैः पावमानीभिरेव च ॥ २९
कुशाग्रकृततोयेन प्रोक्ष्यात्मानं प्रयत्नतः।
स्योनापृथिवीति मृद्गात्रे इदंविष्णुरिति द्विजाः ॥ ३०
ततो नारायणं देवं संस्मरेत् प्रतिमज्जनम्।
निमज्यान्तर्ज्जले सम्यक् क्रियते चाघमर्षणम् ॥ ३१

स्नात्वाक्षततिलैस्तद्वद्देवर्षिपितृभिः सह।
तर्पयित्वा जलं तस्मान्निष्पीड्य च समाहितः॥ ३२
जलतीरं समासाद्य तत्र शुक्ले च वाससी।
परिधायोत्तरीयञ्च कुर्य्यात् केशान्न धूनयेत्॥ ३३
न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते।
मलाक्तं गन्धहीनञ्च वर्ज्जयेदम्बरं बुधः॥ ३४
ततः प्रक्षालयेत् पादौ मृत्तोयेन विचक्षणः।
दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत् पुनः॥ ३५
त्रिः पिबेदीक्षितं तोयमास्यं द्विः परिमार्ज्जयेत्।
पादौ शिरस्ततोऽभ्युक्ष्य त्रिभिरास्यमुपस्पृशेत्॥ ३६
अङ्गुष्ठानामिकाभ्याञ्च चक्षुषी समुपस्पृशेत्।
तथैव पञ्चभिर्मूर्द्धि स्पृशेदेवं समाहितः॥ ३७
अनेन विधिनाचम्य ब्राह्मणः शुद्धमानसः।
कुर्व्वीत दर्भपाणिस्तूदङ्मुखः प्राङ्मुखोऽपि वा॥ ३८
प्राणायामत्रयं धीमान् यथान्यायमतन्द्रितः।
जपयज्ञं ततः कुर्य्याद्गायत्रीं वेदमातरम्॥ ३९
त्रिविधो जपयज्ञः स्यात्तस्य तत्त्वं निबोधत।
वाचिकश्च उपांशुश्च मानसश्च त्रिधाकृतिः॥ ४०
त्रयाणामपि यज्ञानां श्रेष्ठः स्यादुत्तरोत्तरः॥ ४१
यदुच्चनीचोच्चरितैः शब्दैः स्पष्टपदाक्षरैः।
मन्त्रमुच्चारयन् वाचा जपयज्ञस्तु वाचिकः॥ ४२
शनैरुच्चारयन्मन्त्रं किञ्चिदोष्ठौ प्रचालयेत्।
किञ्चिच्छ्रवणयोग्यः स्यात् स उपांशुर्जपः स्मृत॥ ४३

धिया पदाक्षरश्रेण्या अवर्णमपदाक्षरम्।
शब्दार्थचिन्तनाभ्यान्तु तदुक्तं मानसं स्मृतम्॥ ४४
जपेन देवता नित्यं स्तूयमाना प्रसीदति।
प्रसन्ने विपुलान् भोगान् प्राप्नुवन्ति मनीषिणः॥ ४५
राक्षसाश्च पिशाचाश्च महासर्पाश्च भीषणाः।
जपिताक्षोपसर्पन्ति दूरादेव प्रयान्ति ते॥ ४६
छन्द ऋष्यादि विज्ञाय जपेन्मन्त्रमतन्द्रितः।
जपेदहरहर्ज्ञात्वा गायत्रीं मनसा द्विजः॥ ४७
सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीं यो जपेन्नित्यं स न पापेन लिप्यते॥ ४८
अथ पुष्पाञ्जलिं कृत्वा भानवे चोर्द्ध्वबाहुकः।
उदुत्यञ्च जपेत् सूक्तं तच्चक्षुरिति चापरम्॥ ४९
प्रदक्षिणमुपावृत्य नमस्कुर्य्याद्दिवाकरम्।
ततस्तीर्थेन देवादीनद्भिः स[illegible]॥ ५०
स्नानवस्त्रन्तु निष्पीड्य पुनराचमनं चरेत्।
तद्वदस्नातजनस्येह स्नानं दानं प्रकीर्त्तितम्॥ ५१
दर्भासीनो दर्भपाणिः ब्र[illegible]विधानतः।
प्राङ्मुखो ब्रह्मयज्ञन्तु कुर्य्याच्छ्रद्धासमन्वितः॥ ५२
ततोऽर्घं भानवे दद्यात्तिलपुष्पाक्षतान्वितम्।
उत्थाय मूर्द्धपर्य्यन्तं हंसः शुचिषदित्यृचा॥ ५३
ततो देवं नमस्कृत्य गृहं गच्छेत्ततः पुनः।
विधिना पुरुषसूक्तस्य गत्वा विष्णुं समर्च्चयेत्॥ ५४
वैश्वदेवं ततः कुर्य्याद्बलिकर्म्म विधानतः।
गोदोहमात्रमाकाङ्क्षेदतिथिं प्रति वै गृही॥ ५५

अदृष्टपूर्व्वमज्ञातमतिथिं प्राप्तमर्च्चयेत् ।
स्वागतासनदानेन प्रत्युत्थानेन चाम्बुना ॥ ५६
स्वागतेनाग्नयस्तुष्टा भवन्ति गृहमेधिनः ।
आसनेन तु दत्तेन प्रीतो भवति देवराट् ॥ ५७
पादशौचेन पितरः प्रीतिमायान्ति दुर्लभाम् ।
अन्नदानेन युक्तेन तृप्यते हि प्रजापतिः ॥ ५८
तस्मादतिथये कार्य्यं पूजनं गृहमेधिना ।
भक्त्या च शक्तितो नित्यं विष्णोरर्च्चादनन्तरम् ॥ ५९
भिक्षाञ्च भिक्षवे दद्यात् परिव्राड्ब्रह्मचारिणे ।
अकल्पितान्नमुद्धृत्य सव्यञ्जनसमन्वितम् ॥ ६०
अकृते वैश्वदेवेऽपि भिक्षौ च गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्ज्जयेत् ॥ ६१
वैश्वदेवकृतान् दोषाञ्छक्तो भिक्षुर्व्यपोहितुम् ।
न हि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति ॥ ६२
तस्मात् प्राप्ताय यतये भिक्षां दद्यात् समाहितः ।
विष्णुरेव यतिच्छाय इति निश्चित्य भावयेत् ॥ ६३
सुवासिनीं कुमारीञ्च भोजयित्वा नरानपि ।
बालवृद्धांस्ततः शेषं स्वयं भुञ्जीत वा गृही ॥ ६४
प्राङ्मुखोदङ्मुखो वापि मौनी च मितभाषकः ।
अन्नमादौ नमस्कृत्य प्रहृष्टेनान्तरात्मना ॥ ६५
एवं प्राणाहुतिं कुर्य्यान्मन्त्रेण च पृथक् पृथक् ।
ततः स्वादुकरान्नञ्च भुञ्जीत सुसमाहितः ॥ ६६
आचम्य देवतामिष्टां संस्मरन्नुदरं स्पृशेत् ।
इतिहासपुराणाभ्यां कञ्चित् कालं नयेद्बुधः ॥ ६७

ततः सन्ध्यामुपासीत वहिर्गत्वा विधानतः ।
कृतहोमस्तु भुञ्जीत रात्रौ चातिथिभोजनम् ॥ ६८
सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्य्यादग्निहोत्रसमो विधिः ॥ ६९
शिष्यानध्यापयेच्चापि अनध्याये विसर्ज्जयेत् ।
स्मृत्युक्तानखिलांश्चापि पुराणोक्तानपि द्विजः ॥ ७०
महानवम्यां द्वादश्यां भरण्यामपि पर्व्वसु ।
तथाक्षयतृतीयायां शिष्यान् नाध्यापयेद्द्विजः ॥ ७१
माघमासि तु सप्तम्यां रथाख्यायान्तु वर्ज्जयेत् ।
अध्यापनं समभ्यञ्जन् स्नानकाले च वर्ज्जयेत् ॥ ७२
नीयमानं शवं दृष्ट्वा महीस्थं वा द्विजोत्तमाः ।
न पठेद्रुदितं श्रुत्वा सन्ध्यायान्तु द्विजोत्तमाः ॥ ७३
दानानि च प्रदेयानि गृहस्थेन द्विजोत्तमाः ।
हिरण्यदानं गोदानं पृथिवीदानमेव च ॥ ७४
एवं धर्म्मो गृहस्थस्य सारभूत उदाहृतः ।
य एवं श्रद्धया कुर्य्यात् स याति ब्रह्मणः पदम् ॥ ७५
ज्ञानोत्कर्षश्च तस्य स्यात्संसारसिंहप्रसादतः ।
तस्मान्मुक्तिमवाप्नोति ब्राह्मणो द्विजसत्तमाः ॥ ७६

एवं हि विप्राः कथितो मया वः
समासतः शाश्वतधर्म्मराशिः ।
गृही गृहस्थस्य सतो हि धर्म्मं
कुर्व्वन् प्रयत्नाद्धरिमेति युक्तम् ॥ ७७

इति हारीते धर्म्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः।

अतः परं प्रवक्ष्यामि वानप्रस्थस्य सत्तमाः।
धर्म्माश्रमं महाभागाः कथ्यमानं निबोधत ॥ १
गृहस्थः पुत्रपौत्रादीन् दृष्ट्वा पलितमात्मनः।
भार्य्यां पुत्रेषु निक्षिप्य सह वा प्रविशेद्वनम् ॥ २
नखरोमाणि च तथा सितगात्रत्वगादि च।
धारयन् जुहुयादग्निं वनस्थो विधिमाश्रितः ॥ ३
धान्यैश्च वनसम्भूतैर्नीवाराद्यैरनिन्दितैः।
शाकमूलफलैर्व्वापि कुर्य्यान्नित्यं प्रयत्नतः ॥ ४
त्रिकालस्नानयुक्तस्तु कुर्य्यात्तीव्रं तपस्तदा।
पक्षान्ते वा समश्नीयान्मासान्ते वा स्वपक्वभुक् ॥ ५
यथा चतुर्थकाले तु भुञ्जीयादष्टमेऽथवा।
षष्ठे च कालेऽप्यथवा वायुभक्षोऽथवा भवेत् ॥ ६
घर्म्मे पञ्चाग्निमध्यस्थस्तथा वर्षे निराश्रयः।
हेमन्ते च जले स्थित्वा नयेत् कालं तपश्चरन् ॥ ७
एवञ्च कुर्व्वता येन कृतबुद्धिर्यथाक्रमम्।
अग्निं स्वात्मनि कृत्वा तु प्रव्रजेदुत्तरां दिशम् ॥ ८
आदेहपातं वनगो मौनमास्थाय तापसः।
स्मरन्नतीन्द्रियं ब्रह्म ब्रह्मलोके महीयते ॥ ९
तपो हि यः सेवति वन्यवासः समाधियुक्तः प्रयतान्तरात्मा।
विमुक्तपापो विमलः प्रशान्तः स याति दिव्यं पुरुषं पुराणम् ॥ १०

इति हारीते धर्म्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः।

अतःपरं प्रवक्ष्यामि चतुर्थाश्रममुत्तमम्।
श्रद्धया तदनुष्ठाय तिष्ठन् मुच्येत बन्धनात्॥ १
एवं वनाश्रमे तिष्ठन् पातयंश्चैव किल्बिषम्।
चतुर्थमाश्रमं गच्छेत् सन्न्यासविधिना द्विजः॥ २
दत्त्वा पितृभ्यो देवेभ्यो मानुषेभ्यश्च यत्नतः।
दत्त्वा श्राद्धं पितृभ्यश्च मानुषेभ्यस्तथात्मनः॥ ३
इष्टिं वैश्वानरीं कृत्वा प्राङ्मुखोदङ्मुखोऽपि वा।
अग्निं स्वात्मनि संरोप्य मन्त्रवित् प्रव्रजेत् पुनः॥ ४
ततः प्रभृति पुत्रादौ स्नेहालापादि वर्ज्जयेत्।
बन्धुनामभयं दद्यात् सर्व्वभूताभयं तथा॥ ५
त्रिदण्डं वैणवं सम्यक् सन्ततं समपर्व्वकम्।
वेष्टितं कृष्णगोवालरज्जुमच्चतुरङ्गुलम्॥ ६
शौचार्थं मानसार्थञ्च मुनिभिः समुदाहृतम्।
कौपीनाच्छादनं वासः कन्थां शीतनिवारिणीम्॥ ७
पादुके चापि गृह्णीयात् कुर्य्यान्नान्यस्य संग्रहम्।
एतानि तस्य लिङ्गानि यतेः प्रोक्तानि सर्व्वदा॥ ८
संगृह्य कृतसन्न्यासो गत्वा तीर्थमनुत्तमम्।
स्नात्वाचम्य च विधिवद्वस्त्रपूतेन वारिणा॥ ९
तर्पयित्वा तु देवांश्च मन्त्रवद्भास्करं नमेत्।
आत्मनः प्राङ्मुखो मौनी प्राणायामत्रयं चरेत्॥ १०
गायत्रीञ्च यथाशक्ति जप्त्वा ध्यायेत् परं पदम्।
स्थित्यर्थमात्मनो नित्यं भिक्षाटनमथाचरेत्॥ ११

सायंकाले तु विप्राणां गृहाण्यभ्यवपद्य तु।
सम्यग् याचेच्च कवलं दक्षिणेन करेण वै॥ १२
पात्रं वामकरे स्थाप्य दक्षिणेन तु शोधयेत्।
यावतान्नेन तृप्तिः स्यात्तावद्भैक्ष्यं समाचरेत्॥ १३
ततो निवृत्य तत्पात्रं संस्थाप्यान्यत्र संयमी।
चतुर्भिरङ्गुलैश्छाद्य ग्रासमात्रं समाहितः॥ १४
सर्व्वव्यञ्जनसंयुक्तं पृथक्पात्रे नियोजयेत्।
सूर्य्यादिभूतदेवेभ्यो दत्त्वा सम्प्रोक्ष्य वारिणा॥ १५
भुञ्जीत पात्रपुटके पात्रे वा‥ तो यतिः।
वटकाश्वत्थपर्णेषु कुम्भीतैन्दुकपात्रके॥ १६
कोविदारकदम्बेषु न भुञ्जीयात् कदाचन।
मलाक्ताः सर्व्वं उच्यन्ते यतयः कांस्यभोजिनः॥ १७
कांस्यभाण्डेषु यत् पाको गृहस्थस्य तथैव च।
कांस्ये भोजयतः सर्व्वं किल्बिषं प्राप्नुयात्तयोः॥ १८
भूक्त्वा पात्रे यतिर्नित्यं क्षालयेन्मन्त्रपूर्व्वकम्।
न दुष्यते च तत्पात्रं यज्ञेषु चमसा इव॥ १९
अथाचम्य निदिध्यास्य उपतिष्ठेत भास्करम्।
जपध्यानेतिहासैश्च दिनशेषं नयेद्बुधः॥ २०
कृतसन्ध्यस्ततो रात्रिं नयेद्देवगृहादिषु।
हृत्पुण्डरीकनिलये ध्यायेदात्मानमव्ययम्॥ २१
यदि धर्म्मरतिः शान्तः सर्व्वभूतसमो वशी।
प्राप्नोति परमं स्थानं यत् प्राप्य न निवर्त्तते॥ २२
त्रिदण्डभृद्यो हि पृथक् समाचरेच्छनैःशनैर्यस्तु
वहिर्मुखाक्षः।

सम्मुच संसारसमस्तबन्धनात् स याति विष्णोरमृतात्मनः
पदम् ॥ २३

इति हारीते धर्म्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः।

वर्णानामाश्रमाणाञ्च कथितं धर्म्मलक्षणम्।
येन स्वर्गापवर्गञ्च प्राप्नुवन्ति द्विजातयः ॥ १
योगशास्त्रं प्रवक्ष्यामि सङ्क्षेपात् सारमुत्तमम्।
यस्य च श्रवणाद्यान्ति मोक्षञ्चैव मुमुक्षवः ॥ २
योगाभ्यासबलेनैव नश्येयुः पातकानि तु।
तस्माद्योगपरो भूत्वा ध्यायेन्नित्यं क्रियापरः ॥ ३
प्राणायामेन वचनं प्रत्याहारेण चेन्द्रियम्।
धारणाभिर्व्वशे कृत्वा पूर्व्वं दुर्द्धर्षणं मनः ॥ ४
एकाकारमना मन्द्रं बुधरूपमनामयम्।
सूक्ष्मात् सूक्ष्मतरं ध्यायेज्जगदाधारमुच्यते ॥ ५
आत्मानं वहिरन्तःस्थं शुद्धचामीकरप्रभम्।
रहस्येकान्तमासीनो ध्यायेदामरणान्तिकम् ॥ ६
यत् सर्व्वप्राणिहृदयं सर्व्वेषाञ्च हृदिस्थितम्।
यच्च सर्व्वजनैर्ज्ञेयं सोऽहमस्मीति चिन्तयेत् ॥ ७
आत्मलाभसुखं यावत्तपोध्यानमुदीरितम्।
श्रुतिस्मृत्युदितं धर्म्मं तद्विरुद्धं न चाचरेत् ॥ ८

यथा रथोऽश्वहीनस्तु यथाश्वो रथिहीनकः।
एवं तपश्च विद्या च संयुतं भेषजं भवेत्॥ ९
यथान्नं मधुसंयुक्तं मधुरान्नेन संयुतम्।
उभाभ्यामपि पक्षाभ्यां यथा खे पक्षिणां गतिः॥ १०
तथैव ज्ञानकर्म्मभ्यां प्राप्यते ब्रह्मशाश्वतम्।
विद्यातपोभ्यां सम्पन्नो ब्राह्मणो योगतत्परः॥ ११
देहद्वयं विहायाशु मुक्तो भवति बन्धनात्।
न तथा क्षीणदेहस्य विनाशो विद्यते क्वचित्॥ १२
मया ते कथितः सर्व्वो वर्णाश्रमविभागशः।
सङ्क्षेपेण द्विजश्रेष्ठा धर्म्मस्तेषां सनातनः॥ १३
श्रुत्वैवं मुनयो धर्म्मं स्वर्गमोक्षफलप्रदम्।
प्रणम्य तमृषिं जग्मुर्मुदिताः स्वं स्वमाश्रमम्॥ १४
मार्कण्डेयः।
धर्म्मशास्त्रमिदं सर्व्वं हारीतमुखनिःसृतम्।
अधीत्य कुरुते धर्म्मं स याति परमां गतिम्॥ १५
ब्राह्मणस्य तु यत् कर्म्म कथितं बाहुजस्य च।
ऊरुजस्यापि यत् कर्म्म कथितं पादजस्य च॥ १६
अन्यथा वर्त्तमानस्तु सद्यः पतति जातितः।
यो यस्याभिहितो धर्म्मः स तु तस्य तथैव च।
तस्मात् स्वधर्म्मं कुर्व्वीत द्विजो नित्यमनापदि॥ १७
वर्णाश्चत्वारो राजेन्द्र चत्वारश्चापि चाश्रमाः।
स्वधर्म्मं ये तु तिष्ठन्ति ते यान्ति परमां गतिम्॥ १८
स्वधर्म्मेण यथा नृणां नारसिंहः प्रसीदति।
न तुष्यति तथान्येन कर्म्मणा मधुसूदनः॥ १९

अतः कुर्व्वन् निजं कर्म्म यथाकालमतन्द्रितः।
सहस्रानीकदेवेशं नारसिंहस्य सालयम्॥ २०

उत्पन्नवैराग्यबलेन योगी
ध्यायेत् परं ब्रह्म सदाक्रियावान्।
सत्यं सुखं रूपमनन्तमाद्यं
विहाय देहं पदमेति विष्णोः॥ २१

इति हारीते धर्म्मशास्त्रे सप्तमोऽध्यायः॥ ७

# उशनःसंहिता।

## प्रथमोऽध्यायः।

शौनकाद्याश्च मुनयः औशनं भार्गवं मुनिम्।
नत्वा पप्रच्छुरखिलं धर्म्मशास्त्रविनिर्णयम्॥ १
ऋषीणां शृखतां पूर्व्वमुशना धर्म्मतत्त्ववित्।
धर्म्मार्थकाममोक्षाणां कारणं पापनाशनम्॥ २
सुसमाहितचित्ता यूयं शृणुध्वं गदतो मम।
भार्गवं पितरं नत्वा उशनं धर्म्ममब्रवीत्॥ ३
कृतोपनयनो वेदानधीयत द्विजोत्तमः।
गर्भाष्टमे वाष्टमे वा स्वसूत्रोक्तविधानतः॥ ४
दण्डे च मेखलासूत्रे कृष्णाजिनधरो मुनिः।
भिक्षाहारो गुरुहितेवीक्षमाणो गुरोर्म्मुखम्॥ ५
कार्पासमुपवीतं स्यान्निर्म्मितं ब्रह्मणा पुरा।
ब्राह्मणानां त्रिवृत् सूत्रं शोणमाविकमेव वा॥ ६
सदोपवीती चैव स्यात् सदा बद्धशिखो द्विजः।
अन्यथा यत्कृतं वासः कार्पासं वा कषायकम्।
तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम्॥ ७
उत्तरीयं समाख्यातं वासःकृष्णाजिनं शुभम्।
अभावे भव्यमजिनं रौरवं वा विधीयते॥ ८
उपवीतं वामबाहुसव्यबाहुसमन्वितम्।
उपवीती भवेन्नित्यं निवीतं कण्ठलम्बनम्॥ ९
सव्यबाहुं समुद्धृत्य दक्षिणेन धृतां द्विजाः।
प्राचीनावीतमित्युक्तं पित्र्ये कर्म्मणि धारयेत्॥ १०

अग्न्यगारे गवांगोष्ठे होमे जप्ये तथैव च ।
स्वाध्यायभोजने नित्यं ब्राह्मणानाञ्च सन्निधौ ॥ ११
उपासने गुरूणाञ्च सन्ध्ययोरुभयोरपि ।
उपवीती भवेन्नित्यं विधिरेष सनातनः ॥ १२
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ।
मुञ्जाभावे कुशानाञ्चैव ग्रन्थिनैकेन वा त्रिभिः ॥ १३
धारयेद्विल्वपालाशं दण्डं केशान्तगं द्विजः ।
यज्ञार्हवृक्षजं वाथ सौम्यं व्रणमेवच ॥ १४
सायं प्रातर्द्विजः सन्ध्यामुपासीत समाहितः ।
कामाल्लोभाद्भयान्मोहात्त्यक्त्वा न पतितो भवेत् ॥ १५
अग्निकार्य्यं ततः कुर्य्यात् सायं प्रातः प्रसन्नधीः ।
स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥ १६
देवाभ्यर्च्चां ततः कुर्य्यात् पुष्पैः पत्रैश्च चाम्बुभिः ।
अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्म्मतः ॥ १७
असावहम्भो नामेति सम्यक् प्रणतिपूर्व्वकम् ।
आयुरारोग्यवान् वित्तं द्रव्याद्यपरिवर्ज्जितः ॥ १८
आयुष्मान् भव सौम्येति वाच्यो विप्राभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरस्थतः ॥ १९
यो न वेत्त्यभिवादस्य द्विजः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ २०
सव्येन पाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणम् ॥ २१
लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा ।
आददीत यतो ज्ञानं तत्पूर्व्वमभिवादयेत् ॥ २२

नोदकं धारयेद्भैक्ष्यं पुष्पाणि समिधस्तथा।
एवं विधानि चान्यानि न देवार्थेषु किञ्चन॥ २३
ब्राह्मणं कुशलं पृच्छेत् क्षत्रियञ्चाप्यनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥ २४
उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः।
मातुलश्वशुरभ्रातृमातामहपितामहौ।
वर्णकाश्च पितृव्यश्च सप्तैते पितरः स्मृताः॥ २५
माता मातामही गुर्व्वी पितृमातृष्वसादयः।
श्वश्रूः पितामही ज्येष्ठा ज्ञातव्या गुरवः स्त्रियः॥ २६
इत्युक्ता गुरवः सर्व्वे मातृतः पितृतस्तथा।
अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः॥ २७
गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः।
न तैरुपविशेत् सार्द्धं विवदेन्नार्थकारणात्॥ २८
जीवितार्थमपि द्वेषं गुरुभिर्नैव भाषणम्।
उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः॥ २९
गुरूणामपि सर्व्वेषां पूज्याः पञ्च विशेषतः।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता॥ ३०
यो हि वासयति दिवा येन सद्योपदिश्यते।
ज्येष्ठो भ्राता च भर्त्ता च पञ्च ते गुरवस्तथा॥ ३१
आत्मनः सर्व्वयत्नेन प्राणत्यागेन वा पुनः।
पूजनीयाः प्रयत्नेन पञ्चैते भूतिमिच्छता॥ ३२
यावत् पिता च माता च द्वावेतौ निर्व्विकारणम्।
तावत्सर्व्वं परित्यज्य पुत्रः स्यात्तत्परायणः॥ ३३

पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
स पुत्रः सकलं कर्म्म प्राप्नुयात् तेन कर्म्मणा ॥ ३४
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः ।
तयोःप्रत्युपकारोऽपि न हि कश्चन विद्यते ॥ ३५
तयोर्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा ।
न ताभ्यामननुज्ञातो धर्म्ममिकं समाचरेत् ॥ ३६
वर्ज्जयित्वा मुक्तिफलं नित्यनैमित्तिकं तथा ।
धर्म्मसारः समुद्दिष्टः प्रेत्यानन्दफलप्रदः ॥ ३७
सम्यगाचारवक्तारं विसृष्टस्तदनुज्ञया ।
शिष्यो विद्याफलं भुङ्क्ते प्रेत्य चापद्यते दिवि ॥ ३८
यो भ्रातरं पितृसमं ज्येष्ठं मूढ़ोऽवमन्यते ।
तेन दोषेण संप्रेत्य निरयं संप्रयच्छति ॥ ३९
पुंसाश्चात्मनिवेशेण पूज्यो भर्त्ता च सम्मतः ।
यानि दातरि लोकेऽस्मिन्नुपकारोऽपि गौरवम् ॥ ४०
ये नरा भर्त्तृपिण्डार्थं स्वान् प्राणान् सन्त्यजन्ति हि ।
तेषामेव परांल्लोकानुवाच भगवान् भृगुः ॥ ४१
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजान् गुरून् ।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥ ४२
अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
भोःशब्दपूर्व्वकञ्चैनमभिभाषेत धर्म्मवित् ॥ ४३
अभिवाद्यश्च पूर्व्वन्तु शिरसावधमर्म्मा च ।
ब्राह्मणक्षत्रियाद्यैश्च श्रीकामैः सादरं सदा ॥ ४४
नाभिवाद्यास्तु विप्राणां क्षत्रियाद्याः कथञ्चन ।
ज्ञानकर्म्मगुणोपेता यद्यप्येते बहुश्रुताः ॥ ४५

ब्राह्मणः सर्व्ववर्णानां स्वस्ति कुर्य्यादिति स्थितिः।
सवर्णेऽप्यसवर्णानां कार्य्यमेवाभिवादनम्॥ ४६
गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्व्वस्याभ्यागतो गुरुः॥ ४७
विद्या कर्म्म वयो बन्धुर्व्वित्तं भवति यस्य वै।
मान्यस्थानानि पञ्चाहुः पूर्व्वं पूर्व्वं गुरूणि च॥ ४८
पञ्चानां त्रिषु वर्णेषु भवेत्तु गुणवान् हि यः।
यत्रस्यात्सोऽत्रमानार्हः शूद्रोऽपि सभवेद् यदि॥ ४९
पिण्डादिभ्यो ब्राह्मणेभ्यः स्त्रियै राज्ञेऽस्य चक्षुषे।
वृद्धाय भारहीनाय रोगिणे दुर्ब्बलाय च॥ ५०
भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम्।
निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया॥ ५१
भवत्पूर्व्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः।
भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम्॥ ५२
मातरं वा स्वसारं वा मातुर्व्वा भगिनीं तथा।
भिक्षेत भिक्षां प्रथमं यातु नैनं विमानयेत्॥ ५३
सजातीयगृहेष्वेवं सार्व्ववर्णिकमेव वा।
भैक्षस्याचरणं प्रोक्तं पतितादिषु वर्ज्जितम्॥ ५४
वेदयज्ञाद्यहीनानां प्रशस्तानां स्वकर्म्मसु।
ब्रह्मचारी चरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम्॥ ५५
गुरोः कुले न भिक्षेत न ज्ञातिकुलवन्धुषु।
अभावेऽप्यथ गेहानां पूर्व्वं पूर्व्वं विवर्ज्जयेत्॥ ५६
सर्व्वं वापि चरेद्ग्रामं पूर्व्वोक्तानामसम्भवे।
नियम्य प्रयतो वाचं दिशस्त्वानवलोकयन्॥ ५७

समाहृत्य तु तद्भैक्षं यावदर्थमिहाज्ञया।
भुञ्जीत प्रयतो नित्यं वाग्यतो नान्यमानसः॥ ५८
भैक्षेण वर्त्तयेन्नित्यं कामनाशीर्भवेद्व्रती।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता॥ ५९
पूजयेदशनं नित्यमद्यादन्नमकुत्सयन्।
दृष्ट्वा हृष्येत् प्रसीदेच्च प्रतिनन्देच्च सर्व्वतः॥ ६०
अनारोग्यमनायुष्यमस्वर्ग्यं कुत्सभोजनम्।
अपुण्यं लोकविद्विष्टं तस्मात् तत् परिवर्ज्जयेत्॥ ६१
प्राङ्मुखोऽन्नानि भुञ्जीत दक्षिणमुख एव वा।
नाद्यादुदङ्मुखो नित्यं विधिपूर्व्वं सनातनं॥ ६२
प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत्।
शुचौ देशे समासीनोभुक्त्वान्ते द्विरुपस्पृशेत्॥ ६३
मण्डलं पूर्व्वतः कृत्वा तत्र स्थाप्याथ भोजयेत्।
स्वप्राणाहुतिपर्य्यन्तं मौनमेवं विधीयते॥ ६४

इत्यौशनसस्मृतौ प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः।

भुक्त्वा पीत्वा च स्नात्वा च तथा रथ्योपसर्पणे।
ओष्ठावलोमकौ स्पृष्ट्वा वासो विपरिधाय च॥ १
रेतोमूत्रपुरीषाणामुत्सर्गेणान्यभाषणे।
तथा चाध्ययनारम्भे कासश्वासागमे तथा॥ २
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः।
सन्ध्ययोरुभयोस्तद्वदाचान्ते चाचमेत् पुनः॥ ३

चण्डालम्लेच्छसम्भासे स्त्रीशूद्रोच्छिष्टभाषणे।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं वापि तथाविधम्॥ ४
अश्रुपाते तथाचामे अनृतस्य तथैव च।
भोजनान्ते सन्ध्ययोः स्नात्वा पीत्वा मूत्रपुरीषयोः॥ ५
आचान्तोऽप्याचमेत् स्पृष्ट्वा सकृत् सकृदथान्यतः।
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयत एव वा॥ ६
नृणामथात्मनः स्पर्शे नीवीं विपरिधाय च।
उपस्पृशेज्जलं शुद्धं तृणं वा भूमिमेव वा।
केशानाञ्चात्मनः स्पर्शे वाससां क्षालितस्य च॥ ७
अनुष्णाभिरफेनाभिरदुष्टाभिश्च सर्व्वशः।
शौचेप्सुः सुखमासीनः प्राङ्मुखो वाप्युदङ्मुखः॥ ८
शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥ ९
सोपानऽको जलस्थो वा नोष्णीषोवाचमेद्बुधः।
न चैव वर्षधाराभिर्न तिष्ठन् न हृतोदकैः॥ १०
नैकहस्तार्पितजलैर्विना शूद्रेण वा पुनः।
न पादुकासनस्थो वा बहिर्जानुरथापि वा॥ ११
न जल्पन् न हसन् प्रेक्षमाणश्च प्रह्व एव वा।
नावीक्षमाणाद्भिन्नोष्णाद्भिन्नफेनादथापि वा॥ १२
शूद्राशुचिकरैर्मुक्तैर्नक्षाराभिस्तथैव च।
न चैवाङ्गुलिभिः शब्दमकुर्व्वन् नान्यमानसः॥ १३
न वर्णरसदुष्टाभिर्नचैव प्रदरोदकैः।
न प्राणिजनिताभिर्व्वा न बहिः कालमेव वा॥ १४

हृद्गाभिः पूयते विप्रः कण्ठाभिः क्षत्रियः शुचि।
प्राशिताभिस्तथा वैश्यः स्त्री शूद्रः स्पर्शनन्ततः॥ १५
अङ्गुष्ठमूलान्तरतो रेखायां ब्रह्म उच्यते।
अन्तराङ्गुष्ठदेशिन्योः पितृणां तीर्थमुत्तमम्॥ १६
कनिष्ठो मूलतः पश्चात्प्राजापत्यं प्रचक्षते।
अङ्गुल्यग्रे स्मृतं दैवं तथैवार्षं प्रकीर्त्तितम्॥ १७
मूले स्याद्दैवमार्षं स्यादाग्नेयं मध्यतः स्मृतम्।
तदेवं सौमिकं तीर्थमेतत्ज्ञात्वा न मुह्यति॥ १८
ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत्।
कायेन वा दैवतेन न तु पित्रेण वा द्विजाः॥ १९
त्रि प्राश्नीयादपः पूर्व्वं ब्राह्मणः प्रयतः स्मृतः।
संवृत्ताङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत्॥ २०
अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नेत्रद्वयं ततः।
तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटं ततः॥ २१
कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत्।
सर्व्वासामथ योगेन हृदयन्तु तलेन वा॥ २२
संस्पृशेद्वै शिरस्तद्वदङ्गुष्ठेनाथवा द्वयम्।
त्रिः प्राश्नीयादेवमेव प्रीतास्तेनास्य देवताः॥ २३
ब्रह्माविष्णुमहेशश्च सम्भवन्त्यनुशुश्रुमः।
गङ्गा च यमुना चैव प्रीयते परिमार्ज्जनात्॥ २४
प्रसंस्पर्शाल्लोचनयोः प्रीयते शशिभास्करौ।
नासत्यौ चैव प्रीयेते स्पृष्टे नासापुटद्वये॥ २५
कर्णयोः स्पृष्टयोस्तद्वत् प्रीयेते चानलानिलौ।
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्व्वदेवताः॥ २६

मूर्द्धि संस्पर्शनादेव प्रीतस्तु पुरुषो भवेत्।
नोच्छिष्टं कुर्व्वते मुख्याविप्रुषोऽङ्गं नयन्ति याः॥ २७
अन्तवद्दन्तसंलिप्तजिह्वास्पर्शोऽशुचिर्भवेत्।
स्पृशन्ति विन्दवः पादौ य आचामयतः परम्॥ २८
भूमिगास्तु समा ज्ञेयाः न तैरप्रयतो भवेत्।
मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे॥ २०
फलमूलेक्षुदण्डे च न दोषः उशनाब्रवीत्।
प्रचरंश्चान्नपानेषु यदुच्छिष्टो भवेद्द्विजः॥ ३०
भूमौ निक्षिप्य तद्द्रव्यमाचम्य प्रोक्षयेत्तु यत्।
तैजसं वै समादाय भवेदुच्छेषणात्ततः॥ ३१
अनिधाय च तद्द्रव्यमाचान्तः शुचितामियात्।
वस्त्रादीनां विकल्पत्वात् स्पृष्ट्वा चेदेवमेव हि॥ ३२
आरभ्यानुदके रात्रौ चौरो वाप्याकुले पथि।
कृत्वा मूत्रपुरीषं वा द्रव्यहस्तेन दुष्यति॥ ३३
निधाय दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः।
अथ कुर्य्यात् शकृन्मूत्रे रात्रौ चेद्दक्षिणमुखः॥ ३४
अन्तर्द्धाय महीं काष्ठैः पर्णैर्लोष्ठतृणेन वा।
प्रतिश्चौनशिराः कुर्य्यात् शकृन्मूत्रविसर्ज्जने॥ ३५
छायाकूपनदीगोष्टे चैत्याम्भः पथि भस्मसु।
अग्नौ चैव श्मशाने च विण्मूत्रे न समाचरेत्॥ ३६
न गोमये न कृष्टे वा न गोष्ठे नैव शाद्वले।
न तिष्ठन् वा न निर्व्वासा न च पर्व्वतमस्तके॥ ३७
न जीर्णदेवायतने न वल्मीके कदाचन।
न ससत्त्वेषु गर्त्तेषु न च गच्छन् समाचरेत्॥ ३८

तुषाङ्गारकपालेषु राजमार्गे तथैव च ।
न क्षेत्रे न विले चापि न तीर्थे च चतुष्पथे ॥ ३९
नोद्यानोपसमीपे वा नोषरे न पराशुचौ ।
न सोपानत्कपादो वा च्छत्री वानान्तरीक्षके ॥ ४०
न चैवाभिमुखे स्त्रीणां गुरुब्राह्मणयोर्गवाम् ।
न देवदेवालययोर्नापामपि कदाचन ॥ ४१
नदीज्योतींषि वीक्षित्वा तद्वाद्याभिमुखोऽपि वा ।
प्रत्यादित्यं प्रत्यनिलं प्रतिसोमं तथैव च ॥ ४२
आहृत्य मृत्तिकां कुर्य्यान्लेपगन्धापकर्षणम् ।
कुर्य्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥ ४३
नाहरेन्मृत्तिकां विप्रः पांशुलां न च कर्दमात् ।
न मार्गान्नोषराद्देशाच्छौचशिष्टां परस्य च ॥ ४४
न देवायतनात् कूपाद्ग्रामान्न तु कदाचन ।
उपस्पृशेत्ततो नित्यं पूर्व्वोक्तेन विधानतः ॥ ४५
भारव्याहृतिगायत्र्या वर्णनामैरणैः क्रमात् ।
तन्मन्त्रितं पिवेद्‌यस्तु मन्त्राचमनमीरितम् ॥ ४६
गायत्र्याचमनेनाथ स्तुत्याचमनमीरितम् ॥ ४७

इत्यौशनसस्मृतौ द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

एवं देहादिभिर्युक्तः शौचाचारसमन्वितः ।
आहृत्याध्ययनं कुर्य्याद्वीक्षमाणो गुरोर्मुखम् ॥ १

नित्यमुद्यतपाणिश्च सन्ध्याचारसमन्वितः।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः॥ २
प्रतिश्रवणसम्भाषे शयानो न समाचरेत्।
आसीनो न च भुञ्जानो न तिष्ठन् पराङ्मुखः॥ ३
नीचं शय्यासनञ्चास्य सर्व्वदा गुरुसन्निधौ।
गुरोस्तु चक्षुर्व्विषये न यथेच्छासनो भवेत्॥ ४
नोदाहरेदस्य नाम परोक्षमपि केवलम्।
न चैवास्यानुकुर्व्वीत गतिभाषणचेष्टितम्॥ ५
गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं परितोऽन्यतः॥ ६
दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः।
न चैवास्योत्तरं ब्रूयान्न तेनासीत सन्निधौ॥ ७
उदकुम्भं कुशान् पुष्पं समिधोऽप्याहरेत् सदा।
मार्ज्जनं लेपनं नित्यमङ्गानां वै समाचरेत्॥ ८
नास्य निर्म्माल्यशयनं पादुकोपानहावपि।
आक्रामेदासनं तस्य च्छायामपि कदाचन॥ ९
दन्तकाष्ठादिकं लब्ध्वा न चास्य विनिवेदयेत्।
अनापृच्छ्य न गन्तव्यं न त्वप्रियहिते रतः॥ १०
न पादौ स्थापयेदस्य सन्निधाने कदाचन।
जृम्भितं हसितञ्चैव चवकं प्रावरं तथा॥ ११
वर्ज्जयेत् सन्निधौ नित्यं नखस्फोटनमेव च।
यथाकालमधीयीत यावन्न विमना गुरुः॥ १२
आसने शयने याने न च तिष्ठेत् कदाचन।
धावन्तमनुधावेत गच्छन्तमनुगच्छति॥ १३

गजोष्ट्रयानप्रासादप्रस्तर शकटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलतलेषु च ॥ १४
जितेन्द्रियः स्यात् सततं वश्यात्माक्रोधनः शुचिः ।
प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥ १५
गन्धमाल्यंरसं कन्यां सूक्ष्मप्राणिविहिंसनम् ।
अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ॥ १६
कामं क्रोधं भयं निद्रां गीतवादित्रनर्त्तनम् ।
द्यूतं जनपरीवादं स्त्रीप्रेक्षालापनं तथा ॥ १७
परोपतापपैशुन्यं प्रयत्नेन विवर्ज्जयेत् ।
उदकुम्भं सुमनसो गोमक्षन्मृत्तिकान् कुशान् ॥ १८
आहरेद्‌यावदर्थानि भैक्षञ्चाहरहश्चरेत् ।
तथैव लवणं सर्व्वं भक्ष्यं पर्य्युषितं न यत् ॥ १९
अनन्यदर्शी सततं भवेन्नीतादिनिःस्पृहः ।
नादर्शञ्चैव वीक्षेत न चरेद्दन्तधावनम् ॥ २०
एकान्तमशुचिः स्त्रीभिः शूद्राद्यैरभिभाषणम् ।
गुरूच्छिष्टं भेषजार्थं न प्रभूञ्जीत कामतः ॥ २१
मलापकर्षणं स्नानं नाचरेद्‌ वै कदाचन ।
न चातिसृष्टो गुरुणा स्वान् गुरुनभिवादयेत् ॥ २२
विद्यागुरुष्वेतदेव नित्यवृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु वा धर्म्मं हितञ्चोपदिशत्स्वयम् ॥ २३
श्रेयःसु गुरुवद्‌वृत्तिनित्यमेवं समाचरेत् ।
गुरुपत्नीषु पुत्रेषु गुरोश्चैव स्वबन्धुषु ॥ २४
बालः समानजन्मा वा शिष्यो वा यज्ञकर्मसु ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥ २५

उत्सादनं वै गात्राणां स्नानञ्चोच्छिष्टभोजने।
न कुर्य्याद्गुरुपुत्रस्य पादयोः शौचमेव च ॥ २६
गुरुवत् प्रतिपूज्याश्च सवर्णा गुरुयोषितः।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ २७
अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥ २८
गुरुपत्नी च युवती नाभिवाद्येह पादयोः।
कुर्व्वीत वन्दनं भूम्यामसावहमिति ब्रुवन् ॥ २९
विप्रस्य पादग्रहणमन्वहञ्चाभिवादनम।
गुरुदारेषु कुर्व्वीत सदा धर्म्ममनुस्मरन् ॥ ३०
मातृष्वसा मातुलानी श्वश्रूश्चापि पितृष्वसा।
सम्पूज्या गुरुपत्नी च समस्ता गुरुभार्य्या च ॥ ३१
भ्रातृभार्य्योपसंग्राह्या ज्ञातिसम्बन्धियोषितः।
पितुर्भगिन्या मातुश्च जायायाञ्च स्वसर्य्यपि ॥ ३२
मातृवद्वृत्तिमातिष्ठेन्माता तेभ्यो गरीयसी।
एवमाचारसम्पन्नमात्मवन्तं सदाहितम ॥ ३३
वेदं धर्म्मं पुराणञ्च तथा तत्त्वानि नित्यशः।
संवत्सरोषिते शिष्ये गुरुर्ज्ञानं विनिर्द्दिशेत् ॥ ३४
हरति दुष्कृतं तस्य शिष्यस्य वत्सरे गुरुः।
आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः ॥ ३५
आप्तः शक्तोऽर्थदः साधुः सोऽध्याप्या दश धर्मतः।
कृतज्ञश्च तथाद्रोही मेधावी शुभकृन्नरः ॥ ३६
प्राप्य विप्रोऽप्यविधिवत् षड़ध्याप्या द्विजोत्तमैः।
एतेषु ब्रह्मणो दानमन्यत्र न यथोदितम् ॥ ३७

पूराकल्पे समुत्पन्ना भूर्भूवःस्वर्गनामतः ।
महाव्याहृतयस्तिस्रः सर्व्वाशुभनिवर्हणाः ॥ ५०
प्रधानं पुरुषः कालो ब्रह्मविष्णुमहेश्वराः ।
सत्त्वं रजस्तमस्तिस्रः काला व्याहृतयस्त्रयः ॥ ५१
ओङ्कारस्तत् परं ब्रह्म गायत्री स्यात्तदक्षरम् ।
एवं मन्त्रो महायोगसाक्षात्सार उदाहृतः ॥ ५२
योऽधीतेऽहन्यहन्येतां गायत्रीं वेदमातरम् ।
विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥ ५३
न गायत्र्याः परं जप्यमेतद्विज्ञानमुच्यते ।
श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ॥ ५४
आषाढ्यां प्रौष्ठपद्यां वा वेदोपक्रमणं स्मृतम् ।
उत्सृज्य ग्रामनगरं मासान् विप्रोऽर्द्धपञ्चमान् ॥ ५५
अधीयीत शुचौ देशे ब्रह्मचारी समाहितः ।
पुष्ये तु छन्दसां कुर्य्याद्वहिरुत्सर्ज्जनं द्विजाः ॥ ५६
माघे वा मासि सम्प्राप्ते पूर्व्वाह्णे प्रथमेऽहनि ।
छन्दांस्यूर्द्ध्वमधीयीत शुक्लपक्षे तु वै द्विजाः ॥ ५७
वेदाङ्गानि पुराणं वा कृष्णपक्षे तु मानवः ।
इमान्नित्यमनध्यायानधीयानो विसर्ज्जयेत् ॥ ५८
अध्यापनञ्च कुर्व्वाणः अध्येष्यन्नपि यत्नतः ।
कर्णश्रवेऽनिले रात्रौ दिवा पांशुसमूहने ॥ ५९
विद्युत्स्तनितवर्षासु महोल्कानाञ्च पातने ।
आकालिकमनध्यायमेतेष्वेव प्रजापतिः ॥ ६०
एतांस्त्वभ्युदितान् विद्याद्यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥ ६१

निर्घाते वातचलने ज्योतिषाञ्चोपसर्पणे ।
एतानाकालिकान् विद्यादनध्यायानृतावपि ॥ ६२
प्रादुष्कृतेष्वग्निषु च विद्युत्स्तनितनिस्वने ।
मद्या हि स्यादनध्यायमनृतौ मुनिरब्रवीत् ॥ ६३
नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च ।
कर्म्मनैपुण्यकामानां पूतिगन्धे च नित्यशः ॥ ६४
अन्त्यानां सङ्गते ग्रामे वृषलस्य च सन्निधौ ।
अनध्यायो रूद्यमाने समवाये जनस्य च ॥ ६५
उदके मध्यरात्रौ च विण्मूत्रे च विसर्ज्जयेत् ।
उच्छिष्टश्राद्धभुक् चैव मनसा न विचिन्तयेत् ॥ ६६
प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् ।
त्र्यहं न कीर्त्तयेद् ब्रह्म राज्ञो राहोश्च सूतके ॥ ६७
यावदेकानुदिष्टस्य लेपो गन्धश्च तिष्ठति ।
विप्रस्य विदुषो देहे तावद् ब्रह्म न कीर्त्तयेत् ॥ ६८
शयानः प्रौढ़पादश्च कृत्वा वै वावसक्थिकाम् ।
नाधीयीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥ ६९
नीहारैर्व्वाणशब्दैश्च सन्ध्ययोरुभयोरपि ।
अमावस्यां चतुर्द्दश्यां पौर्णमास्यष्टमीषु च ॥ ७०
उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ।
अष्टकासु न कुर्व्वीत ऋत्वन्तासु न रात्रिषु ॥ ७१
मार्गशीर्षे तथा पौषे माघे मासि तथैव च ।
तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे च सूरिभिः ॥ ७२
श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च ।
कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥ ७३

समानविद्येऽनुमृते तथा सब्रह्मचारिणि ।
आचार्य्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम् ॥ ७४
छिद्रष्वतेषु विप्राणामनध्यायाः प्रकीर्त्तिताः ।
हिंसन्ति राक्षसास्तां च तस्मादेतान् विवर्ज्जयेत् ॥ ७५
नैत्यके नास्त्यनध्यायः सन्ध्योपासने एव च ।
उपाकर्म्मणि कर्म्मान्ते होममन्त्रेषु चैव हि ॥ ७६
एकामृचमथवैकं वा यजु सामाथवा पुनः ।
अष्टकायां स्वधीयीत मारुते चापि वायदि ॥ ७७
अनध्यायो नचाङ्गेषु नेतिहासपुराणयोः ।
न धर्म्मशास्त्रेष्वन्येषु पर्व्वण्यतानि वर्ज्जयेत् ॥ ७८
एष धर्म्मः समासेन कीर्त्तितो ब्रह्मचारिणः ।
ब्राह्मणाभिहितः पूर्व्वमृषीणां भावितात्मनाम् ॥ ७९
योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजः ।
स वै मूढ़ो न सम्भाष्यो वेदवाह्यो द्विजातिभिः ॥ ८०
न वेदपाठमात्रेण सन्तुष्टो वै द्विजोत्तमः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥ ८१
योऽधीत्य विधिवद्वेदं वेदान्तं न विचारयेत् ।
स सान्वयः शूद्रकल्पः स पाद्यं न प्रपद्यते ॥ ८२
यदि वात्यन्तिकं वासं कर्त्तुमिच्छति वै गुरोः ।
युक्तः परिचरेदेनमा शरीरविमोचणात् ॥ ८३
गत्वा वनं वा विधिवज्जुहुयाज्जातवेदसम् ।
अधीयीत सदा नित्यं ब्रह्मविद्यां समाहितः ॥ ८४
सावित्रीं शतरुद्रीयं वेदानाञ्च विशेषतः ।
अभ्यसेत् सततं वेदं भस्मस्नानपरायणः ॥ ८५

वेदं वेदौ तथा वेदान् वेदान् वै चतुरो द्विजा ।
अधीत्य विधिमस्यार्थं ततः स्नायाद्द्विजोत्तमः ॥ ८६
वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः ।
अकुर्व्वाणः पतत्याशु निरयानतिभीषणान् । ८७
अभ्यसेत् प्रयतो वेदं महायज्ञान् न हापयेत् ।
कुर्य्याद् गृह्याणि कर्म्माणि सन्ध्योपासनमेव च ॥ ८८
नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतकः ।
सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते ॥ ८९
सन्ध्यास्नानरतो नित्यं ब्रह्मयज्ञपरायणः ।
अनसुयो मृदुर्दान्तो गृहस्थोऽप्यतिवर्त्तते ॥ ९०
यः स्वयं नियतो भूत्वा धर्म्मपाठं पठेद्द्विजः ।
अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते ॥ ९१
प्रातःकृत्यं समाप्याथ वैश्वदेवपुरःसरम् ।
मध्याह्ने भोजयेद्विप्रान् सम्यग्भूतात्मभावनः ॥ ९२
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्य्याभिमुख एव वा ।
आसीनस्त्वासने शुद्धे भूमौ पादौ निधापयेत् ॥ ९३
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥ ९४
पश्चात् स भोजनं कुर्य्याद्भूमौ वा तन्निधापयेत् ।
उपवासेन तत्तुल्यमित्येवमुशनाब्रवीत् ॥ ९५
उपलिप्य शुचौ देशे पादौ प्रक्षाल्य वै करौ ।
आचान्तोऽक्रोधनो नक्तं पश्चात्तु भोजनञ्चरेत् ॥ ९६
इह व्याहृतिभिस्त्वन्नं परिधायोदकेन तु ।
परिषेचनमन्त्रेण परिषिच्य ततः परम ॥ ९७

चित्रगुप्तबलिं दत्त्वा तदन्नं परिषिच्य च।
अमृतोपस्तरणमसीत्यापोशनक्रियां चरेत्॥ ९८
स्वाहाप्रणवसंयुक्तां प्राणायेत्याहुतिं ततः।
अपानायाहुतिं हुत्वा व्यानाय तदनन्तरम्॥ ९९
उदानाय ततः कुर्य्यात् समानायेति पञ्चमम्।
विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः॥ १००
शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम्।
ध्यात्वा तन्मानसे देवमात्मानं वै प्रजापतिम्॥ १०१
अमृतोपिधानमसीत्युपरिष्टादपः पिवेत्।
आचान्तः पुनराचामिदयं गौरिति मन्त्रतः॥ १०२
त्रिपदां वा त्रिरावृत्य सर्व्वपापप्रणाशनीम्।
प्राणानां ग्रन्थिरसीत्यालभेद्धृदयं ततः॥ १०३
आचम्याङ्गुष्ठमानीय पादाङ्गुष्ठेन दक्षिणम्।
निःस्रावयेद्धस्तजलमूर्द्ध्वहस्तः समाहितः॥ १०४
हुत्वानुमन्त्रणं कुर्य्यात् स्वधायामिति मन्त्रतः।
प्रोक्षणेत् स्वमात्मानं यो जपेद्ब्रह्मणेति च॥ १०५
सर्व्वेषामेव यागानामात्मयागः परः स्मृतः।
अथ श्राद्धममावस्याप्राप्तं कार्य्यं द्विजोत्तमैः॥ १०६
पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते।
अपराह्णे द्विजातीनां प्रशस्तेनामिषेण तु॥ १०७
प्रतिपत्प्रभृतिह्यन्यास्तिथयः कृष्णपक्षके।
चतुर्द्दशीं वर्ज्जयित्वा पञ्चमीं ह्युत्तरोत्तराम्॥ १०८
अमावस्याष्टकास्तिस्रः पौर्णमास्यादिषु त्रिषु।
तिस्रश्चाप्यष्टकाः पुण्या मासि पञ्चदशी तथा॥ १०९

त्रयोदशी मघा कृष्णा वर्षासु च विशेषतः ।
नैमित्तिकन्तु कर्त्तव्यं दिवसे चन्द्रसूर्य्ययोः ॥ ११०
बालकानाञ्च मरणे नारकी स्यात्ततोऽन्यथा ।
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु ॥ १११
अयने विषुवे चैव व्यतीपाते त्वनन्तकम् ।
संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि ॥ ११२
नक्षत्रतिथिवारेषु कार्य्यं काम्यं विशेषतः ।
स्वर्गन्तु लभते कृत्वा कृत्तिकासु द्विजोत्तमाः ॥ ११३
द्रव्यब्राह्मणसम्पत्तौ न कालं नियमं ततः ।
कर्म्मारम्भेषु सर्व्वेषु कुर्य्यादभ्युदयं ततः ॥ ११४
पुत्रजन्मादिषु श्राद्धं पार्व्वणं पार्व्वणं स्मृतम् ।
अहन्यहनि नित्यं स्यात् काम्यं नैमित्तिकं पुनः ॥ ११५
सन्निकृष्टमतिक्रम्य श्रोत्रियं यः प्रयच्छति ।
स तेन कर्म्मणा पापी दहत्यासप्तमं कुलम् ॥ ११६
यदि स्यादधिको विप्रः शीलविद्यादिभिः स्वयम् ।
तस्मै यत्नेन दातव्यमतिक्रम्यापिसन्निधिम् ॥ ११७
अपूपञ्च हिरण्यञ्च गामश्वं पृथिवीं तिलान् ।
अविद्वान् प्रतिगृह्णानो भस्मीभवति काष्ठवत् ॥ ११८
या समारोहणं कुर्य्यात् भर्त्तृचित्यां पतिव्रता ।
तन्मृताहनि सम्प्राप्ते पृथक् पिण्डं नियोजयेत् ॥ ११९
धर्म्मपिण्डोदकं श्राद्धं पार्व्वणं नग्नसंज्ञकम् ।
अस्थिसञ्चयनं कर्म्म दशाहभवनं तथा ॥ १२०
षोडशं दशाहमुत्कर्षे शेषस्य यदि वा भवेत् ।
पिण्डोदकं नवश्राद्धं पुनः कार्य्यं यथाविधि ॥ १२१

अथास्थिसञ्चयं कर्म्म दशाहमूर्द्धभाग् भवेत्।
नष्टे वापहृतेऽस्थीनि दाहयेद्यदि वा पुनः॥ १२२
कुर्य्यादहरहः श्राद्धं प्रमीतपितृको द्विजः।
साग्निकोऽनग्निको वापि तीर्थेष्वेवं विशेषतः॥ १२३
उत्तानं वा विवर्त्तं वा पितृपात्रं यदा भवेत्।
अभोज्यं तद्भवेदन्नं क्रुद्धैः पितृगणैश्च तैः॥ १२४
अन्नहीनं क्रियाहीनं मन्त्रहीनन्तु यद्भवेत्।
सर्व्वमच्छिद्रमित्युक्त्वा ततो यत्नेन भोजयेत्॥ १२५
एकोद्दिष्टन्तु विज्ञेयं वृद्धिश्राद्धन्तु पार्व्वणम्।
एतत् पञ्चविधं श्राद्धं भृगुपुत्रेण सूचितम्॥ १२६
यात्रायां षष्ठमाख्यातं तत् प्रयत्नेन पावनम्।
शुद्धये सप्तमं श्राद्धं ब्रह्मणा परिकीर्त्तितम्॥ १२७
दैविकञ्चाष्टमं श्राद्धं यत् कृत्वा मुच्यते भयात्।
सन्ध्यारात्रौ न कर्त्तव्यमहोरात्रमदर्शनात्॥ १२८
देशानान्तु विशेषेण भवेत् पुण्यमनन्तकम्॥ १२९
गयायामक्षयं श्राद्धं प्रयागे मरणादिषु।
गायन्ति गाथां ते सर्व्वे कीर्त्तयन्ति मनीषिणः॥ १३०
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः।
तेषान्तु समवेतानां यद्येकोऽपि गयां व्रजेत्॥ १३१
गयां प्राप्यानुषङ्गेण यदि श्राद्धं समाचरेत्।
तारिताः पितरस्तेन स याति परमां गतिम्॥ १३२
वाराहपर्व्वते चैव गयाञ्चैव विशेषतः।
एवमादिष्वतीर्थेषु तुष्यन्ति पितरस्तदा॥ १३३

व्रीहिभिश्च यवैर्म्माषैरद्भिर्मूलफलैर्न वा ।
श्यामाकैश्च तु वै शाकैर्णीवारैश्च प्रियङ्गुभिः ॥ १३४

गोधूमैश्च तिलैर्म्मुद्गैर्म्माषैः प्रीणयते पितॄन् ।
मृष्टान् फलरसानिक्षून् मृद्वीकान् शस्यदाड़िमान् ॥ १३५

विदार्य्याश्च करण्डाश्च श्राद्धकाले प्रदापयेत् ।
लाजान् मधुयुतान् दद्यादिक्षून् शर्करया सह ॥ १३६

दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटकशेरुकान् ।
द्वौ मासौ मत्स्यमांसेन त्रिमासान् हारिणेन च ॥ १३७

औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ।
षण्मासांश्छागमांसेन रौरवेण नवैव तु ॥ १३८

दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशोर्णबकयोर्मांसैर्म्मासानेकादशैव तु ॥ १३९

संवत्सरन्तु गव्येन पयसा पायसेन च ।
वार्द्धीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ १४०

कालशाकं महाशल्कां खड्गलोहामिषं मधु ।
अनन्तान्येव कल्पन्ते मूलान्यन्यानि सर्व्वशः ॥ १४१

क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वै द्विजः ।
दद्याच्छ्राद्धे प्रयत्नेन दत्तस्याक्षयमुच्यते ॥ १४२

पिप्पलीक्रमुकञ्चैव तथा चैव मसूरकम् ।
कश्मलालाबुवार्त्ताकान् मन्थनं सारसं तथा ॥ १४३

कूटञ्च भद्रमूलञ्च तण्डूलीयकमेव च ।
राजमाषांस्तथा क्षीरं महिषञ्च विवर्ज्जयेत् ॥ १४४

कोद्रवान् कोविदारांश्च स्थलपाक्यामरीस्तथा।
वर्ज्जयेत् सर्व्वयत्नेन श्राद्धकाले द्विजोत्तमः॥ १४५

इत्यौशनसस्मृतौ तृतीयोऽध्यायः॥ ३॥

---

## चतुर्थोऽध्यायः।

स्नात्वा यथोक्तं सन्तर्प्य पितृदेवानृषींस्तथा।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यात् सौम्यमनाः शुचिः॥ १
पूर्व्वमेव निरीक्षेत ब्राह्मणान् वेदपारगान्।
तीर्थं तद्धव्यकव्यानां प्रदाने चातिथिः स्मृतः॥ २
ये सोमपाननिरता धर्म्मज्ञाः सत्यवादिनः।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः॥ ३
पञ्चाग्निरप्यधीयानो यजुर्व्वेदविदोऽपि च।
वह्वृचस्तु सुपर्णश्च त्रिमधुर्व्वाथ वा भवेत्॥ ४
त्रिणाचिकेतच्छन्दो वै ज्येष्ठसामगणोऽपि वा।
अथर्व्वशिरसोऽध्येत रुद्राध्यायी विशेषतः॥ ५
अग्निहोत्रपरो विद्वान् पायविच्च षडङ्गवित्।
गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः॥ ६
अहिंसोपरता नित्यमप्रतिग्राहिणस्तथा।
सत्त्रिणो दाननिरता ब्राह्मणाः पङ्क्तिपावनाः॥ ७
असमानप्रवरगा असगोत्रास्तथैव च।
असम्बन्धश्च विज्ञेयो ब्राह्मणः पङ्क्तिपावनः॥ ८
भोजयेद्योगिनं पूर्व्वं तत्त्वज्ञानरतं परम्।
अलाभे नैष्ठिकं दान्तमुपकुर्व्वाणकन्तु वा॥ ९

तदलाभे गृहस्थन्तु मुमुक्षुं सङ्गवर्ज्जितं ।
सर्व्वालाभसाधकं वा गृहस्थं न विभोजयेत् ॥ १०
प्रकृतेर्गुणतत्त्वज्ञं योऽश्नातीह यतिं भवेत् ।
फलं वेदविदां तस्य सहस्रादतिरिच्यते ॥ ११
तस्माद्यत्नेन योगिन्द्रमीश्वरज्ञानतत्परम् ।
भोजयेद्धव्यकव्येषु अलाभादिह च द्विजान् ॥ १२
एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयस्तदा सद्भिरनुष्ठितः ॥ १३
मातामहं मातुलञ्च स्वस्रेयं श्वशुरं गुरुम् ।
दौहित्रं विवुधं सर्व्वमग्निकल्पांश्च भोजयेत् ॥ १४
न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः ।
पैशाचदक्षिणाहीनैर्व्वामुत्र फलसम्पदः ॥ १५
काम्यं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपित्वरिम् ।
द्विषतां हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥ १६
तथानु चेद्धविर्द्दत्त्वा न दाता लभते फलम् ।
यावतो ग्रसते पिण्डान् हव्यकव्येष्व मन्त्रवित् ॥ १७
ततो हि ग्रसते प्रेत्य दीप्तान् शूलानधोमुखान् ।
अथ विद्यानुकूले हि युक्तांश्च स व्रताथवा ॥ १८
यत्रैते भुञ्जते हव्यं तद्भवेदासुरं द्विजाः ।
यस्य वेदश्च वेदी च विच्छिद्येत त्रिपूरुषम् ॥ १९
स वै दुर्ब्राह्मणो ज्ञेयः श्राद्धादौ न कदाचन ।
शूद्रप्रेष्योभृतो राज्ञो वृषलो ग्रामयाजकः ॥ २०
वधवन्धोपजीवी च षड़ेते ब्रह्मबन्धवः ।
दत्त्वा तु वेदानत्यर्थं पतितान्मनुरब्रवीत् ॥ २१

वेदविक्रयिणश्चैते श्राद्धादिषु विगर्हिताः।
श्रुतिविक्रयिणो यत्र परपूर्व्वाः समुद्रगाः॥ २२
असमानान् याजयन्ति पतितास्ते प्रकीर्त्तिताः।
असंस्तुताध्यापका ये भृतकान् पाठयन्ति ये॥ २३
अधीयीत तथा वेदान् भृतकास्ते प्रकीर्त्तिताः।
वृद्धश्रामणकनिर्गूढ़ाः पञ्चरात्रविदोजिनाः॥ २४
कापालिकाः पाशुपताः पाषण्डाश्चैव तद्विधाः।
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः॥ २५
न तस्य तद्भवेच्छ्राद्धं प्रेत्यापि हि अफलप्रदाः।
अनाश्रमी यो द्विजः स्यादाश्रमी स्यान्निरर्थकः॥ २६
मिथ्याश्रम्या च विप्रेन्द्रा विज्ञेयाः पङ्क्तिदूषकाः।
दुश्चर्म्मी कुनखी कुष्ठी श्वित्री च श्यावदन्तकः॥ २७
क्रूरो वाणिजकश्चैव स्तेनः क्लीवोऽथ नास्तिकः।
मद्यपो वृषलीसक्तो वीरहा दिधियूपतिः॥ २८
आगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः।
परिवेत्ता तथा हिंस्रः परिवित्तिर्निराकृतिः॥ २९
पौनर्भवः कुसीदी च तथा नक्षत्रदर्शकः।
गीतवादित्रशीलश्च व्याधितः काण एव च॥ ३०
हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णी तथैव च।
कन्यादूषी कुण्डगोलौ अभिशस्तोऽथ देवलः॥ ३१
मित्रध्रुक् पिशुनश्चैव नित्यं भार्य्या निकृन्तनः।
मातापितृगुरुत्यागी दारत्यागी तथैव च॥ ३२
अनपत्यः कूटसाक्षी याचको रोगजीवकः।
समुद्रयायी कृतघ्ना रथ्यासमयभेदकः॥ ३३

वेदनिन्दारतश्चैव देवनिन्दारतस्तथा।
द्विजनिन्दारतश्चैव ते वर्ज्ज्याः श्राद्धकर्म्मसु॥ २४
कृतघ्नः पिशुनः क्रूरो नास्तिको वेदनिन्दकः।
मित्रघ्न पारदार्य्यश्च मिथ्यापण्डितदूषकः॥ २५
बहुनात्र किमुक्तेन विहितान्येव कुर्व्वते।
निन्दितान्याचरन्ते ते वर्ज्ज्याः श्राद्धे प्रयत्नतः॥ २६
इत्यौशनसस्मृतौ चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

गोमयेनोदकैः पूर्व्वं शोधयित्वा समाहितः।
सन्निपात्य द्विजान् सर्व्वान् साधुभिः सन्निमन्त्रयेत्॥ १
श्वो भविष्यति मे श्राद्धं पूर्व्वेद्युरभिवच्यति।
असम्भवे परेद्युर्व्वा यथोक्तैर्लक्षणैर्युतम्॥ २
तस्य ते पितरः श्रुत्वा श्राद्धकाले उपस्थिते।
अन्योन्यमनसा ध्यात्वा सम्पतन्ति मनोजवाः॥ ३
ब्राह्मणान्ते समायान्ति पितरो ह्यन्तरिक्षगाः।
वायुभूताश्च तिष्ठन्ति भुक्त्वा यान्ति परां गतिम्॥ ४
आमन्त्रिताश्च ये विप्राः श्राद्धकाले उपस्थिते।
वसेरन् नियताः सर्व्वे ब्रह्मचर्य्यपरायणाः॥ ५
अक्रोधनोऽत्वरो यत्र सत्यवादी समाहितः।
भयमैथुनमध्वानं श्राद्धभुग्वर्ज्जयेज्जपम॥ ६

आमन्त्रितो ब्राह्मणो वै योऽन्यस्मै कुरुते चणम्।
आमन्त्रयित्वा यो मोहादन्यं वा मन्त्रयेद् द्विजः।
स तस्मादधिकः पापी विष्ठाकोटौ हि जायते॥ ७
श्राद्धे निमन्त्रितो विप्रो मैथुनं योऽधिगच्छति।
ब्रह्महत्यामवाप्नोति तिर्य्यग्योनिषु जायते॥ ८
निमन्त्रितश्च यो विप्रो ह्यध्वानं याति दुर्म्मतिः।
भवन्ति पितरस्तस्य तन्मासं पांशुभोजनाः॥ ९
निमन्त्रितश्च यः श्राद्धे प्रकुर्य्यात् कलहं द्विजः।
भवन्ति तस्य तन्मासं पितरो मलभोजनाः॥ १०
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद् द्विजः।
अक्रोधनः शौचपरः कर्त्ता चैव जितेन्द्रियः॥ ११
शोभते दक्षिणां गत्वा दिशं दर्भां समाहितः।
समूलान्नाहरेद्वारि दक्षिणाग्रां सुनिर्म्मलां॥ १२
दक्षिणाप्रवणं स्निग्धं विभक्तशुभलक्षणम्।
शुचिदेशं विविक्तञ्च गोमयेनोपलेपयेत्॥ १३
नदीतीरेषु तीर्थेषु स्वभूमौ गिरिसानुषु।
विविक्तेषु च तुष्यन्ति दत्तेन पितरस्तथा॥ १४
परस्य भूमिभागे तु पितॄणां वै न निर्व्वपेत्।
स्वामित्वात् स विहन्येत मोहाद्यत् क्रियते नरैः॥ १५
अटव्यः पर्व्वताः पुण्यास्तीर्थान्यायतनानि च।
सर्व्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रहः॥ १६
तिलांश्चावकिरेत्तत्र सर्व्वतो बन्धयेद् द्विजः।
असुरोपहतं सर्व्वं तिलैः शुध्यत्यजेन वा॥ १७

ततोऽन्नं वहुसंस्कारं नैकव्यञ्जनमव्ययम् ।
चोष्यं पेयं समृद्धञ्च यथाशक्त्युपकल्पयेत् ॥ १८

ततो निवृत्ते मध्याह्ने लुप्तलोमनखान् द्विजान् ।
अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥ १९

तैलमभ्यञ्जनं स्नानं स्नानीयञ्च पृथग्विधम् ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेवन्तु पूर्व्वकम् ॥ २०

तत्र स्नात्वा निवृत्तेभ्यः प्रत्युत्थानकृताञ्जलिः ।
पाद्यमाचमनीयञ्च सम्प्रयच्छेद्यथाक्रमम् ॥ २१

ये चात्र विवसेरन् वै विप्राः पूर्व्वं निमन्त्रिताः ।
प्राङ्मुखान्यासनान्येषां सदर्भोपहितानि च ॥ २२

दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ।
तेषुपवेशयेदेतान् ब्राह्मणान् देवकल्पकान् ।
आस्यतामिति सङ्कल्प्य त्वासीरंस्ते पृथक् पृथक् ॥ २३

द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रयश्चोदङ्मुखास्तथा ।
एकैकं वा भवेत्तत्र एवं मातामहेष्वपि ॥ २४

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् ।
पञ्चैतान् विस्तरोऽन्ति तस्मान्नेहेत विस्तरम् ॥ २५

अथवा भोजयेदेकं ब्राह्मणं वेदपारगम् ।
श्रुतिशीलादिसम्पन्नमलक्षणविवर्ज्जितम् ॥ २६

प्रशस्तपात्रे चान्नन्तु सर्व्वस्मात् प्रयतात्मनः ।
देवतायतने चास्मै त्रिलोकात् सम्प्रवर्त्तते ॥ २७

प्रास्येदग्नौ तदन्नन्तु दद्याच्च ब्रह्मचारिणे ।
भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ॥ २८

उपविष्टेषु यच्छ्राद्धे काममन्नमपि भोजयेत्।
अतिथिर्यत्र नाश्नाति न तच्छ्राद्धं प्रशस्यते॥ २९
तस्मात् प्रयत्नात्तीर्थेषु पूज्या अतिथयो द्विजैः।
अतीर्थे रमते श्राद्धे भुञ्जते ये द्विजातयः॥ ३०
काकयोनिं व्रजन्त्येते दत्त्वा चैव न संशयः।
हीनाङ्गः पतितः कुष्ठी वणिक् पुक्कसनासिकः॥ ३१
कुक्कुटः शूकरश्वानो वर्ज्याः श्राद्धेषु दूरतः।
वीभत्समशुचिं म्लेच्छं न स्पृशेच्च रजस्वलाम्॥ ३२
नीलकाषायवसनं पाषण्डांश्च विवर्ज्जयेत्।
यत् तत्र क्रियते कर्म्म पैतृकं ब्राह्मणान् प्रति॥ ३३
तत् सर्व्वमेव कर्त्तव्यं वैश्यदेवस्य पूजनम्।
यथोपविष्टान् सर्व्वांस्तानलङ्कुर्य्याद्विभूषणैः॥ ३४
या दिव्या इति मन्त्रेण हस्ते त्वर्घ्यं विनिक्षिपेत्।
प्रदद्याद् गन्धमाल्यानि धूपादीनि च शक्तितः॥ ३५
अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः।
आवाहनं ततः कुर्य्यादुशन्तस्त्वेत्यृचा बुधः॥ ३६
आवाह्य तदनुज्ञातो जपेदायान्तु नस्ततः।
शन्नोदेव्युदकं पात्रे तिलोऽसीति तिलांस्तथा॥ ३७
क्षिप्त्वा चार्घ्यं तथा पूर्व्वं दत्त्वा हस्तेषु वै पुनः।
संस्रवांश्च ततः सर्व्वान् पात्रीकुर्य्यात् समाहितः॥ ३८
पितृभिः सममेतेन ह्यर्घ्यं पात्रं निधाय च।
अग्नौ करिष्ये त्वादाय पृच्छेदन्नं घृतप्लुतम्॥ ३९
कुरुष्वेति ह्यनुज्ञातो जुहुयादुपवीतवत्।
यज्ञोपवीतिना होमः कर्त्तव्यः कुशपाणिना॥ ४०

प्राचीनावीतकः पित्र्यं वैश्वदेवन्तु होमयेत् ।
दक्षिणं पातयेज्जानु देवान् परिचरंस्तदा ॥ ४१
सोमाय वै पितृमते स्वधा नम इति ब्रुवन् ।
अग्नये कव्यवाहनाय स्वधेति जुहुयात्ततः ॥ ४२
अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।
महादेवान्तिके वाथ गोष्ठे वा सुसमाहितः ॥ ४३
ततस्तैरभ्यनुज्ञातः कृत्वा देवप्रदक्षिणम् ।
गोमयेनोपलिप्योर्व्वीं कुर्य्यात् स्वस्य च दैवतम् ॥ ४४
मण्डलं चतुरस्रं वा दक्षिणाप्रोन्नतं शुभम् ।
त्रिरुल्लिखेत् तस्य मध्यं दर्भेणैकेन चैव हि ॥ ४५
ततः संस्तीर्य्य तत्स्थाने दर्भान् वै दक्षिणाग्रकान् ।
त्रीन् पिण्डान्निर्व्वपेत्तत्र हविःशेषान् समाहितः ॥ ४६
दाप्य पिण्डांस्ततस्तत्र निमृज्याल्लेपभागिनाम् ।
तेषु दर्भेष्वथाचम्य त्रिराचम्य शनैरसून् ॥ ४७
उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ।
अवजिघ्रेच्चावहन्यात्तान् पिण्डान् यथा समाहितः ॥ ४८
अथ पिण्डावशिष्टान्नं विधिना भोजयेद् द्विजम् ।
षड्प्यत्र नमस्कुर्य्यात् पितॄन् देवांश्च धर्म्मवित् ॥ ४९
श्राद्धभोजनकाले तु दीपो यदि विनश्यति ।
पुनरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥ ५०
माषानपूपान् विविधान् दद्यात् सरसपायसम् ।
सूपशाकफलानिष्टान् पयो दधि घृतं मधु ॥ ५१
अन्नञ्चैव यथाकामं विविधं भक्ष्यपेयकम् ।
यद्यदिष्टं द्विजेन्द्राणां तत्तत् सर्व्वं निवेदयेत् ॥ ५२

धान्यास्तिलाश्च विविधाः शर्करा विविधास्तथा।
उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय इच्छता॥ ५३
अन्यत्र फलमूलेभ्यः पानकेभ्यस्तथैव च।
नाश्रूणि पातयेज्जातु न कुप्यान्नानृतं वदेत्॥ ५४
न पादेन स्पृशेदन्नं न चैनमवधूनयेत्।
क्रोधेनैव च यद्दत्तं यद्‌ दत्तं त्वरया पुनः॥ ५५
यातुधाना विलुम्पन्ति यच्च पापोपपादितम्।
स्विन्नगात्रो न तिष्ठेत सन्निधौ तु द्विजन्मनाम्॥ ५६
न च पश्येत काकादीन् पक्षिणस्तु न वारयेत्।
तद्रूपाः पितरस्तत्र समायान्ति बुभुत्सवः॥ ५७
न दद्यात्तत्र हस्तेन प्रत्यक्षलवणं तथा।
न चायसेन पात्रेण न चैवाश्रद्धया पुनः॥ ५८
काञ्चनेन तु पात्रेण तथा त्वौदुम्बरेण च।
उत्तमाधिपतां याति खड्गेन तु विशेषतः॥ ५९
पात्रे तु मृन्मये यो वै श्राद्धे भोजयते पितॄन्।
स याति नरकं घोरं भोक्ता चैव पुरोधसः॥ ६०
न पङ्क्त्या विषमं दद्यान्न याचेत न वादयेत्।
याचितादपि चात्मानं नरकं याति भीषणम्॥ ६१
भुञ्जीत वाग्यतः पृष्टो न ब्रूयात् प्रकृतान् गुणान्।
तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः॥ ६२
नाग्रासनोपविष्टस्तु भुञ्जीत प्रथमं द्विजः।
बहूनां पश्यतां सोऽज्ञः पङ्क्त्या हरति किल्बिषम्॥ ६३
न किञ्चिद्वर्जयेच्छ्राद्धे नियुक्तस्तु द्विजोत्तमः।
न मांसं प्रतिषेधेत न चान्यस्यान्नमीक्षयेत्॥ ६४

द्व्यामुष्यायणको दद्याद्बीजहेतुस्तथाहि सः।
रिक्तया भार्य्यया दद्यान्नियोगोत्पादितो यदि ॥ ८९
अनियुक्तः सुतो यस्तु शुक्रतो जायते त्विह।
प्रदद्याद्बीजिने पिण्डं क्षेत्रिणे तु तदन्यथा ॥ ९०
द्वौ पिण्डौ निर्व्वपेत्ताभ्यां क्षेत्रिणे बीजिने तथा।
कीर्त्तयेदथवैकस्मिन् बीजिनं क्षेत्रिणे ततः ॥ ९१
मृतेऽहनि तु कर्त्तव्यमेकोद्दिष्टविधानतः।
अशौचत्वनिरोत्त्राणः काम्यं कामयते पुनः ॥ ९२
पूर्व्वाह्णे चैव कर्त्तव्यं श्राद्धमभ्युदयार्थिना।
दैवं तत् सर्व्वमेवं स्यान्नवै कार्य्या बहिः क्रिया ॥ ९२
दर्भाश्च परितः स्थाप्यास्तदा स भोजयेद्द्विजान्।
नान्दीमुखाश्च पितरः प्रीयन्तामिति वाचयेत् ॥ ९३
मातृश्राद्धन्तु पूर्व्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम् ॥ ९४
दैवपूर्व्वं प्रदद्याद्वै न कुर्य्यादप्रदक्षिणम् ॥ ९५
प्राङ्मुखो निर्व्वपेत् पिण्डानुपवीती समाहितः।
स्थण्डिलेषु विचित्रेषु प्रतिमासु द्विजातिषु ॥ ९६
पुष्पैर्धूपैश्च नैवेद्यैर्भूषणैरपि पूज्य च।
पूजयित्वा मातृगणं कुर्य्याच्छ्राद्धत्रयं बुधः ॥ ९७
अकृत्वा मातृयागञ्च यः श्राद्धं परिवेषयेत्।
तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः ॥ ९८

इत्यौशनससमृतौ पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

दशाहं प्राहुराशौचं सपिण्डेषु विपश्चितः ।
मृतेऽथवाथ जातेषु ब्राह्मणानां द्विजोत्तमा ॥ १
नित्यानि नैव कर्म्माणि काम्यानि च विशेषतः ।
न कुर्य्याद्विहितं किञ्चित् स्वाध्यायं मनसापि च ॥ २
शुचिरक्रोधनस्त्वन्यान् कालेऽग्नौ भोजयेद्द्विजान् ।
शुष्कान्नेन फलैर्व्वापि पितरं जुहुयात्तथा ॥ ३
न स्पृशेयुरिमानन्ये न भूतेभ्य समाचरेत् ।
सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति ।
सूतके सूतकाच्चैव वर्ज्जयित्वा मृतौ पुनः ॥ ४
अधीयानस्तथा यज्वा वेदविच्चापि या भवेत् ।
चतुर्थे पञ्चमे वाह्नि संस्पर्शः कथितो बुधैः ॥ ५
स्पृश्यास्तु सर्व्व एवैते स्नानात्तु दशमेऽहनि ।
दशाहं निर्गुणं प्रोक्तमशौचं चासनिर्गुणे ॥ ६
एवं द्वित्रिगुणैर्युक्त चतुस्त्र्येकदिनैः शुचिः ॥ ७
दशाहात्तु परं सम्यगधीयीत जुहोति च ।
चतुर्थे तस्य संस्पर्शो मनुराह प्रजापतिः ॥ ८
क्रियाहीनस्य मूर्खस्य महारोगिण एव च ।
येषां मरणस्याहुर्म्मरणान्तमशौचकम् ॥ ९
त्रिरात्रं दशरात्रं वा ब्राह्मणानामशौचकम् ।
प्राक्संस्कारात्त्रिरात्रं स्याद्दशरात्रमतः परम् ॥ १०
जन्मद्विवर्षगे प्रेते मातापित्रोस्तदिष्यते ।
त्रिरात्रेण शुचिस्त्वन्यो यदिह्यत्यन्तनिर्गुणः ॥ ११

अदन्तजातमरणे मातापित्रोस्तदिष्यते ।
जातदन्ते त्रिरात्रं स्याद्दन्त: स्याद् यत्र निर्णय: ॥ १२
आ दन्तजन्मन: सद्य आ चौलादेकरात्रकम् ।
त्रिरात्रमोपनयनाद्दशरात्रमुदाहृतम् ॥ १३
जातमात्रस्य वा तस्य यदि स्यान्मरणं पितु: ।
मातुश्च सूतकं तत् स्यात् पितास्यास्पृश्य एव हि ॥ १४
सद्य:शौचं सपिण्डानां कर्त्तव्यं सोदरस्य तु ।
ऊर्द्धं दशाहादेकाहं सोदरो यदि निर्गुण: ॥ १५
अथोर्द्धं दन्तजन्म स्यात् सपिण्डानामशौचकम् ।
एकरात्रं निर्गुणानाञ्चौलादूर्द्धं त्रिरात्रकम् ॥ १६
आदन्तजातमरणं सम्भवेद्यदि सत्तमा: ।
एकरात्रं सपिण्डानां यदि चात्यन्तनिर्गुणा: ॥ १७
व्रतादेशां सपिण्डानां गर्भस्रावाच्च पातत: ।
गर्भच्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे ॥ १८
यथेष्टाचरणाज् ज्ञातौ त्रिरात्रादिति निर्णय: ।
सूतके यदि सूतिश्च मरणे वा गतिर्भवेत् ॥ १९
शेषेणैव भवेच्छुद्धिरह:शेषे द्विरात्रकम् ।
मरणोत्पत्तियोगे तु मरणेन समाप्यते ॥ २०
अघवृद्धिमदाशौचमूर्द्धं चेत् तेन शुध्यति ।
देशान्तरगत: श्रुत्वा सूतकं शावमेव वा ॥ २१
तावदप्रयतोऽस्त्येव यावच्छेष: समाप्यते ।
अतीते सूतके प्रोक्तं सपिण्डानां त्रिरात्रकम् ॥ २२
तथैव मरणे स्नानमूर्द्धं संवत्सराद्व्रतो ।
वेदांश्च यस्त्वशौयानो न भवेद्वृत्तिकर्षित: ॥ २३

सद्यःशौचं भवेत्तस्य सर्व्वावस्थासु सर्व्वदा।
स्त्रीणामसंस्कृतानान्तु प्रदानात् परतः पितुः ॥ २४
सपिण्डानां त्रिरात्रं स्यात् संस्कारो भर्त्तुरेव च।
अहस्त्वदत्तकन्यानामशौचं मरणे स्मृतम् ॥ २५
द्विवर्षजन्ममरणे सद्यःशौचमुदाहृतम्।
आदन्तात् सोदरः सद्य आ चौलादेकरात्रकम् ॥ २६
आप्रदानात् त्रिरात्रं स्याद्दशमन्तु ततः परम्।
मातामहानां मरणे त्रिरात्रं स्यादशौचकम् ॥ २७
एकोदराणां विज्ञेयं सूतके चैतदेव हि।
पक्षिणी योनिसम्बन्धे बान्धवेषु तथैव च ॥ २८
एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणि।
प्रेते राजनि सद्यस्तु यस्य स्याद्विषये स्थितः ॥ २९
गृहे मृतासु दत्तासु कन्यकासु त्र्यहं पितुः।
परपूर्व्वासु भार्य्यासु पुत्रेषु कुलजेषु च ॥ ३०
त्रिरात्रं स्यात्तथाचार्य्ये भार्य्यासु प्रत्यगासु च।
आचार्य्यपुत्रपत्न्योश्च अहोरात्रमुदाहृतम् ॥ ३१
एकरात्रमुपाध्याये तथैव श्रोत्रियेषु च।
एकरात्रं सपिण्डेषु स्वगृहे संस्थितेषु च ॥ ३२
त्रिरात्रं श्वश्रूमरणे श्वशुरे च तथैव च।
सद्यःशौचं समुद्दिष्टं सगोत्रे संस्थिते सति ॥ ३३
शुध्येद्द्विजो दशाहेन द्वादशाहेन भूपतिः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ३४
क्षत्रविट्शूद्रदायादा ये स्युर्व्विप्रस्य सेवकाः।
तेषामशेषं विप्रस्य दशाहाच्छुद्धिरिष्यते ॥ ३५

राजन्यवैश्यावप्येवं हीनवर्णासु योनिषु ।
षड़रात्रं वा त्रिरात्रं वाप्येकरात्रक्रमेण हि ॥ ३६
वैश्यक्षत्रियविप्राणां शूद्रेष्वाशौचमेव तु ।
अर्द्धमासेऽथ षड़्रात्रं त्रिरात्रं द्विजपुङ्गवाः ॥ ३७
शूद्रक्षत्रियविप्राणां वैश्येष्वाशौचमिष्यते ।
षड़्रात्रं द्वादशाहश्च विप्राणां वैश्यशूद्रयोः ।
अशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गवाः ॥ ३८
शूद्रविट्क्षत्रियाणान्तु ब्राह्मणे संस्थिते यदि ।
एकरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः ॥ ३९
असपिण्डं द्विजप्रेतं विप्रो निःहृत्य बन्धुवत् ।
अशित्वा च सहोषित्वा दशरात्रेण शुध्यति ॥ ४०
यदि निर्हरति क्षिप्रं प्रलोभाक्रान्तमानसः ।
दशाहेन द्विजः शुध्येद् द्वादशाहेन भूमिपः ॥ ४१
अर्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति ।
षड़्रात्रेणाथवा सप्तत्रिरात्रेणाथवा पुनः ॥ ४२
अनाथञ्चैव निर्व्वन्धुं ब्राह्मणं धनवर्ज्जितम् ।
स्नात्वा सम्प्राश्य तु घृतं शुध्यन्ति ब्राह्मणादयः ॥ ४३
अपरश्चेत् परं वर्णमपरश्चापरो यदि ।
अशौचे संस्पृशेत् स्नेहात् तदाशुच्येन शुध्यति ।
एकाहात् क्षत्रिये शुद्धिर्वैश्ये तु स्यादत्र्यहे सति ॥ ४४
शूद्रेषु च त्र्यहं प्रोक्तं प्राणायामशतं पुनः ।
अनस्थिसञ्चिते शूद्रे रौति चेद् ब्राह्मणः स्वकैः ॥ ४५
त्रिरात्रं स्यात्तथाशौचमेकाहं क्षत्रवैश्ययोः ।
अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव च ॥ ४६

अनास्थिसञ्चिते विप्रे ब्राह्मणो रौति चेत्तदा।
स्नानेनैव भवेच्छुद्धि सचैलेन न संशयः॥ ४७
यस्तैः सहान्नं कुर्य्याच्च यानादीनि तु चैव हि।
ब्राह्मणे वापरे वापि दशाहेन विशुध्यति॥ ४८
यस्तेषामन्नमश्नाति स तु देवोऽपि कामतः।
तदाशौचनिवृत्तेषु स्नानं कृत्वा विशुध्यति॥ ४९
यावत्तदन्नमश्नाति दुर्भिक्षाभिहतो नरः।
तावन्त्यहान्यशुद्धिः स्यात् प्रायश्चित्तं ततश्चरेत्॥ ५०
दाहाद्यशौचं कर्त्तव्यं द्विजानामग्निहोत्रिणाम्।
सपिण्डानान्तु मरणे मरणादितरेषु च॥ ५१
सपिण्डता च पुरुषे सप्तमे विनिवर्त्तते।
समानोदकभावस्तु जन्मनाम्नोरवेदने॥ ५२
पिता पितामहश्चैव तथैव प्रपितामहः।
लेपभाजस्तु यश्चात्मा सापिण्ड्यं साप्तपौरुषम्॥ ५३
ऊर्द्ध्वांनाश्चैव सापिण्ड्यमाह देवः प्रजापतिः।
ये चैकजाता बहवो भिन्नयोनय एव च॥ ५४
भिन्नवर्णास्तु सापिण्ड्यं भवेत्तेषां त्रिपुरुषम्।
कारवः शिल्पिनो वैद्यदासीदासास्तथैव च॥ ५५
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्त्तिताः।
दातारो नियमी चैव ब्रह्मविद् ब्रह्मचारिणौ॥ ५६
सत्रिणो व्रतिनस्तावत् सद्यःशौचमुदाहृतम्।
राजा चैवाभिषिक्तश्च प्राणसत्रिण एव च॥ ५७
यज्ञे विवाहकाले च देवयागे तथैव च।
सद्यःशौचं समाख्यातं दुर्भिक्षे वाप्युपद्रवे॥ ५८

विषाद्युपहतानाञ्च विद्युता पार्थिवैर्द्विजैः ।
सद्यःशौचं समाख्यातं सर्पादिमरणेऽपि च ॥ ५९
अग्निमेरुप्रपतने विषोघान्नपराशने ।
गोब्राह्मणान्ते सन्न्यस्ते सद्यः शौचं विधीयते ॥ ६०
नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ।
नाशौचं विद्यते सद्भिः पतिते च तथामृते ॥ ६१
इत्यौशनसस्मृतौ षष्ठोऽध्यायः ॥ ६

---

## सप्तमोऽध्यायः ।

पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ।
न चाश्रुपातपिण्डे च कार्य्यं श्राद्धादिकं क्वचित् ॥ १
व्यापादयेत्तथात्मानं स्वयं योऽग्निविषादिभिः ।
दहितं तस्य नाशौचं न च स्यादुदकादिकम् ॥ २
अथ कश्चित् प्रमादेन म्रियतेऽग्निविषादिभिः ।
तस्याशौचं विधातव्यं कार्य्यञ्चैवोदकादिकम् ॥ ३
जाते कुमारे तदहः आमं कुर्य्यात् प्रतिग्रहम् ।
सुवर्णधान्यगोवासस्तिलान्न गुड़सर्पिषः ॥ ४
फलानीक्षुञ्च शाकञ्च लवणं काष्ठमेव च ।
तोयं दधि घृतं तैलमौषधं क्षीरमेव च ॥ ५
आशौचिनो गृहाद् ग्राह्यं शुष्कान्नञ्चैव नित्यशः ।
आहिताग्निर्यथान्यायं दग्धव्य स्त्रिभिरग्निभिः ॥ ६
अनाहिताग्निर्गृह्येण लौकिकेनेतरैर्द्विजैः ।
देहाभावात् पलाशेन कृत्वा प्रतिकृतिं पुनः ॥ ७

दाहः कार्य्यो यथान्यायं सपिण्डैः श्रद्धयान्वितैः ।
सकृत् प्रसिञ्चेदुदकं नामगोत्रेण वाग्यतः ॥ ८
दशाहं बान्धवैः सार्द्धं सर्व्वे चैवार्द्रवाससः ।
पिण्डं प्रतिदिनं दद्युः सायं प्रातर्यथाविधि ॥ ९
प्रेताय च गृहद्वारि चतुरो भोजयेद्द्विजान् ।
द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म्म सबान्धवैः ॥ १०
चतुर्थे सञ्चयनं ज्ञातिरेव भवेत्तथा ।
त्रिपूर्व्वं भोजयेद्विप्रानयुग्मान् श्रद्धया शुचीन् ॥ ११
पञ्चमे नवमे चैव तथैवैकादशेऽहनि ।
अयुग्मान् भोजयेद्विप्रान् नवश्राद्धन्तु तद्विदुः ॥ १२
एकादशेऽह्नि कुर्व्वीत प्रेतमुद्दिश्य भावतः ।
द्वादशे वाथ कर्त्तव्यमन्निदेऽस्त्वथवाहनि ॥ १३
एकं पवित्रमेकं वा पिण्डमात्रं तथैव च ।
एवं मृतेऽह्नि कर्त्तव्यं प्रतिमासन्तु वत्सरम् ॥ १४
सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः ।
कुर्य्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमाः ॥ १५
प्रेतार्थं पितृपात्रेषु पात्रमासेचयेत् ततः ।
ये समाना इति द्वाभ्यां पिण्डानप्येवमेव हि ॥ १६
सपिण्डीकरणश्राद्धं दैवपूर्व्वं विधीयते ।
पितृनावाहयेत् तत्र पुनः प्रेतञ्च निर्द्दिशेत् ॥ १७
ये सपिण्डीकृताः प्रेता न तेषांस्यात् पृथक्क्रिया ।
यस्तु कुर्य्यात्पृथक्पिण्डं पितृहा त्वभिजायते ॥ १८
मृते पितरि वै पुत्रः पिण्डमब्दं समाविशेत् ।
दद्याच्चान्नं सोदकुम्भं प्रत्यहं प्रेतधर्म्मतः ॥ १९

पार्व्वणेन विधानेन सांवत्सरिकमिष्यते।
प्रतिसंवत्सरं कार्य्यं विधिरेष सनातनः॥ २०
मातापित्रोः सुतैः कार्य्यं पिण्डदानादि किञ्चन।
पत्नी कुर्य्यात् सुताभावे पत्न्यभावे तु सोदरः॥ २१
एष वः कथितः सम्यग्गृहस्थानां यथाविधि।
स्त्रीणाञ्च भर्त्तृशुश्रूषा धर्म्मो नान्य इहेष्यते॥ २२
यः स्वधर्म्मपरो नित्यमीश्वरार्पितमानसः।
प्राप्नोति परमं स्थानं यदुक्तं वेदसम्मितम्॥ २३
इत्यौशनसस्मृतौ सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः।

ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च।
महापातकिनस्त्वेते यः स तैः सह संवसेत्॥ १
संवत्सरेण पतति संसर्गं कुरुते तु यः।
यो हि शय्यासने नित्यं वसन् वै पतितो भवेत्॥ २
याजनं योनिसम्बन्धं तथैवाध्ययनं द्विजः।
कृत्वा सद्यः पतेज्ज्ञानात् सहभोजनमेव च॥ ३
अविज्ञायापि यो मोहात् कुर्य्यादध्ययनं द्विजः।
संवत्सरेण पतति सहाध्ययनमेव च॥ ४
ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्।
भैक्ष्यञ्चात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्॥ ५
ब्राह्मणावसथान् सर्व्वान् देवागाराणि वर्ज्जयेत्।
विनिन्द्य च स्वमात्मानं ब्राह्मणञ्च स्वयं स्मरेत्॥ ६

अमङ्गराणि योग्यानि समागाराणि संविशेत्।
विधूमे शनकैर्नित्य व्याहारे भुक्तवर्ज्जिते॥ ७
कुर्य्यादनशनं वाथ भृगोः पतनमेव च।
ज्वलन्तं वा विशेदग्निं जलं वा प्रविशेत् स्वयम्॥ ८
ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत्।
दीर्घमामयिनं विप्रं कृत्वानामयिनं तथा॥ ९
दत्त्वा चान्नं स विदुषे ब्रह्महत्यां व्यपोहति।
अश्वमेधावभृथके स्नात्वा यः शुध्यति द्विजः॥ १०
सर्व्वस्वं वा वेदविदे ब्राह्मणाय प्रदापयेत्।
ब्रह्महा मुच्यते पापैर्दृष्ट्वा वा सेतुदर्शनम्॥ ११
सुरापस्तु सुरां तप्तामग्निवर्णां पिवेत् तदा।
निर्द्दग्धकायः स तया मुच्यते च द्विजोत्तमः॥ १२
गोमुत्रमग्निवर्णं वा गोशकृद्द्रवमेव वा।
पयो घृतं जलं वाथ मुच्यते पातकात् ततः॥ १३
जलार्द्रवासाः प्रयतो ध्यात्वा नारायनं हरिम्।
ब्रह्महत्याव्रतञ्चाथ चरेत् तत्पापशान्तये॥ १४
स्वर्णस्तेयी सकृद्विप्रो राजानमभिगम्य तु।
स्वकर्म्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति॥ १५
गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम्।
स वै पापात्ततः स्तेनो ब्राह्मणस्तपसाथवा॥ १६
करेणादाय मुषलं लगुड़ं वाथ घातिनम्।
सच्चित्याभयतस्तीक्ष्णमायसं दण्डमेव च॥ १७
राजा च स्तेनमर्हति मुक्तकेशेन धावता।
आचक्षाणश्च तत्पापमेवं कर्म्माणि शाधि माम्॥ १८

शासनाद्वापि मोचाद्वा ततः स्तेयाद्विमुच्यते ।
अशासित्वा च तं राजा स्तेयस्याप्नोति किल्बिषम् ॥ १९
तपसा द्रुतमन्यस्य सुवर्णस्तेयजं फलम् ।
चीरवासा द्विजोऽरण्ये सञ्चरेद्ब्रह्मणो व्रतम् ॥ २०
स्नाताश्वमेधावभृथे पूतः स्यादथवा द्विजः ।
प्रदद्याद्वाथ विप्रेभ्यः स्वात्मतुल्यं हिरण्यकम् ॥ २१
चरेद्वा वत्सरं कृत्स्नं ब्रह्मचर्य्यपरायणः ।
ब्राह्मणः स्वर्णहारी च तत्पापस्यापनुत्तये ॥ २२
गुरुभार्य्यां समारुह्य ब्राह्मणः काममोहितः ।
उपगूहेत् स्त्रियं तप्तां कार्ष्यां कालायसीकृताम् ॥ २३
स्वयं वा शिश्नवृषणे उत्कृत्याध्यायवाञ्जली ।
आतिष्ठेद्दक्षिणामाशामानिपातमजिह्मगः ॥ २४
गुर्व्वर्थं वाहतः शुद्धेत् चरेद्वा ब्रह्मणो व्रतम् ।
शाखां कर्कटकापेतां परिष्वज्याथ वत्सरं ॥ २५
अधःशयीत नियतो मुच्यते गुरुतल्पगः ।
कृच्छ्राब्दं चरेद्विप्रश्चीरवासाः समाहितः ॥ २६
अश्वमेधावभृथके स्नात्वा मुच्येद्द्विजोत्तमः ।
कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदाव्रतः ॥ २७
स्थानासनाभ्यां विचरेदधन्दाऽप्युपयन्नतः ।
अधःशायी त्रिभिर्व्वर्षैस्ततः शुध्येत पातकात् ॥ २८
चान्द्रायणानि वा कुर्य्यात् पञ्चचत्वारि वा पुनः ॥ २९
पतितैः सम्प्रयुक्तानामयं गच्छति निष्कृतिम् ।
पतितेन तु संसर्गं लोभेन कुरुते द्विजः ॥ ३०

सकृत् पापापनोदार्थं तस्यैव व्रतमाचरेत्।
तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रितः॥ ३१
षाण्मासिकेऽथ संसर्गे प्रायश्चित्तार्द्धमाचरेत्।
एभिः पूतैरथो हन्ति महापातकिनो मलम्॥ ३२
पुण्यतीर्थाभिगमनात् पृथिव्यामथ निष्कृतिः।
ब्रह्महत्यां सुरापानं स्तेयं गुर्व्वङ्गनागमम्॥ ३३
कृत्वा चैवं महापापं ब्राह्मणः काममोहितः।
कुर्य्यादनशनं विप्रः पुण्यतीर्थे समाहितः॥ ३४
जले वा प्रविशेदग्नौ ध्यात्वा देवं कपर्द्दिनम्।
न ह्यन्या निष्कृतिर्दृष्टा मुनिभिः कर्म्मवेदिभिः॥ ३५
इत्यौशनसस्मृतावष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

गत्वा दुहितरं विप्रः स्वसारं वा स्नुषामपि।
प्रविशेज्ज्वलनं दीप्तं मतिपूर्व्वमिति स्थितिः॥ १
मातृष्वसां मातुलानीं तथैव च पितृष्वसाम्।
भागिनेयीं समारुह्य कुर्य्यात् कृच्छ्रादिपूर्व्वकम्॥ २
चान्द्रायणानि चत्वारि पञ्च वा सुसमाहितः।
पैतृष्वस्रेयीं गत्वा तु स्वस्रियां मातुरेव च॥ ३
मातुलस्य सुतां [illegible] [illegible]त्वा चान्द्रायणं चरेत्।
भार्य्यासखीं समारुह्य गत्वा श्यालीं तथैव च॥ ४
अहोरात्रोषितो भूत्वा तप्तकृच्छ्रं समाचरेत्।
उदक्यागमने विप्रस्त्रिरात्रेण विशुध्यति॥ ५

जलौकेश्चापि [illegible] अविज्ञानात् [illegible] ।
पञ्च[illegible] [illegible] शुद्धिर्विज्ञाय [illegible] ॥ ६
मण्डूकं नकुलं काकं [illegible] पूर्व्ववत् ।
श्वानं हत्वा द्विजः कुर्य्यात् [illegible] व्रतम् ।
पयः पिबेत् त्रिरात्रन्तु श्वानं हत्वा [illegible] ॥ ७
मार्ज्जारञ्चाथ नकुलं योजनं वाऽध्वनो व्रजेत् ।
कृच्छ्रं द्वादशमात्रन्तु कुर्य्यादश्ववधे द्विजः ॥ ८
अथ कृष्णायसीं दद्यात् सर्पं हत्वा द्विजोत्तमः ।
पलालं षण्डकञ्चैव सुपिकं सीसमाषकम् ॥ ९
वराहन्तु तिलद्रोणं तिलाटञ्चैव तित्तिरिम् ।
शुकं द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायणम् ॥ १०
हत्वा हंसं बलाकञ्च बकं टिट्टिभमेव च ।
वानरञ्चैव भासञ्च स्पर्शयेद् ब्राह्मणाय गाम् ॥ ११
क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात् पयस्विनीम् ।
अक्रव्यादं वत्सतरमुष्ट्रं हत्वा तु कृष्णलम् ॥ १२
किञ्चिद्देयन्तु विप्राय दद्यादस्थिमतां वधे ।
अनस्थाञ्चैव हिंसायां प्राणायामेन शुध्यति ॥ १३
फलदानान्तु वृक्षाणां छेदनाद्जाप्यमृक्शतम् ।
गुल्मवल्लीलतानाञ्च वीरुधां फलमेव च ॥ १४
पुष्पागमानाञ्च तथा घृतप्राशो विशोधनम् ।
चान्द्रायणं पराकञ्च कुर्य्याद् हत्वा प्रमादतः ॥ १५
मतिपूर्व्वं वधे चास्याः प्रायश्चित्तं न विद्यते ।
मनुष्याणाञ्च हरणं स्त्रीणां कृत्वा गृहस्य च ॥ १६

वापीकूपजलानाञ्च शुध्येच्चान्द्रायणेन तु।
द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः॥ १७
चरेत् सान्तपनं कृच्छ्रं चरित्वात्मविशुद्धये।
धान्यादिधनचौर्य्ये च पञ्चगव्यविशोधनम्॥ १८
तृणकाष्ठद्रुमाणाञ्च पुष्पाणाञ्च फलस्य च।
चैलचर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनम्॥ १९
मणिप्रवालरत्नानां सुवर्णरजतस्य च।
अयःकांस्योपलानाञ्च द्वादशाहमभोजनम्॥ २०
एतदेव व्रतं कुर्य्याद् द्विशफैकशफास्य च।
पक्षिणामोषधीनाञ्च हरेच्चापि त्र्यहं पयः॥ २१
न मांसानां हृतानान्तु दैवे चान्द्रायणं चरेत्।
उपोष्य द्वादशाहन्तु कूष्माण्डैर्जुहुयाद्घृतम्॥ २२
नकुलोलूकमार्ज्जारं जग्धा सान्तपनं चरेत्।
श्वानं जग्ध्वाथ कृच्छ्रेण शुभक्षेणैव शुध्यति॥ २३
प्रकुर्य्याच्चैव संस्कारं पूर्व्वेणैव विधानतः।
शललञ्च बलाकञ्च हंसकारण्डवं तथा॥ २४
चक्रवाकञ्च जग्ध्वा च द्वादशाहमभोजनम्।
कपोतं टिट्टिभं भासं शुकं सारसमेव च॥ २५
जलूकां जालपादञ्च जग्ध्वा ह्येतद्व्रतञ्चरेत्।
शिशुमारं तथा माषं मत्स्यं मांसं तथैव च॥ २६
जग्ध्वा चैव वराहञ्च एतदेव व्रतञ्चरेत्।
कोकिलञ्चैव मत्स्यादं मण्डूकं भुजगं तथा॥ २७
गोमूत्रयावकाहारैर्म्मासेनैकेन शुध्यति।
जलेचरांश्च जलजान् यातुधानविपाटितान्॥ २८

रक्तपादांस्तथा जग्ध्वा सप्ताहञ्चैतदाचरेत्।
मृतमांसं वृथा चैवमात्मार्थं वा यथाकृतम्॥ २९
भुक्त्वा समाचरेदेतत्तत्पापस्यापनुत्तये।
कपोतं कुञ्जरं शिशुं कुक्कुटं रजकां तथा॥ ३०
प्राजापत्यं चरेज्जग्ध्वा तथा कुम्भीरमेव च।
पलाण्डुं लशुनञ्चैव भुक्त्वा चान्द्रायणं चरेत्॥ ३१
वार्त्ताकुं तण्डुलीयञ्च प्राजापत्येन शुध्यति।
अश्मंतकं तथोपेतं तप्तकृच्छ्रेण शुध्यति॥ ३२
प्राजापत्येन शुद्धिः स्यात् मनुष्य शशभक्षणे।
अलावुं गृञ्जनञ्चैव भुक्त्वाप्येतद्व्रतं चरेत्॥ ३३
उदुम्बरञ्च कामेन तप्तकृच्छ्रेण शुध्यति।
वृथा कृसरसंयावं पायसापूपशष्कुलीम्॥ ३४
भुक्त्वा चैवं व्रतं तत्र त्रिरात्रेण विशुध्यति।
पीत्वा क्षीराण्यपेयानि ब्रह्मचारी विशेषतः॥ ३५
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति।
अनिर्द्दशाया गोः क्षीरं माहिषं वार्त्तमेव च॥ ३६
गर्भिण्या वा विवत्सायाः पीत्वा दुग्धमिदं चरेत्।
एतेषाञ्च विकाराणि पीत्वा मोहेन वा पुनः॥ ३७
गोमूत्रयावकाहारः सप्तरात्रेण शुध्यति।
भुक्त्वा चैव नवश्राद्धं सूतके मृतकेऽथवा॥ ३८
चान्द्रायणेन शुध्येत ब्राह्मणस्तु समाहितः।
यस्य यद्धूयते नित्यं न यस्याग्रं न हीयते॥ ३९
चान्द्रायणं चरेत् सम्यक् तस्यान्नप्राशने द्विजः।
अभोज्यानान्तु सर्व्वेषां भुक्त्वा चान्नमुपस्कृतम्॥ ४०

अन्त्यस्यात्यर्थिनोऽन्नञ्च तप्तकृच्छ्रमुदाहृतम्।
चाण्डालान्नं द्विजो भुक्त्वा सम्यक्चान्द्रायणं चरेत्॥ ४१
अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥ ४२
क्रव्यादानां पक्षिणाञ्च प्राश्य मूत्रपुरीषकम्।
महासान्तपनं कुर्य्यात्तेषां मोहाद्द्विजातयः॥ ४३
भासमण्डुककुक्कुरवायसे कृच्छ्रमाचरेत्।
प्राजापत्येन शुध्येत ब्राह्मणः क्लिष्टभोजनात्॥ ४४
क्षत्रियस्तप्तकृच्छ्रं स्याद्वैश्यस्यैव त्रिकृच्छ्रकम।
सुराभाण्डोदकं वापि पीत्वा चान्द्रायणं चरेत्॥ ४५
शुनोच्छिष्टं द्विजो भुक्त्वा त्रिरात्रेण विशुध्यति।
गोमूत्रयावकाहारः पीतशेषंच वा पयः॥ ४६
आपो मूत्रपुरीषाद्यैरुपेताः प्राशयेद्यदि।
तदा सान्तपन कुर्य्यात् तं कायविशोधनम्॥ ४७
चाण्डालकूपभाण्डेषु यदज्ञानं पिबेज्जलम्।
चरेत् सान्तपनं कृच्छ्रं ब्राह्मणः पापशोधनम्॥ ४८
चाण्डालेन च संस्पृष्टं पीत्वा वारि द्विजोत्तमः।
त्रिरात्रेण विशुध्येत पञ्चगव्येन शुध्यति॥ ४९
महापातकसंस्पर्शे भुक्त्वा स्नात्वा द्विजोत्तमः।
बुद्धिपूर्व्वन्तु मूढ़ात्मा तप्तकृच्छ्रं समाचरेत्॥ ५०
अन्यजातिविवाहे च स महापातकी भवेत्।
तस्य पातकिसंसर्गात् पातकित्वमवाप्नुयात्॥ ५१
चतुर्व्विंशतिकृच्छ्रं स्याद्विवाहे त्वन्यकन्यया।
संसर्गस्य तदर्द्धं स्यात् प्रायश्चित्तं स्मृते न हि॥ ५२

दृष्ट्वा महापातकिनं चण्डालं वा रजस्वलाम् ।
प्रमादाद्भोजनं कृत्वा त्रिरात्रेण विशुध्यति ॥ ५३
स्नानार्द्रो यदि भुञ्जीत अहोरात्रेण शुध्यति ।
बुद्धिपूर्व्वन्तु कृच्छ्रेण भगवानाह पद्मजः ॥ ५४
शुष्कं पर्य्युषितादीनि गन्धादिप्रतिदूषितम् ।
भुक्त्वोपवासं कुर्व्वीत चरेद्विप्रः पुनःपुनः ।
अज्ञानाद् भुक्तिशुद्ध्यर्थमज्ञानस्य विशेषतः ॥ ५५
भृत्यानां यजनं कृत्वा परेषामन्यकर्म्मणि ।
अभिचारमनर्हञ्च त्रिभिः कृच्छ्रैर्विशुध्यति ॥ ५६
ब्राह्मणाभिहतानाञ्च कृत्वा दाहादिकं द्विजः ।
गोमूत्रयावकाहारः प्राजापत्येन शुध्यति ॥ ५७
तैलाभ्यंगः प्रभाते च कुर्य्यान्मूत्रपुरीषके ।
अहोरात्रेण शुध्येत श्मश्रुकर्म्मणि मैथुने ॥ ५८
एकाहेति विवाहाग्निं परिभाव्य द्विजोत्तमः ।
त्रिरात्रेण विशुध्येत त्रिरात्रात् षडहं पुनः ॥ ५९
दशाहे द्वादशाहे वा परिहास्य प्रमादतः ।
कृच्छ्रचान्द्रायणं कुर्य्यात् तत्पापस्यापनुत्तये ॥ ६०
पतितद्द्रव्यमादाय तदुत्सर्गेण शुध्यति ।
चरेच्च विधिना कृच्छ्रमित्याह भगवान् प्रभुः ॥ ६१
अनाशकनिवृत्त्या तु प्रव्रज्यापासिता तथा ।
आचरेत् त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च ॥ ६२
पुनश्च जातकर्म्मादिसंस्कारैः संस्कृता द्विजाः ।
शुद्धा यस्तद्व्रतं सम्यक् चरेयुर्धर्म्मदर्शिनः ॥ ६३

अनुपासितसन्ध्यस्तु तदहर्यापकवशेन च।
अहश्चाश्नन् संयतमना रात्रौ चेद्रात्रिमेव हि॥ ६४
अकृत्वा समिदाधानं शुचिः स्नात्वा समाहितः।
गायत्र्यष्टसहस्रस्य जपं कृत्वा विशुध्यति॥ ६५
उपासीत न चेत् सन्ध्यां गृहस्थोऽपि प्रमादतः।
स्नातकव्रतलोल्यन्तु कृत्वा चोपवसेद्दिनम्॥ ६६
संवत्सरञ्चरेत् कृच्छ्रं अनुच्छन्दे द्विजोत्तमः।
चान्द्रायणं चरेद्व्रत्या गोप्रदानेन शुध्यति॥ ६७
नास्तिक्याद्यदि कुर्व्वीत प्राजापत्यं चरेद्द्विजः।
देवद्रोहं गुरुद्रोहं तप्तकृच्छ्रेण शुध्यति॥ ६८
उष्ट्रयानं समारुह्य खरयानञ्च कामतः।
त्रिरात्रेण विशुध्येत नग्नो न प्रविशेज्जलम्॥ ६९
षष्ठान्नकालमासं वा संहिताजपमेव वा।
होमाश्च शाकलान्नित्यमपत्यानां विशोधनम्॥ ७०
नीलं रक्तं वसित्वा तु ब्राह्मणो वस्त्रमेव हि।
अहोरात्रोषितः स्नातः पञ्चगव्येन शुध्यति॥ ७१
वेदधर्म्मपुराणानां चण्डालस्य च भाषणम्।
चान्द्रायणेन शुद्धिः स्यान्न ह्यन्या तस्य निष्कृतिः॥ ७२
उद्बन्धनादिनिहतं संस्पृश्य ब्राह्मणः क्वचित्।
चान्द्रायणेन शुद्धः स्यात् प्राजापत्येन वा पुनः॥ ७३
उच्छिष्टो यदि नाचान्तश्चण्डालादीन् स्पृशेद्द्विजः।
उच्छिष्टस्तत्र कुर्व्वीत प्राजापत्यं विशुद्धये॥ ७४
चण्डालसूतिकशवांस्तथा नारीं रजस्वलाम्।
स्पृष्ट्वा स्नायाद्विशुद्ध्यर्थं तत्स्पृष्टान् पतितांस्तथा॥ ७५

चण्डालसूतिकाशवैः संस्पृष्टं स्पर्शयेद्यदि ।
प्रमादात् स्नात आचम्य जपं कृत्वा विशुध्यति ॥ ७६
अस्पृष्टस्पर्शनं कृत्वा स्नात्वा शुध्यद्द्विजोत्तमः ।
आचामेत विशुद्ध्यर्थं प्राह देवः पितामहः ॥ ७७
भुञ्जानस्य तु विप्रस्य कदाचित् स्रवते गुदम् ।
कृत्वा शौचं ततः स्नात्वा उपोष्य जुहुयाद् घृतम् ॥ ७८
चाण्डालन्तु शवं स्पृष्ट्वा कृच्छ्रं कुर्य्याद्द्विजोत्तमः ।
दृष्ट्वा नभःस्थं नक्षत्रमहोरात्रेण शुध्यति ॥ ७९
सुराः स्पृष्ट्वा द्विजः कुर्य्यात् प्राणायामत्रयं शुचिः ।
पलाण्डुं लशुनञ्चैव घृतं प्राश्य विशुध्यति ॥ ८०
ब्राह्मणस्तु शुना दष्टस्त्र्यहं सायं पयः पिबेत् ।
नाभेरूर्द्ध्वस्य दष्टस्य तदेव त्रिगुणं भवेत् ॥ ८१
स्यादेतत्त्रिगुणं बाह्वोर्मूर्ध्नि स्यात्तु चतुर्गुणम् ।
स्नात्वा जपेत्तु गायत्रीं श्वभिर्दष्टो द्विजोत्तमः ॥ ८२
पञ्चयज्ञानकृत्वा तु यो भुङ्क्ते प्रत्यहं गृही ।
अनातुरः स निधनः कृच्छ्रार्द्धेन विशुध्यति ॥ ८३
अहिताग्निरुपस्थानं यः कुर्य्यान्न तु पर्व्वणि ।
ऋतौ गच्छेन्न भार्य्यायां सोऽपि कृच्छ्रार्द्धमाचरेत् ॥ ८४
विनाद्भिरप्सु वा कुर्य्याच्छरीरं सन्निवेश्य तु ।
सचैलो जलमाप्लुत्य गामालभ्य विशुध्यति ॥ ८५
गायत्र्यष्टसहस्रन्तु त्र्यहञ्चोपवसेद्गृही ।
अनुगच्छेच्च यः शूद्रं प्रेतभूतं द्विजोत्तमः ॥ ८६
गायत्र्यष्टसहस्रन्तु जपं कुर्य्यान्नदीषु च ।
कृत्वा तु शपथं विप्रो विप्रस्य वधसंयुते ॥ ८७

मृषैव यावकान्नेन कुर्य्याच्चान्द्रायणं व्रतम्।
पङ्क्तौ विषमदानञ्च कृत्वा कृच्छ्रेण शुध्यति॥ ८८
छायां श्वपाकस्यारुह्य स्नात्वा सम्प्राशयेद् घृतम्।
ईक्षेदादित्यमशुचिर्दृष्ट्वाग्नीन्द्रजमेव च॥ ८९
मानुषास्थि च संस्पृष्ट्वा स्नानमेव विशुध्यति।
कृत्वाप्यध्ययनं विप्रश्चरेद्भिक्षानुवत्सरम्॥ ९०
कृतघ्नो ब्राह्मणगृहे पञ्चसंवत्सरं व्रती।
हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारन्तु गरीयसः॥ ९१
स्नात्वाचम्य ततः शेषं प्रणिपत्य प्रसादयेत्।
ताड़यित्वा तृणेनैव कण्ठे बद्धा च वाससा॥ ९२
विवादे परिनिर्जित्य प्रणिपत्य प्रसादयेत्।
अवगूर्य्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने॥ ९३
कृच्छ्रातिकृच्छ्रं कुर्व्वीत विप्रस्योत्पाद्य शोणितम्।
गुरोराक्रोशने चैव कृच्छ्रं कुर्य्याद्विशोधनम्॥ ९४
एकरात्रं द्विरात्रं वा तत्पापस्यापनुत्तये।
देवर्षीणामभिमुखं ष्ठीवनाक्रोशनाकृतौ॥ ९५
उल्मुकादिजनुर्जित्वा दातव्यञ्च हिरण्यकम्।
देवोद्यानेषु यः कुर्य्यान्मूत्रोच्चारं शकृद्द्विजः॥ ९६
छिन्द्याच्छिश्नन्तु शुद्ध्यर्थं चरेच्चान्द्रायणं व्रतम्।
देवतायतने मूत्रं कृत्वा द्रोहाद्द्विजोत्तमः॥ ९७
शिश्नस्योत्कर्त्तनं कृत्वा चान्द्रायणमथाचरेत्।
देवतानामृषीणाञ्च वेदानाञ्चैव कुत्सनम्॥ ९८
कृत्वा सम्यक्प्रकुर्व्वीत प्राजापत्यं द्विजोत्तमः।
तैस्तु सम्भाषणं कृत्वा स्नात्वा देवान् समर्च्चयेत्॥ ९९

स्त्री यदा बालभावेन महापापं करोति हि।
प्रायश्चित्तं च तस्यास्यात् पिता तद्व्रतचारिणीम् ॥ १००
उद्वहेदभिरूपां तामन्यथा पतितस्तु सः ।
अपि राजन्यकवधे वार्षिकब्राह्मणव्रतम् ।
तस्याल्ले वृषभैकेण सहस्रं गोदानमाचरेत् ॥ १०१

सर्व्वं हत्वा माषमात्रं दद्यात् सुवर्णरजतताम्रत्रपु-
सीसकांस्यायसामद्भिरेव मृत्मायुक्ता। भस्तेजसाम्बोच्छि-
ष्टानां भस्मनाद्भिः प्रचालनं कनकरजतमणिशङ्खशङ्खु-
पलानां वस्त्रविदलरज्जुचर्म्मणाम्बाद्भिः शौचमिति ॥
अपि चण्डालश्वपचस्पृष्टे वा विण्मूत्र एव च।
त्रिरात्रेण विशुद्धिः स्याद्भुक्ताच्छिष्टः षड़ाचरेत् ॥ १०३
पिता मातामहो यस्य अग्रजो वाथ कस्यचित्।
तयोऽग्निहोत्रमन्त्रेषु न दोषः परिवेदने ॥ १०४
अमावस्यायां यो ब्राह्मणं समुद्दिश्य पितामहम् ।
ब्राह्मणीं स्त्रीं समभ्यर्च्य मुच्यते सर्व्वपातकैः ॥ १०५
अमावास्यां तिथिं प्राप्य यममाराधयेद्भवम् ।
ब्राह्मणान् भोजयित्वा तु सर्व्वपापैः प्रमुच्यते ॥ १०६
कृष्णाष्टम्यां महादेव तथा कृष्णचतुर्द्दश्याम् ।
सम्पूज्य ब्राह्मणमुखैः सर्व्वपापैः प्रमुच्यते ॥ १०७
त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ।
दृष्ट्वैव प्रथमे यामे मुच्यते सर्व्वपातकैः ॥ १०८
सर्व्वत्र दानग्रहणे मुच्यते सोमयागतः ।
प्राप्त्वा च दक्षिणां टङ्कन् हिरण्य-प्रतिमामपि ॥ १०९
अयुतेनैव गायत्र्या मुच्यते सर्व्वपातकैः ॥ ११०

इत्यौशनसस्मृतौ नवमोऽध्यायः ॥ ९ ॥

# अङ्गिरःसंहिता ।

## प्रथमोऽध्यायः ।

गृहाश्रमेषु धर्म्मेषु वर्णानामनुपूर्व्वशः ।
प्रायश्चित्तविधिं दृष्ट्वा अङ्गिरा मुनिरब्रवीत् ॥ १
अन्त्यानामपि सिद्धान्नं भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्द्धन्तु ब्रह्मक्षत्रविशां विदुः ॥ २
रजकश्चर्म्मकारश्च नटो वरुड़ एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥ ३
अन्त्यजानां गृहे तोयं भाण्डे पर्य्युषितञ्च यत् ।
प्रायश्चित्तं यदा पीतं तदेव हि समाचरेत् ॥ ४
चाण्डालकूपभाण्डेषु त्वज्ञानात् पिवते यदि ।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विधीयते ॥ ५
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः ।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रेषु दापयेत् ॥ ६
अज्ञानात् पिवते तोयं ब्राह्मणस्त्वन्त्यजातिषु ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ ७
विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन ।
आचान्त एव शुध्येत अङ्गिरा मुनिरब्रवीत् ॥ ८
क्षत्त्रियेण यदा स्पृष्ट उच्छिष्टेन कदाचन ।
स्नानं जप्यन्तु कुर्व्वीत दिनस्यार्द्धेन शुध्यति ॥ ९
वैश्येन तु यदा स्पृष्टः शुना शूद्रेण वा द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ १०

अनुच्छिष्टेन संस्पृष्टो स्नानं येन विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥ ११
अत ऊर्द्धं प्रवक्ष्यामि नीलीवस्त्रस्य वै विधिम् ।
स्त्रीणां क्रीड़ार्थसंयोगे शयनीये न दुष्यति ॥ १२
पालने विक्रये चैव तद्वृत्तेरुपजीवने ।
पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्व्यपोहति ॥ १३
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
वृथा तस्य महायज्ञा नीलीवस्त्रस्य धारणात् ॥ १४
नीलीरक्तं यदा वस्त्रमज्ञानेन तु धारयेत् ।
अहो रात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १५
नीलीदारु यदा भिन्द्याद्ब्राह्मणो वै प्रमादतः ।
शोणितं दृश्यते यत्र द्विजश्चान्द्रायणं चरेत् ॥ १६
नीलीवृक्षेण पक्वन्तु अन्नमश्नाति चेद्द्विजः ।
आहारवमनं कृत्वा पञ्चगव्येन शुध्यति ॥ १७
भक्षन् प्रमादतो नीलीं द्विजातिस्त्वसमाहितः ।
त्रिषु वर्णेषु सामान्यं चान्द्रायणमिति स्थितिम् ॥ १८
नीलीरक्तेन वस्त्रेण यदन्नमुपनीयते ।
नोपतिष्ठति दातारं भोक्ता भुङ्क्ते तु किल्विषम् ॥ १९
नीलीरक्तेन वस्त्रेण यत् पाके श्रपितं भवेत् ।
तेन भुक्तेन विप्राणां दिनमेकमभोजनम् ॥ २०
मृते भर्त्तरि या नारी नीलीवस्त्रं प्रधारयेत् ।
भर्त्ता तु नरकं याति सा नारी तदनन्तरम् ॥ २१
नील्या चोपहते क्षेत्रे शस्यं यत्तु प्ररोहति ।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥ २२

देवद्रोख्यां वृषोत्सर्गे यज्ञे दाने तथैव च ।
अत्र स्नानं न कर्त्तव्यं दूषिता च वसुन्धरा ॥ २३
वापिता यत्र नीली स्यात्तावद्भूस्यशुचिर्भवेत् ।
यावद्द्वादशवर्षाणि अत ऊर्द्धं शुचिर्भवेत् ॥ २४
भोजने चैव पाने च तथा चौषधभेषजैः ।
एवं म्रियन्ते या गावः पादमेकं समाचरेत् ॥ २५
घण्टाभरणदोषेण यत्र गौर्विनिपीड्यते ।
चरेदर्द्धं व्रतं तेषां भूषणार्थं हि तत् कृतम् ॥ २६
दमने दामने रोधे अवघाते च वैकृते ।
गवा प्रभवता याते: पादोनं व्रतमाचरेत् ॥ २७
अङ्गुष्ठपर्व्वमात्रस्तु बाहुमात्रः प्रमाणतः ।
सपल्लवश्च साग्रश्च दण्ड इत्यभिधीयते ॥ २८
दण्डादुक्ताद्यदन्येन पुरुषा प्रहरन्ति गाम् ।
द्विगुणं गोव्रतं तेषां प्रायश्चित्तं विशोधनम् ॥ २९
शृङ्गभङ्गे त्वस्थिभङ्गे चर्म्मनिर्म्मोचने तथा ।
दशरात्रं चरेत् कृच्छ्रं यावत् स्वस्था भवेत्तदा ॥ ३०
गोमूत्रेण च सम्मिश्रं यावकञ्चोपजायते ।
एतदेव हितं कृच्छ्रमिदमाङ्गिरसं मतम् ॥ ३१
असमर्थस्य बालस्य पिता वा यदि वा गुरुः ।
यमुद्दिश्य चरेद्धर्म्मं पापं तस्य न विद्यते ॥ ३२
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोड़शः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ॥ ३३
मूर्च्छिते पतिते चापि गवि यष्टिप्रहारिते ।
गायत्र्यष्टसहस्रन्तु प्रायश्चित्तं विशोधनम् ॥ ३४

स्नात्वा रजस्वला चैव चतुर्थेऽह्नि विशुध्यति।
कुर्य्याद्रजसि निवृत्तेऽनिवृत्ते न कथञ्चन ॥ ३५
रोगेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्त्तते।
अशुच्यस्ता न तेन स्युस्तासां वैकारिकं हि तत् ॥ ३६
साध्वाचारा न तावत् स्याद्रजो यावत् प्रवर्त्तते।
वृत्ते रजसि गम्या स्त्री गृहकर्म्मणि चेन्द्रिये ॥ ३७
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥ ३८
रजस्वला यदा स्पृष्टा शुना शूद्रेण चैव हि।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ ३९
द्वावेतावशुची स्यातां दम्पती शयनं गतौ।
शयनादुत्थिता नारी शुचिः स्यदशुचिः पुमान् ॥ ४०
गण्डूषं पादशौचञ्च न कुर्य्यात् कांस्यभाजने।
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ॥ ४१
रजसा शुध्यते नारी नदी वेगेन शुध्यति।
भूमौ निक्षिप्य षण्मासमत्यन्तोपहतं शुचि ॥ ४२
गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि तु।
भस्मना दशभिः शुध्येत् काकेनोपहते तथा ॥ ४३
शौचं सौवर्णरौप्याणां वायुनार्केन्दुरश्मिभिः ॥ ४४
रेतःस्पृष्टं शवस्पृष्टमाविकञ्च न दुष्यति।
अद्भिर्मृदा च तन्मात्रं प्रक्षाल्य च विशुध्यति ॥ ४५
शुष्कमन्नमविप्रस्य भुक्त्वा सप्ताहमृच्छति।
अन्नं व्यञ्जनसंयुक्तमर्द्धमासेन जीर्य्यति ॥ ४६

पयो दधि च मासेन षाण्मासेन घृतं तथा।
तैलं संवत्सरेणैव कोष्ठे जीर्य्यति वा न वा॥ ४७
यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरन्तरम्।
इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते॥ ४८
शूद्रान्नं शूद्रसम्पर्कः शूद्रेण च सहासनम्।
शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्॥ ४९
अप्रणामे तु शूद्रोऽपि स्वस्ति यो वदति द्विजः।
शूद्रोऽपि नरकं याति ब्राह्मणोऽपि तथैव च॥ ५०
दशाहाच्छुध्यते विप्रो द्वादशाहेन भूमिपः।
पाक्षिकं वैश्य एवाह शूद्रो मासेन शुध्यति॥ ५१
अग्निहोत्री च यो विप्रः शूद्रान्नञ्चैव भोजयेत्।
पञ्च तस्य प्रणश्यन्ति आत्मा वेदास्त्रयोऽग्नयः॥ ५२
शूद्रान्नेन तु भुक्तेन यो द्विजो जनयेत् सुतान्।
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्त्तते॥ ५३
शूद्रेण स्पृष्टमुच्छिष्टं प्रमादादथ पाणिना।
तद्द्विजेभ्यो न दातव्यमापस्तम्बोऽब्रवीन्मुनिः॥ ५४
ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य च पर्व्वसु।
वैश्यस्यापत्सु भुञ्जीत न शूद्रस्यापि कदाचन॥ ५५
ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने पशुस्तथा।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं ध्रुवम्॥ ५६
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं ध्रुवम्॥ ५७
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम्॥ ५८

सूतकेषु यदा विप्रो ब्रह्मचारी जितेन्द्रियः ।
पिबेत् पानीयमज्ञानाद्भुङ्क्ते भूक्तमथापि वा ॥ ५९
उत्तीर्य्याचम्य उदकमवतीर्य्य उपस्पृशेत् ।
एवं हि समुदाचारो वरुणेनाभिमन्त्रितः ॥ ६०
अग्न्यगारे गवां गोष्ठे देवब्राह्मणसन्निधौ ।
आहारे जपकाले च पादुकानां विसर्ज्जनम् ॥ ६१
पादुकासनमारुढ़ो गेहात् पञ्चगृहं व्रजेत् ।
छेदयेत्तस्य पादौ तु धार्म्मिकः पृथिवीपतिः ॥ ६२
अग्निहोत्री तपस्वी च श्रोत्रियो वेदपारगः ।
एते वै पादुकैर्य्यान्ति शेषान् दण्डेन ताड़येत् ॥ ६३
जन्म प्रभृति संस्कारे बालस्यान्नस्य भोजने ।
असपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः ॥ ६४
याचकान्नं नवश्राद्धमपि सूतकभोजनम् ।
नारी प्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ॥ ६५
अन्यदत्ता तु या कन्या पुनरन्यस्य दीयते ।
तस्याश्चान्नं न भोक्तव्यं पुनर्भूः सा प्रगीयते ॥ ६६
पूर्व्वं स्राविता यस्य गर्भो यस्याप्यसंस्कृतः ।
द्वितीये गर्भसंस्कारस्तेन शुद्धिर्विधीयते ॥ ६७
राजाग्रेई ग्रभिर्म्मासैर्यावत् तिष्ठति गुर्व्विणी ।
तावद्रक्षा विधातव्या पुनरन्यो विधीयते ॥ ६८
भर्त्तृशासनमुल्लङ्घ्य या च स्त्री विप्रवर्त्तते ।
तस्याश्चैव न भोक्तव्यं विज्ञेया कामचारिणी ॥ ६९
अनपत्या तु या नारी नाश्नीयात्तद्गृहेऽपि वै ।
अथ भुङ्क्ते तु यो मोहात् पूयसं नरकं व्रजेत् ॥ ७०

स्त्रिया धनन्तु यो मोहादुपजीवन्ति बान्धवाः ।
स्त्रिया यानानि वासांसि ते पापा यान्त्यधोगतिम् ॥ ७१
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्च्चसम् ।
सूतकेषु च यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ॥ ७२

---

# यमसंहिता।

अथातो ह्यस्य धर्म्मस्य प्रायश्चित्ताभिधायकम्।
चतुर्णामपि वर्णानां धर्म्मशास्त्रं प्रवर्त्तते॥ १

जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानशनच्युताः।
विषप्रपतनप्रायशस्त्राघातच्युताश्च ये॥ २

सर्व्वे ते प्रत्यवसिताः सर्व्वलोकबहिष्कृताः।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वा॥ ३

उभयावसिताः पापा येवानप्रस्थाश्रमाच्चुताः।
इन्दुद्वयेन शुध्यन्ति दत्त्वा धेनुं तथा वृषम्॥ ४

गोब्राह्मणहनं दग्ध्वा मृतमुद्बन्धनेन च।
पाशं तस्यैव छित्त्वा तु तप्तकृच्छ्रं समाचरेत्॥ ५

कृमिभिर्व्रणसम्भूतैर्म्मक्षिकाद्योपघातितः।
कृच्छ्रार्द्धं सम्प्रकुर्व्वीत शक्तया दद्यात्तु दक्षिणाम्॥ ६

ब्राह्मणस्य मलद्वारे पूयशोणितसम्भवे।
कृमिभुक्तव्रणे मौञ्जीहोमेन स विशुध्यति॥ ७

यः क्षत्रियस्तथा वैश्यः शूद्रश्चाप्यनुलोमजः।
ज्ञात्वाभुङ्क्ते विशेषेण चरेच्चान्द्रायणं व्रतम्॥ ८

कुक्कुटाण्डप्रमाणन्तु ग्रासञ्च परिकल्पयेत्।
अन्यथाहारदोषेण न स तत्र विशुध्यति॥ ९

एकैकं वर्द्धयेच्छुक्ले कृष्णपक्षे च ह्रासयेत्।
अमावस्यां न भुञ्जीत एष चान्द्रायणो विधिः॥ १०
सुरान्यमद्यपानेन गोमांसभक्षणे कृते।
तप्तकृच्छ्रं चरेद्विप्रस्तत्पापस्तु प्रणश्यति॥ ११
प्रायश्चित्ते ह्युपक्रान्ते कर्त्ता यदि विपद्यते।
पूतस्तदहरेवापि इहलोके परत्र च॥ १२
यावदेकः पृथग् व्यक्तिः प्रायश्चित्ते न शुध्यति।
अपरास्ते न च स्पृश्यास्तेऽपि सर्व्वे विगर्हिताः॥ १३
अभोज्याश्चाप्रतिग्राह्या असम्भाष्या विवाहिनः।
पूयन्तेऽनुव्रते चीर्णे सर्व्वे ते ऋतकथभागिनः॥ १४
ऊनैकादशवर्षस्य पञ्चवर्षात् परस्य च।
प्रायश्चित्तञ्चरेद्भ्राता पिता अन्योऽपि वान्धवः॥ १५
अतो वालतरस्यापि नापराधो न पातकम्।
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते॥ १६
अशीतिर्यस्य वर्षाणि वालो वाप्यूनषोड़शः।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च॥ १७
अस्तं गतो यदा सूर्य्यश्चाण्डालरजकस्त्रियः।
संस्पृष्टास्तु तदा कैश्चिऽ प्रायश्चित्तं कथम्भवेत्॥ १८
जातरूपं सुवर्णञ्च दिवानीतञ्च यज्जलम्।
तेन स्नात्वा च पीत्वा च सर्व्वे ते शुचयः स्मृताः॥ १९
दासनापितगोपालकुलमित्रार्द्धसीरिणः।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्॥ २०
अन्नं शूद्रस्य भोज्यं वा ये भुञ्जन्त्यवुधा नराः।
प्रायश्चित्तं तथा प्राप्तं चरेच्चान्द्रायणं व्रतम्॥ २१

प्राप्ते द्वादशे वर्षे यः कन्यां न प्रयच्छति।
मासि मासि रजस्तस्याः पिता पिवति शोणितम्॥ २२
माता चैव पिता चैव जेष्ठभ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम्॥ २३
यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः।
असम्भाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः॥ २४
वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजाः।
शूद्री तु वृषली ज्ञेया कुमारी तु रजस्वला॥ २५
यत् करोत्यकरात्रेण वृषलीसेवनाद्द्विजः।
तद्भैक्षभुग् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति॥ २६
स्वत्वं या परित्यज्यान्यरूपेण वृषस्यति।
वृषली सा तु विज्ञेया न शूद्री वृषली भवेत्॥ २७
वृषलीफेनपीतस्य निश्वासोपहतस्य च।
तस्याश्चैव प्रसूतस्य निष्कृतिर्नैव विद्यते॥ २८
श्वित्री कुष्ठी तथा चैव कुनखी श्यावदन्तकः।
रोगी हीनातिरिक्ताङ्गः पिशुनो मत्सरस्तथा॥ २९
दुर्भगो हि तथा षण्ढः पाषण्डो वेदनिन्दकः।
हैतुकः शूद्रयाजी च अयाज्यानाञ्च याजकः॥ ३०
नित्यं प्रतिग्रहे लुब्धो याचको विषयात्मकः।
श्यावदन्तोऽथ वैद्यश्च असदालापकस्तथा॥ ३१
एते श्राद्धे च दाने च वर्ज्जनीयाः प्रयत्नतः॥ ३२
ततो देवलकश्चैव भृतको वेदविक्रयी।
एते वर्ज्याः प्रयत्नेन एतच्छास्त्रान्तरब्रवीत्॥ ३३

एतान्विनियोजयेद्यस्तु हव्ये कव्ये च कर्म्मणि ।
निराशाः पितरस्तस्य यान्ति देवा महर्षिभिः ॥ ३४
अग्रे माहिषिकं दृष्ट्वा मध्ये तु वृषलीपतिम् ।
अन्ते वार्द्धुषिकं दृष्ट्वा निराशाः पितरो गताः ॥ ३५
महिषीत्युच्यते भार्य्या या चैव व्यभिचारिणी ।
तान् दोषान् क्षमते यस्तु स वै माहिषिकः स्मृतः ॥ ३६
समार्घ्यन्तु समुद्धृत्य महार्घ्यं यः प्रयच्छति ।
स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥ ३७
यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः ।
अश्नन्ति पितरस्तावद्यावन्नोक्ता हविर्गुणाः ॥ ३८
हविर्गुणा न वक्तव्याः पितरो यत्र तर्पिताः ।
पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः ॥ ३९
यावतो ग्रसते ग्रासान् हव्यकव्येषु मन्त्रवित् ।
तावतो ग्रसते पिण्डान् शरीरे ब्रह्मणः पिता ॥ ४०
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ ४१
अनुच्छिष्टेन संस्पृष्ट स्नानमात्रं विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥ ४२
यावद्विप्रा न पूज्यन्ते सम्भोजनर्हिरण्यकैः ।
तावच्चीर्णव्रतस्यापि तत्पापं न प्रणश्यति ॥ ४३
यद्दष्टितं काकबलाकचिल्लैरमेध्यलिप्तन्तु भवेच्छरीरम् ।
गात्रं मुखे च प्रविशेच्च सम्यक् स्नानेन लेपोपहतस्य
शुद्धिः ॥ ४४

ऊर्द्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते।
ऊर्द्ध्वं स्नानमधःशौचं तस्मात्त्रेणैव शुध्यति॥ ४५

अभक्ष्याणामपेयानामलेह्यानाञ्च भक्षणे।
रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथम्भवेत्॥ ४६

पद्मोडुम्बरविल्वाश्च कुशाश्वत्थपलाशका:।
एतेषामुदकं पीत्वा षड्रात्रेणैव शुध्यति॥ ४७

यः प्रत्यवसितो विप्रः प्रव्रज्याग्निर्निरापदि।
अनाहिताग्निर्व्वर्त्तेत गृहित्वञ्च चिकीर्षति॥ ४८

आचरेत्त्रीणि कृच्छ्राणि चरेच्चान्द्रायणानि च।
जातकर्म्मादिभिः प्रोक्तैः पुनःसंस्कारमर्हति॥ ४९

तूलिका उपधानानि पुष्पं रक्ताम्बराणि च।
शोषयित्वा प्रतापेण प्रोक्षयित्वा शुचिर्भवेत्॥ ५०

देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्।
उपपत्तिमवस्थाञ्च ज्ञात्वा धर्म्मं समाचरेत्॥ ५१

रथ्याकर्द्दमतोयानि नावायसक्षणानि च।
मारुतार्केण शुध्यन्ति पक्केष्टकचितानि च॥ ५२

आतुरे स्नानसम्प्राप्ते दशकृत्वोह्यनातुरः।
स्नात्वा स्नात्वा स्पृशेत् तन्तु ततः शुध्येत आतुरः॥ ५३

रजकश्चर्म्मकारश्च नटो वरूड़ एव च।
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः॥ ५४

एषां गत्वा तु योषां वै तप्तकृच्छ्रं समाचरेत्॥ ५५

स्त्रीणां रजस्वलायान्तु स्पृष्टास्पृष्टि यदा भवेत्।
प्रायश्चित्तं कथं तासां वर्णे वर्णे विधीयते॥ ५६

स्पृष्ट्वा रजस्वलां यान्तु सगोत्राञ्च सभर्तृकाम् ।
कामादकामतो वापि स्नात्वा कालेन शुध्यति ॥ ५७
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा ।
कृच्छ्रेण शुध्यते पूर्व्वा शूद्रा पादेन शुध्यति ॥ ५८
स्पृष्ट्वा रजस्वलान्योन्यं क्षत्रिया शूद्रजा तथा ।
पादहीनं चरेत् पूर्व्वा पादार्द्धन्तु तथोत्तरा ॥ ५९
स्पृष्ट्वा रजस्वलान्योन्यं वैश्यजा शूद्रजा तथा ।
कृच्छ्रपादं चरेत् पूर्व्वा तदर्द्धन्तु तथोत्तरा ॥ ६०
स्पृष्टा रजस्वला चैव श्वाजजम्बुकरासभैः ।
तावत् तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति ॥ ६१
स्पृष्टा रजस्वला कैश्चिच्चाण्डालैररजस्वला ।
प्राजापत्येन कृच्छ्रेण प्राणायामशतेन च ॥ ६२
विप्रः स्पृष्टो निशायाञ्च उदक्या पतितेन च ।
दिवानीतेन तोयेन स्नापयेच्चाग्निसन्निधौ ॥ ६३
दिवार्करश्मिसंस्पृष्टं रात्रौ नक्षत्ररश्मिभिः ।
सन्ध्योभयोश्च सन्ध्यायाः पवित्रं सर्व्वदा जलम् ॥ ६४
आपः करनखस्पृष्टाः पिवेदाचमने द्विजः ।
सुरां पिवति सुव्यक्तं यमस्य वचनं यथा ॥ ६५
स्नातवाप्योस्तथा कूपे पाषाणैः शस्त्रघातनैः ।
यष्ट्या तु घातने चैव मृत्पिण्डे गोकुलेन च ॥ ६६
रोधने बन्धने चैव स्थापिते पुष्कले तथा ।
काष्ठे वनस्पतौ रोधसङ्कटे रज्जुवस्त्रयोः ॥ ६७
एतत्ते कथितं नित्यं प्रमादस्थानमुत्तमम् ।
यत्र यत्र मृता गावः प्रायश्चित्तं समाचरेत् ॥ ६८

दारुणा घातने कृच्छ्रं पाषाणैर्द्विगुणं भवेत्।
अर्द्धकृच्छ्रन्तु खातेऽस्यां पादकृच्छ्रन्तु पादपे॥ ६९
शस्त्रघाते त्रिकृच्छ्राणि यष्टिघाते द्वयं चरेत्॥ ७०
कृच्छ्रेण वस्त्राघातेऽपि गोघ्नस्येति विशुध्यति।
यो वर्त्तयति गोमध्ये नदीकान्तारमन्तिके॥ ७१
रोमाणि प्रथमे पादे द्वितीये श्मश्रु वापयेत्।
तृतीये तु शिखा धार्य्या चतुर्थे सशिखं वपेत्॥ ७२
न स्त्रीणां वपनं कुर्य्यात् न च सा गामनुव्रजेत्।
न च रात्रौ वसेद्गोष्ठे न कुर्य्याद्वैदिकीं श्रुतिम्॥ ७३
सर्व्वान् केशान् समुद्धृत्य च्छेदयेदङ्गुलिद्वयम्।
एवमेव तु नारीणां शिरसो वपनं स्मृतम्॥ ७४
मृतकेन तु जातेन उभयोः सूतकं भवेत्।
पातकेन तु लिप्तेन नास्य सूतकिता भवेत्॥ ७५
चत्वारि खलु कर्म्माणि सन्ध्याकाले विवर्ज्जयेत्।
आहारं मैथुनं निद्रां स्वाध्यायञ्च चतुर्थकम्॥ ७६
आहाराज्जायते व्याधिः क्रूरगर्भश्च मैथुने।
निद्रौ श्रियो निवर्त्तन्ते स्वाध्याये मरणं ध्रुवम्॥ ७७
अज्ञानात्तु द्विजश्रेष्ठ वर्णानां हितकाम्यया।
मया प्रोक्तमिदं शास्त्रं सावधानोऽवधारय॥ ७८

---

# अत्रिसंहिता ।

---

हुताग्निहोत्रमासीनमत्रिं वेदविदां वरम् ।
सर्व्वशास्त्रविधिज्ञातमृषिभिश्च नमस्कृतम् ॥ १
नमस्कृत्य च ते सर्व्वे इदं वचनमब्रुवन् ।
हितार्थं सर्व्वलोकानां भगवन् कथयस्व नः ॥ २

अत्रिरुवाच ।

वेदशास्त्रार्थतत्त्वज्ञा यन्मां पृच्छथ संशयम् ।
तत् सर्व्वं सम्प्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥ ३
सर्व्वतीर्थान्युपस्पृश्य सर्व्वान् देवान् प्रणम्य च ।
जप्त्वा तु सर्व्वसूक्तानि सर्व्वशास्त्रानुसारतः ॥ ४
सर्व्वपापहरं नित्यं सर्व्वसंशयनाशनम् ।
चतुर्णामपि वर्णानामत्रिः शास्त्रमकल्पयत् ॥ ५
ये च पापकृतो लोके ये चान्ये धर्म्मदूषकाः ।
सर्व्वे पापैः प्रमुच्यन्ते श्रुत्वेदं शास्त्रमुत्तमम् ॥ ६
तस्मादिदं वेदविद्भिरध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सद्वृत्तेभ्यश्च धर्म्मतः ॥ ७
अकुलीने ह्यसद्वृत्ते जड़े शूद्रे शठे द्विजे ।
एतेष्वेव न दातव्यमिदं शास्त्रं द्विजोत्तमैः ॥ ८
एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥ ९

एकाक्षरं प्रदातारं यो गुरुं नाभिमन्यते।
शुनां योनिशतं गत्वा चाण्डालेष्वपि जायते॥ १०
वेदं गृहीत्वा यः कश्चिच्छास्त्रञ्चैवावमन्यते।
स सद्यः पशुतां याति सम्भवानेकविंशतिम्॥ ११
स्वानि कर्म्माणि कुर्व्वाणा दूरे सन्तोऽपि मानवाः।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्म्मण्यवस्थिताः॥ १२
कर्म्म विप्रस्य यजनं दानमध्ययनं तपः।
प्रतिग्रहोऽध्यापनञ्च याजनञ्चेति वृत्तयः॥ १३
क्षत्रियस्यापि यजनं दानमध्ययनं तपः।
शस्त्रोपजीवनं भूतरक्षणञ्चेति वृत्तयः॥ १४
दानमध्ययनं वापि यजनञ्चेति वै विशः।
वार्त्ता शूद्रस्य शुश्रूषा द्विजानां कारुकर्म्म च॥ १५
मयैष धर्म्मोऽभिहितः संस्थिता यत्र वर्णिनः।
बहुमानमिह प्राप्य प्रयान्ति परमां गतिम्॥ १६
ये त्यक्तारः स्वधर्म्मस्य परधर्म्मे व्यवस्थिताः।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते॥ १७
आत्मीये संस्थितो धर्म्मे शूद्रोऽपि स्वर्गमश्नुते।
परधर्म्मो भवेत्त्याज्यः सुरूपा परदारवत्॥ १८
वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः।
ततो राष्ट्रस्य हन्तासौ यथा वह्नेश्च वै जलम्॥ १९
प्रतिग्रहोऽध्यापनञ्च तथाऽविक्रेयविक्रयः।
याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृतम्॥ २०
सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्॥ २१

अव्रताश्चानधीयाना यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदं वधैः ॥ २२
विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुञ्जते ।
तेऽप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ॥ २३
ब्राह्मणान् वेदविदुषः सर्व्वशास्त्रविशारदान् ।
तत्र वर्षति पर्ज्जन्यो यत्रैतान् पूजयेन्नृपः ॥ २४
त्रयो लोकास्त्रयो वेदा आश्रमाश्च त्रयोऽग्नयः ।
एतेषां रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा ॥ २५
उभे सन्ध्ये समाधाय मौनं कुर्व्वन्ति ये द्विजाः ।
दिव्यवर्षसहस्राणि स्वर्गलोके महीयते ॥ २६
य एवं कुरुते राजा गुणदोषपरीक्षणम् ।
यशः स्वर्गं नृपत्वञ्च पुनः कोषं समृद्धयेत् ॥ २७

दुष्टस्य दण्डः सुजनस्य पूजा
न्यायेन कोषस्य च सम्प्रवृद्धिः ।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा
पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ २८

यत् प्रजापालने पुण्यं प्राप्नुवन्तीह पार्थिवाः ।
न तु क्रतुसहस्रेण प्राप्नुवन्ति द्विजोत्तमाः ॥ २९
अलाभे देवखातानां ह्रदेषु च सरःसु च ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥ ३०
वसाशुक्रमसृङ्मज्जा मूत्रविट्कर्णविड्नखाः ।
श्लेष्माश्थिदूषिकाः स्वेदो द्वादशैते नृणां मलाः ॥ ३१
षस्सां षस्सां क्रमेणैव शुद्धिरुक्ता मनीषिभिः ।
मृद्वारिभिश्च पूर्व्वेषामुत्तरेषान्तु वारिणा ॥ ३२

शौचमङ्गलानायासा अनसूयास्पृहा दमः।
लक्षणानि च विप्रस्य तथा दानं दयापि च॥ ३३
न गुणान् गुणिनो हन्ति स्तौति चान्यान् गुणानपि
न हसेच्चान्यदोषांश्च सानसूया प्रकीर्त्तिता॥ ३४
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः।
आचारेषु व्यवस्थानं शौचमित्यभिधीयते॥ ३५
प्रशस्ताचरणं नित्यमप्रशस्तविवर्ज्जनम्।
एतद्धि मङ्गलं प्रोक्तमृषिभिधर्म्मदर्शिभिः॥ ३६
शरीरं पीड्यते येन शुभेन त्वशुभेन वा।
अत्यन्तं तन्न कुर्व्वीत अनायासः स उच्यते॥ ३७
यथोत्पन्नेन कर्त्तव्यः सन्तोषः सर्व्ववस्तुषु।
न स्पृहेत् परदारेषु सास्पृहा परिकीर्त्तिता॥ ३८
वाह्यमाध्यात्मिकं वापि दुःखमुत्पाद्यतेऽपरैः।
न कुप्यति न चाहन्ति दम इत्यभिधीयते॥ ३९
अहन्यहनि दातव्यमदीनेनान्तरात्मना।
स्तोकादपि प्रयत्नेन दानमित्यभिधीयते॥ ४०
परस्मिन् वन्धुवर्गे वा मित्रे द्वेष्ये रिपौ तथा।
आत्मवद्वर्त्तितव्यं हि दयैष परिकीर्त्तिता॥ ४१
यस्त्वेतैर्लक्षणैर्युक्तो गृहस्थोऽपि भवेद्द्विजः।
स गच्छति परं स्थानं जायते नेह वै पुनः॥ ४२
अग्निहोत्रं तपः सत्यं वेदानाञ्चैव पालनम्।
आतिथ्यं वैश्वदेवश्च (च) इष्टमित्यभिधीयते॥ ४३
वापीकूपतड़ागादिदेवतायतनानि च।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते॥ ४४

इष्टं पूर्त्तं च कर्त्तव्यं ब्राह्मणेन प्रयत्नतः।
इष्टेन लभते स्वर्गं पूर्त्तेन मोक्षमाप्नुयात्॥ ४५
इष्टापूर्त्तौ द्विजातीनां सामान्यौ धर्म्मसाधनौ।
अधिकारी भवेच्छूद्रः पूर्त्ते धर्म्मे न वैदिके॥ ४६
यमान् सेवेत सततं न नित्यं नियमान् बुधः।
यमान् पतत्यकुर्व्वाणो नियमान् केवलान् भजन्॥ ४७
आनृशंस्यं क्षमा सत्यमहिंसा दानमार्ज्जवम्।
प्रीतिः प्रसादो माधुर्य्यं मार्द्दवञ्च यमा दश॥ ४८
शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः।
व्रतमौनोपवासाश्च स्नानञ्च नियमा दश॥ ४९
प्रतिकृतिं कुशमयीं तीर्थवारिषु मज्जयेत्।
यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः॥ ५०
मातरं पितरं वापि भ्रातरं सुहृदं गुरुम्।
यमुद्दिश्य निमज्जेत द्वादशांशफलं लभेत्॥ ५१
अपुत्रेणैव कर्त्तव्यः पुत्र-प्रतिनिधिः सदा।
पिण्डोदकक्रियाहेतोर्यस्मात् तस्मात् प्रयत्नतः॥ ५२
पिता पुत्रस्य जातस्य पश्येच्च जीवतो मुखम्।
ऋणमस्मिन् संनयति अमृतत्वञ्च गच्छति॥ ५३
जातमात्रेण पुत्रेण पितॄणामनृणी पिता।
तदह्नि शुद्धिमाप्नोति नरकात्त्रायते हि सः॥ ५४
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजते चाश्वमेधञ्च नीलं वा वृषमुत्सृजेत्॥ ५५
काङ्क्षन्ति पितरः सर्व्वे नरकान्तरभीरवः।
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति॥ ५६

फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ।
गयाशीर्षं पदाक्रम्य मुच्यते ब्रह्महत्यया ॥ ५७
महानदीमुपस्पृश्य तर्पयेत् पितृदेवताः ।
अक्षयान् लभते लोकान् कुलञ्चैव समुद्धरेत् ॥ ५८
शङ्कास्थाने समुत्पन्ने भक्ष्यभोगविवर्ज्जिते ।
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥ ५९
अक्षारलवणं भैक्ष्यं पिबेद्ब्राह्मीं सुवर्च्चसम् ।
त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह ॥ ६०
मद्यभाण्डाद्द्विजः कश्चिदज्ञानात् पिबते जलम् ।
प्रायश्चित्तं कथं तस्य मुच्यते केन कर्म्मणा ॥ ६१
पलाशबिल्वपत्राणि कुशान् पद्मान्युडुम्बरम् ।
क्वाथयित्वा पिबेदापस्त्रिरात्रेणैव शुद्ध्यति ॥ ६२
सायं प्रातस्तु यः सन्ध्यां प्रमादाद्विक्रमेत् सकृत् ।
गायत्र्यास्तु सहस्रं हि जपेत् स्नात्वा समाहितः ॥ ६३
शोकाक्रान्तोऽथ वा श्रान्तः स्थितः स्नानजपादिभिः ।
ब्रह्मकूर्च्चं चरेत्तस्या दानं दत्त्वा विशुध्यति ॥ ६४
गवां शृङ्गोदके स्नात्वा महानद्युपसङ्गमे ।
समुद्रदर्शनेनैव व्यालदष्टः शुचिर्भवेत् ॥ ६५
वृकश्वानशृगालैस्तु यदि दष्टश्च ब्राह्मणः ।
हिरण्योदकसंमिश्रं घृतं प्राश्य विशुध्यति ॥ ६६
ब्राह्मणी तु शुना दष्टा जम्बुकेन वृकेण वा ।
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥ ६७
सव्रतश्च शुना दष्टस्त्रिरात्रमुपवासयेत् ।
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ ६८

मौह्यात् प्रमादात् संलोभाद्व्रतभङ्गन्तु कारयेत्।
त्रिरात्रेणैव शुध्येत पुनरेव व्रती भवेत्॥ ६९
ब्राह्मणान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः।
दिनद्वयन्तु गायत्र्या जपं कृत्वा विशुध्यति॥ ७०
क्षत्रियान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः।
त्रिरात्रेण भवेच्छुद्धिर्यथा क्षत्रे तथा विशि॥ ७१
अभोज्यान्नं तथा भुक्त्वा स्त्रीशूद्रोच्छिष्टमेव वा।
अशुध्वा मांसमभक्ष्यन्तु सप्तरात्रं यवान् पिवेत्॥ ७२
शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते।
तदुच्छिष्टन्तु सम्प्राश्य षण्मासान् कृच्छ्रमाचरेत्॥ ७३
असंस्पृष्टेन संस्पृष्टः स्नानं तेन विधीयते।
तस्य चोच्छिष्टमश्नीयात् षण्मासान् कृच्छ्रमाचरेत्॥ ७४
अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥ ७५
वपनं मेखला दण्डो भैक्षचर्य्याव्रतानि च।
निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि॥ ७६
गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिताम्।
प्रायोज्यं मृण्मयं भाण्डं सिद्धमन्नं तथैव च॥ ७७
गृहान्निष्क्रम्य तत्सर्व्वं गोमयेनोपलेपयेत्।
गोमयेनोपलिप्याथ च्छागेनाघ्रापयेत् पुनः॥ ७८
ब्राह्मैर्म्मन्त्रैस्तु पूतन्तु हिरण्यकुशवारिभिः।
तैरेवाभ्युक्ष्य तद्वेश्म शुध्यते नात्र संशयः॥ ७९
राजान्त्यैः श्वपचैर्व्वापि बलाद्विचालितो द्विजः।
पुनः कुर्व्वीत संस्कारं पश्चात् कृच्छ्रत्रयञ्चरेत्॥ ८०

शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते ।
तदुच्छिष्टन्तु संप्राश्य यत्नेन कृच्छ्रमाचरेत् ॥ ८१
अतः परं प्रवक्ष्यामि सूतकस्य विनिर्णयम् ।
प्रायश्चित्तं पुनश्चैव कथयिष्याम्यतः परम् ॥ ८२
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः ।
त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः ॥ ८३
व्रतिनः शास्त्रपूतस्य आहिताग्नेस्तथैव च ।
राज्ञस्तु सूतकं नास्ति यस्य चेच्छति ब्राह्मणः ॥ ८४
ब्राह्मणो दशरात्रेण द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ८५
सपिण्डानान्तु सर्व्वेषां गोत्रजः साप्तपौरुषः ।
पिण्डाश्चोदकदानञ्च शावाशौचं तथानुगम् ॥ ८६
चतुर्थे दशरात्रं स्यात् षड़हः पञ्चमे तथा ।
षष्ठे चैव त्रिरात्रं स्यात् सप्तमे त्र्यहमेव वा ॥ ८७
अष्टमे दिनमेकन्तु नवमे प्रहरद्वयम् ।
दशमे स्नानमात्रेण सूतके तु शुचिर्भवेत् ॥ ८८
मृतसूतके दासीनां पत्नीनाञ्चानुलोमिनाम् ।
स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौनिकम् ॥ ८९
शवस्पृष्टतृतीयस्तु सचेलः स्नानमाचरेत् ।
चतुर्थे सप्तमेऽब्दं स्यादेष शावविधिः स्मृतः ॥ ९०
एकत्र संस्कृतानान्तु मातृणामेकभोजिनाम् ।
स्वामितुल्यं भवेच्छौचं विभक्तानां पृथक् पृथक् ॥ ९१
उद्धीचोरमवीचोरं यच्चान्नं मृतसूतके ।
याचकान्नं नवश्राद्धं भुक्त्वा चान्द्रायणञ्चरेत् ॥ ९२

सूतकान्नमधर्म्माय यस्तु प्राश्नाति मानवः।
चिरात्रमुपवासः स्यादेकरात्रं जले वसेत् ॥ ९३
महायज्ञविधानन्तु न कुर्य्यान्मृतजन्मनि।
होमं तत्र प्रकुर्व्वीत शुष्कान्नेन फलेन वा ॥ ९४
वालस्त्वन्तर्दशाहे तु पञ्चत्वं यदि गच्छति।
सद्य एव विशुद्धिः स्यान्न प्रेतं नैव सूतकम् ॥ ९५
कृतचूड़स्तु कुर्व्वीत उदकं पिण्डमेव च।
स्वधाकारं प्रकुर्व्वीत नामोच्चारणमेव च ॥ ९६
ब्रह्मचारी यतिश्चैवं मन्त्रे पूर्व्वकृते तथा।
यज्ञे विवाहकाले च सद्यः शौचं विधीयते ॥ ९७
विवाहोत्सवयज्ञेषु अन्तरामृतसूतके।
पूर्व्वसङ्कल्पितार्थस्य न दोषश्चात्रिरब्रवीत् ॥ ९८
मृतसंजननादूर्द्धं सूतकादौ विधीयते।
स्पर्शनाचमनाच्छुद्धिः सूतिकाञ्चेन्न संस्पृशेत् ॥ ९९
पञ्चमेऽहनि विज्ञेयः संस्पर्शः क्षत्रियस्य तु।
सप्तमेऽहनि वैश्यस्य विज्ञेयं स्पर्शनं बुधैः ॥ १००
दशमेऽहनि शूद्रस्य कर्त्तव्यं स्पर्शनं बुधैः।
मासेनैवात्मशुद्धिः स्यात् सूतके मृतके तथा ॥ १०१
व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्व्वदा।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ १०२
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
स्वाध्यायव्रतहीनस्य सततं सूतकं भवेत् ॥ १०३
द्वे कृच्छ्रे परिवित्तेस्तु कन्यायाः कृच्छ्रमेव च।
कृच्छ्रातिकृच्छ्रं दातुः स्याद्धोतुः सान्तपनं स्मृतम् ॥ १०४

कुब्जवामनखञ्जेषु गद्गदेऽथ जड़ेषु च।
जात्यन्धबधिरे मूके न दोषः परिवेदने॥ १०५

क्लीवे देशान्तरस्थे च पतिते व्रजितेऽपि वा।
योगशास्त्राभियुक्ते च न दोषः परिवेदने॥ १०६

पिता पितामहो यस्य अग्रजो वापि कस्यचित्।
नाग्निहोत्राधिकारोऽस्ति न दोषः परिवेदने॥ १०७

भार्य्यामरणपक्षे वा देशान्तरगतेऽपि वा।
अधिकारो भवेत् तत्र तथा पातकसंयुते॥ १०८

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत्।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा॥ १०९

नाग्नयः परिविन्दन्ति न वेदा न तपांसि च।
न च श्राद्धं कनिष्ठो वै विना चैवाभ्यनुज्ञया॥ ११०

तस्माद्धर्म्मं सदा कुर्य्याच्छ्रुतिस्मृत्युदितञ्च यत्।
नित्यनैमित्तिकं काम्यं यच्च स्वर्गस्य साधनम्॥ १११
एकैकं वर्द्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत्।
अमावास्यां न भुञ्जीत एष चान्द्रायणो विधिः॥
इत्येतत् कथितं पूर्व्वं महापातकनाशनम्॥ ११२
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम्।
न स्पृशन्तीह पापानि महापातकजान्यपि॥ ११३
वायुभक्षो दिवा तिष्ठेद्रात्रिं नीत्वाप्सु सूर्य्यदृक्।
जप्त्वा सहस्रं गायत्र्याः शुद्धिर्ब्रह्मवधादृते॥ ११४
पद्मोडुम्बरविल्वैश्च कुशोऽश्वत्थपलाशयोः।
एतेषामुदकं पीत्वा पर्णकृच्छ्रमुदाहृतं॥ ११५

पञ्चगव्यञ्च गोक्षीरदधिमूत्रसकृद्घृतम्।
जग्ध्वा परेऽह्न्युपवसेदेष सान्तपनो विधिः॥ ११६
पृथक्सान्तपनैर्द्रव्यैः षडहः सोपवासकः।
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनं स्मृतम्॥ ११७
त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुङ्क्ते त्वयाचितम्।
त्र्यहं परञ्च नाश्नीयात् प्राजापत्यो विधिः स्मृतः॥ ११८
सायन्तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः।
अयाचिते चतुर्विंश परेऽह्न्यनशनं स्मृतम्॥ ११९
एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्व्ववत्।
त्र्यहं परञ्च नाश्नीयादतिकृच्छ्रं तदुच्यते॥ १२०
कुक्कुटाण्डप्रमाणं स्याद्यावद्वास्य मुखं विशेत्।
एतद्ग्रास विजानीयाच्छुद्ध्यर्थं कायशोधनम्॥ १२१
त्र्यहमुष्णं पिवेदापस्त्र्यहमुष्णं पिवेत् पयः।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम्॥ १२२
षट्पलानि पिवेदापस्त्रिपलन्तु पयः पिवेत्।
पलमेकन्तु वै सर्पिस्तप्तकृच्छ्रं विधीयते॥ १२३
दध्ना च त्रिदिनं भुङ्क्ते त्र्यहं भुङ्क्ते च सर्पिषा।
क्षीरेण तु त्र्यहं भुङ्क्ते वायुभक्षो दिनत्रयम्॥ १२४
त्रिपलं दधिक्षीरेण पलमेकन्तु सर्पिषा।
एतदेव व्रतं पुण्यं वैदिकं कृच्छ्रमुच्यते॥ १२५
एकभुक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः॥ १२६
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्।
द्वादशाहोपवासेन पराकः परिकीर्त्तितः॥ १२७

पिण्याकदधिशक्तूनां ग्रासश्च प्रतिवासरम् ।
एकैकमुपवासः स्यात् सौम्यकृच्छ्रः प्रकीर्त्तितः ॥ १२८
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ।
तुलापुरुष इत्येष ज्ञेयः पञ्चदशाहिकः ॥ १२९
कपिलागोस्तु दुग्धायाः धारोष्णं यत् पयः पिवेत् ।
एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत् ॥ १३०
निशायां भोजनञ्चैव तत्ज्ञेयं नक्तमेव तु ।
अनादिष्टेषु पापेषु चन्द्रायणमथोदितम् ॥ १३१
अग्निष्टोमादिभिर्यज्ञैरिष्टैर्द्विगुणदक्षिणैः ।
यत् फलं समवाप्नोति तथा कृच्छ्रैस्तपोधन ॥ १३२
वेदाभ्यासरतः क्षान्तो धर्म्मशास्त्राण्यवेक्षयेत् ।
शौचाचारसमायुक्तो गृहस्थोऽपि हि मुच्यते ॥ १३३
उक्तमेतद्द्विजातीनां महर्षे श्रूयतामिति ।
अतः परं प्रवक्ष्यामि स्त्रीशूद्रपतनानि च ॥ १३४
जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनञ्चैव स्त्रीशूद्रपतनानि षट् ॥ १३५
जीवद्भर्त्तरि या नारी उपोष्य व्रतचारिणी ।
आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत् ॥ १३६
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिवेत् ।
शङ्करस्यापि विष्णोर्वा प्रयाति परमं पदम् ॥ १३७
जीवद्भर्त्तरि वामाङ्गी मृते वापि सदक्षिणा ।
श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा ॥ १३८
सोमः शौचं ददौ तासां गन्धर्व्वाश्च तथाङ्गिराः ।
पावकः सर्व्वमेध्यञ्च मेध्यं वै योषितां सदा ॥ १३९

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते।
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च॥ १४०
वेदशास्त्राण्यधीते यः शास्त्रार्थञ्च निषेवते।
तदासौ वेदवित् प्रोक्तो वचनं तस्य पावनम्॥ १४१
एकोऽपि वेदविद्धर्म्मं यं व्यवस्येद्द्विजोत्तमः।
स ज्ञेयः परमो धर्म्मो नाज्ञानामयुतायुतैः॥ १४२
पावका इव दीप्यन्ते जपहोमैर्द्विजोत्तमाः।
प्रतिग्रहेण नश्यन्ति वारिणा इव पावकः॥ १४३
तान् प्रतिग्रहजान् दोषान् प्राणायामैर्द्विजोत्तमाः।
उत्सादयन्ति विद्वांसो वायुर्मेघानिवाम्बरे॥ १४४
भुक्त्वाचम्य यदा विप्र आर्द्रपाणिस्तु तिष्ठति।
लक्ष्मीर्बलं यशस्तेज आयुश्चैव प्रहीयते॥ १४५
यस्तु भोजनशालायामासनस्थ उपस्पृशेत्।
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्॥ १४६
पात्रापरिस्थितं पात्र यः संस्थाप्य उपस्पृशेत्।
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत्॥ १४७
हस्तं प्रक्षाल्य यस्त्वापः पिवेद्भुक्त्वा द्विजोत्तमः।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः॥ १४८
नास्ति वेदात् परं शास्त्रं नास्ति मातुः परो गुरुः।
नास्ति दानात् परं मित्रमिह लोके परत्र च।
अपात्रे ह्यपि यद्दत्तं दहत्यासप्तमं कुलम्॥ १४९
हव्यं देवा न गृह्णन्ति कव्यञ्च पितरस्तथा।
आयसेन तु पात्रेण यदन्नमुपदीयते।
अन्नं विष्ठासमं भोक्तुर्दाता च नरकं व्रजेत्॥ १५०

इतरेण तु पात्रेण दीयमानं विचक्षणः ।
न दद्याद्वामहस्तेन आयसेन कदाचन ॥ १५१
मृन्मयेषु च पात्रेषु यः श्राद्धे भोजयेत् पितॄन् ।
अन्नदाता च भोक्ता च तावेव नरकं व्रजेत् ॥ १५२
अभावे मृन्मये दद्यादनुज्ञातस्तु तैर्द्विजैः ।
तेषां वचः प्रमाणं स्याद्दत्तस्यान्नृतमेव च ॥ १५३
सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ।
भिक्षादातुर्न धर्मोऽस्ति भिक्षुर्भुङ्क्ते तु किल्बिषम् ॥ १५४
न च कांस्येषु भुञ्जीयादापद्यपि कदाचन ।
मलाशी यतयोऽश्नन्ति गृहस्थः कांस्यभाजनैः ॥ १५५
कांस्यकस्य च यत् पापं गृहस्थस्य तथैव च ।
कांस्यभोजी यतिश्चैव प्राप्नुयात् किल्बिषं तयोः ॥ १५६
सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च ।
भुञ्जन् भिक्षुर्न दुष्येत दुष्येच्चैव परिग्रहात् ॥ १५७
यदि हस्ते जलं दद्याद्भिक्षां दद्यात् पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ १५८
चरेन्माधुकरीं वृत्तिमपि म्लेच्छकुलादपि ।
एकान्नं नैव भोक्तव्यं बृहस्पतिकुलादपि ॥ १५९
अनापदि चरेद्यस्तु सिद्धं भैक्षं गृहे वसन् ।
दशरात्रं पिबेद्ब्रह्मापस्तु त्र्यहमेव च ॥ १६०
गोमूत्रेण तु सम्मिश्रं यावकं स्तपाचितम् ।
एतद्ब्रह्ममिति प्रोक्तं भगवानत्रिरब्रवीत् ॥ १६१
ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुका स्मृताः ॥ १६२

षण्मासान् कामयेन्मर्त्त्यो गर्भिणीमेव च स्त्रियम् ।
आदन्तजननादूर्द्ध्वमेवं धर्म्मो विधीयते ॥ १६३

ब्रह्महा प्रथमश्चैव द्वितीयं गुरुतल्पगः ।
तृतीयन्तु सुरापोऽयं चतुर्थं स्तेयमुच्यते ।
पापानाञ्चैव संसर्गः पञ्चमं पातकं महत् ॥ १६४

एषामेव विशुद्ध्यर्थं चरेद्वर्षाण्यनुक्रमात् ।
त्रीणिकृच्छ्राण्यकामश्चेद्ब्रह्महत्यां व्यपोहति ॥ १६५

अर्द्धन्तु ब्रह्महत्यायाः क्षत्रियेषु विधीयते ।
षड्भागो द्वादशश्चैव विट्शूद्रयोस्तथा भवेत् ॥ १६६

त्रीन् मासान् नक्तमश्नीयाद्भूमौ शयनमेव च ।
स्त्रीघातः शुध्यतेऽप्येवं चरेत् कृच्छ्राब्दमेव च ॥ १६७

रजकः शैलुषश्चैव वेणुकर्म्मोपजीवनः ।
एतेषां यस्तु भुङ्क्ते वै द्विजश्चान्द्रायणं चरेत् ॥ १६८

सर्व्वान्त्यजानां गमने भोजने सम्प्रवेशने ।
पराकेण विशुद्धिः स्याद्भगवानत्रिरब्रवीत् ॥ १६९

चाण्डालभाण्डे यत्तोयं पीत्वा चैव द्विजोत्तमः ।
गोमूत्रयावकाहारः सप्तत्रिंशदहान्यपि ॥ १७०

संस्पृष्टं यस्तु पक्वान्नमन्त्यजैर्व्वाप्युदक्यया ।
अज्ञानाद्ब्राह्मणोऽश्नीयात् प्राजापत्यार्द्धमाचरेत् ॥ १७१

चाण्डालान्नं यदा भुङ्क्ते चातुर्व्वर्णस्य निष्कृतिः ।
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् ॥ १७२

षड्रात्रमाचरेद्वैश्यः पञ्चगव्यं तथैव च ।
त्रिरात्रमाचरेच्छूद्रो दानं दत्त्वा विशुध्यति ॥ १७३

ब्राह्मणो वृक्षमारूढ़श्चाण्डालो मूलसंस्थितः।
फलान्यत्ति स्थितं तत्र प्रायश्चित्तं कथं भवेत्॥ १७४
ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत्।
नक्तभोजो भवेद्विप्रो घृतं प्राश्य विशुध्यति॥ १७५
एकवृक्षसमारूढ़श्चाण्डालो ब्राह्मणस्तथा।
फलान्यत्ति स्थितं,तत्र प्रायश्चित्तं कथं भवेत्॥ १७६
ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत्।
अहोरात्रोषिता भूत्वा पञ्चगव्येन शुध्यति॥ १७७
एकशाखासमारूढ़श्चाण्डालो ब्राह्मणो यदा।
फलान्यत्ति स्थितं तत्र प्रायश्चित्तं कथं भवेत्॥ १७८
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति॥ १७९
स्त्रिया म्लेच्छस्य सम्पर्काच्छुद्धिः सान्तपनं तथा।
तप्तकृच्छ्रं पुनः कृत्वा शुद्धिरेषाभिधीयते॥ १८०
संवर्त्तत यथा भार्य्यां गत्वा म्लेच्छस्य सङ्गताम्।
सचेलं स्नानमादाय घृतस्य प्राशनेन च॥ १८१
स्नात्वा नद्युदकैश्चैव घृतं प्राश्य विशुध्यति।
संगृहीतामपत्यार्थमन्यैरपि तथा पुनः॥ १८२
चाण्डालम्लेच्छश्वपचकपालव्रतधारिणः।
अकामतः स्त्रियो गत्वा पराकेन विशुद्ध्यति॥ १८३
कामतस्तु प्रसूता वा तत्समो नात्र संशयः।
स एव पुरुष स्तत्र गर्भो भूत्वा प्रजायते॥ १८४
तैलाभ्यक्तो घृताभ्यक्तो विण्मूत्रं कुरुते द्विजः।
तैलाभ्यक्तो घृताभ्यक्तश्चाण्डालं स्पृशते द्विजः।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ १८५

केशकीटनखस्नायु अस्थिकण्टकमेव च ।
स्पृष्ट्वा नद्युदके स्नात्वा घृतं प्राश्य विशुध्यति ॥ १८६
मत्स्यास्थिजम्बुकास्थीनि नखशुक्तिकपर्द्दिकाः ।
स्पृष्ट्वा स्नात्वा हेमतप्तघृतं पीत्वा विशुध्यति ॥ १८७
गोकुले कन्दुशालायां तैलचक्रेक्षुचक्रयोः ।
अमीमांस्यानि शौचानि स्त्रीणाञ्च व्याधितस्य च ॥ १८८
न स्त्री दूष्यति जारेण ब्राह्मणोऽवेदकर्म्मणा ।
नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्म्मणा ॥ १८९
पूर्व्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्व्ववह्निभिः ।
भुञ्जते मानवाः पश्चान्न ता दुष्यन्ति कर्हिचित् ॥ १९०
असवर्णैस्तु यो गर्भः स्त्रीणां योनौ निषिच्यते ।
अशुद्धा सा भवेन्नारी यावद्गर्भं न मुञ्चति ॥ १९१
विमुक्ते तु ततः शल्ये रजश्चापि प्रदृश्यते ।
तदा सा शुध्यते नारी विमलं काञ्चनं यथा ॥ १९२
स्वयं विप्रतिपन्ना या यदि वा विप्रलारिता ।
वलान्नारी प्रभुक्ता वा चौरभुक्ता तथापि वा ॥ १९३
न त्याज्या दूषिता नारी न कामोऽस्या विधीयते ।
ऋतुकाल उपासीत पुष्पकालेन शुध्यति ॥ १९४
रजकश्चर्म्मकारश्च नटो वरुड़ एव च ।
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥ १९५
एषां गत्वा स्त्रियो मोहाद्भुक्त्वा च प्रतिगृह्य च ।
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ॥ १९६
सकृद्भुक्ता तु या नारी म्लेच्छैर्व्वा पापकर्म्मभिः ।
प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन तु ॥ १९७

बलाद्धृता स्वयं वापि परप्रतारिता यदि ।
सकृद्भुक्ता तु या नारी प्राजापत्येन शुध्यति ॥ १९८

प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तेन तद्व्रतं तासां विनश्यति कदाचन ॥ १९९

मद्यसंस्पृष्टकुम्भेषु यत्तोयं पिबति द्विजः ।
कृच्छ्रपादेन शुध्येत पुनः संस्कारमर्हति ॥ २००

अन्त्यजस्य तु ये वृक्षा बहुपुष्पफलोपगाः ।
उपभोग्यास्तु ते सर्व्वे पुष्पेषु च फलेषु च ॥ २०१

चाण्डालेन तु संस्पृष्टं यत्तोयं पिबति द्विजः ।
कृच्छ्रपादेन शुध्येत आपस्तम्बोऽब्रवीन्मुनिः ॥ २०२

श्लेष्मोपानहविण्मूत्रस्त्रीरजोमद्यमेव च ।
एभिः सन्दुषिते कूपे तोयं पीत्वा कथं विधिः ॥ २०३

एकं द्व्यहं त्र्यहञ्चैव द्विजातीनां विशोधनम् ।
प्रायश्चित्तं पुनश्चैव नक्तं शूद्रस्य दापयेत् ॥ २०४

सद्यो वान्ते सचेलन्तु विप्रन्तु स्नानमाचरेत् ।
पर्य्युषिते त्वहोरात्रमतिरिक्ते दिनत्रयम् ॥ २०५

शिरःकण्ठोरुपादांश्च सुरया यस्तु लिप्यते ।
दशषट्त्रितयैकाहं चरेदेवमनुक्रमात् ॥ २०६

अत्राप्युदाहरन्ति ।

प्रमादान्मद्यमसुरां सकृत् पीत्वा द्विजोत्तमः ।
गोमूत्रयावकाहारो दशरात्रेण शुध्यति ॥ २०७

मद्यपस्य निषादस्य यस्तु भुङ्क्ते द्विजोत्तमः ।
देवा न भुञ्जते तस्य न पिबन्ति हविर्जलम् ॥ २०८

चितिभ्रष्टा तु या नारी ऋतुभ्रष्टा च व्याधितः।
प्राजापत्येन शुध्येत ब्राह्मणान् भोजयेद्दश॥ २०९
ये प्रत्यवसिता विप्राः प्रव्रज्याग्निजलादितः।
अनाशकान्निवर्त्तन्त चिकीर्षन्ति गृहस्थितिम्॥ २१०
धारयेत्रीणि कृच्छ्राणि चान्द्रायणमथापि वा।
जातकर्मादिकं प्रोक्तं पुनःसंस्कारमर्हति॥ २११
नाशौचं नोदकं नाश्रु नोपवादानुकम्पने।
ब्रह्मदण्डहतानान्तु न कार्य्यं कटधारणम्॥ २१२
स्नेहं कृत्वा भयादिभ्यो यस्त्वेतानि समाचरेत्।
गोमूत्रयावकाहारः कृच्छ्रमेकं विशोधनम्॥ २१३
वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः॥ २१४
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयम्।
तृतीये तुदकं कृत्वा चतुर्थे श्राद्धमाचरेत्॥ २१५
यस्यैकापि गृहे नास्ति धेनुर्वत्सानुचारिणी।
मङ्गलानि कुतस्तस्य कुतस्तस्य तमःक्षयः॥ २१६
अतिदोहातिवाहाभ्यां नासिकाभेदनेन वा।
नदीपर्व्वतसंरोधमृते पादोनमाचरेत्॥ २१७
अष्टागवं धर्म्महलं षड्गवं व्यावहारिकम्।
चतुर्गवं नृशंसानां द्विगव्यं गववध्यकृत्॥ २१८
द्विगवं वाहयेत् पादं मध्याह्नन्तु चतुर्गवम्।
षड्गवन्तु त्रिपादोक्तं पूर्णाहस्त्वष्टभिः स्मृतः॥ २१९
काष्ठलोष्ट्रशिलात् गोघ्नः कृच्छ्रं सान्तपनंचरेत्।
प्राजापत्यं चरेन्मृत्स्ना अतिकृच्छ्रन्तु आयसैः॥ २२०

प्रायश्चित्ते ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम् ।
अनडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम् ॥ २२१

शरभोष्ट्रहयान्नागान् सिंहशार्दूलगर्द्दभान् ।
हत्वा च शूद्रहत्यायाः प्रायश्चित्तं विधीयते ॥ २२२

मार्ज्जारगोधानकुलमण्डूकांश्च पतत्रिणः ।
हत्वा त्र्यहं पिवेत् क्षीरं कृच्छ्रं वा पादिकं चरेत् ॥ २२३

चाण्डालस्य च संस्पृष्टं विण्मूत्रस्पृष्टमेव वा ।
त्रिरात्रेण विशुद्धिः स्याद्भुक्तोच्छिष्टं तथाचरेत् ॥ २२४

वापीकूपतड़ागानां दूषितानाञ्च शोधनम् ।
उद्धरेद्घटशतं पूर्णं पञ्चगव्येन शुध्यति ॥ २२५

अस्थिचर्म्मावसिक्तेषु खरश्वानादिदूषिते ।
उद्धरेदुदकं सर्व्वं शोधनं परिमार्ज्जनम् ॥ २२६

गोदोहने चर्म्मपुटे च तोयं
यन्त्राकरे कारुकशिल्पिहस्ते
स्त्रीवालवृद्धाचरितानि यान्य-
प्रत्यक्षदृष्टानि शुचीनि तानि ॥ २२७

प्राकाररोधे विषमप्रदेशे
सेनानिवेशे भवनस्य दाहे ।
आरब्धयज्ञेषु महोत्सवेषु
तथैव दोषा न विकल्पनीयाः ॥ २२८

प्रपास्वरण्ये घटके च कूपे
द्रोण्यां जलं कोशविनिर्गतञ्च ।
श्वपाकचण्डालपरिग्रहे तु
पीत्वा जलं पञ्चगव्येन शुद्धिः ॥ २२९

रेतोविण्मूत्रसंस्पृष्टं कौपं यदि जलं पिबेत्।
त्रिरात्रेणैव शुद्धिः स्यात् कुम्भे सान्तपनं तथा॥ २३०
छिन्नभिन्नशवं यत् स्यादज्ञानादुदकं पिबेत्।
प्रायश्चित्तं चरेत् पीत्वा तप्तकृच्छ्रं द्विजोत्तमः॥ २३१
उष्ट्रीक्षीरं खरीक्षीरं मानुषीक्षीरमेव च।
प्रायश्चित्तं चरेत् पीत्वा तप्तकृच्छ्रं द्विजोत्तमः॥ २३२
वर्णबाह्येन संस्पृष्ट उच्छिष्टस्तु द्विजोत्तमः।
पञ्चरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ २३३
शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम्।
चर्म्मभाण्डैस्तु धाराभिस्तथा यन्त्रोद्धृतं जलम्॥ २३४
चण्डालेन तु संस्पृष्टः स्नानमेव विधीयते।
उच्छिष्टस्तु च संस्पृष्टस्त्रिरात्रेणैव शुध्यति॥ २३५
आकराहृतवस्तूनि नाशुचीनि कदाचन।
आकराः शुचयः सर्व्वे वर्ज्जयित्वा सुराकरम्॥ २३६
भ्रष्टाभ्रष्टयवाश्चैव तथैव चणकाः स्मृताः।
खर्ज्जूरञ्चैव कर्पूरमन्यद्भ्रष्टतरं शुचि॥ २३७
अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च।
अदुष्टाः सततं धारा वातोद्धूताश्च रेणवः॥ २३८
बहूनामेव लग्नानामेकश्चेदशुचिर्भवेत्।
अशौचमेकमात्रस्य नेतरेषां कथञ्चन॥ २३९
एकपङ्क्त्युपविष्टानां भोजनेषु पृथक् पृथक्।
यद्येको लभते नीलीं सर्व्वे तेऽशुचयः स्मृताः॥ २४०
यस्य पटे पट्टसूत्रे नीली रक्ता हि दृश्यते।
त्रिरात्रं तस्य दातव्यं शेषाश्चैकोपवासिनः॥ २४१

आदित्येऽस्तमिते रात्रावस्पृश्यं स्पृशते यदि ।
भगवन् केन शुद्धिः स्यात् ततो ब्रूहि तपोधन ॥ २४२
आदित्येऽस्तमिते रात्रौ स्पृशन् नीतं दिवा जलम् ।
तेनैव सर्व्वशुद्धिः स्याच्छवस्पृष्टन्तु वर्ज्जयेत् ॥ २४३
देशकालं वयः शक्तिं पापञ्चावेक्षयेत् ततः ।
प्रायश्चित्तं प्रकल्प्यं स्याद्यस्य चोक्ता न निष्कृतिः ॥ २४४
देवयात्राविवाहेषु यज्ञप्रकरणेषु च ।
उत्सवेषु च सर्व्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥ २४५
आरनालं तथा क्षीरं कन्दुकं दधि शक्तवः ।
स्नेहपक्वञ्च तक्रञ्च शूद्रस्यापि न दुष्यति ॥ २४६
आर्द्रमांसं घृतं तैलं स्नेहाश्च फलसम्भवाः ।
अन्त्यभाण्डस्थिता एते निष्क्रान्ताः शुद्धिमाप्नुयुः ॥ २४७
अज्ञानात् पिबते तोयं ब्राह्मणः शूद्रजातिषु ।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुध्यति ॥ २४८
आहिताग्निस्तु यो विप्रो महापातकवान् भवेत् ।
अप्सु प्रक्षिप्य पात्राणि पश्चादग्निं विनिर्द्दिशेत् ॥ २४९
योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ २५०
वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः ।
प्राणानप्सु त्रिराचम्य घृतं प्राश्य विशुध्यति ॥ १५१
वैदिके लौकिके वापि हुतोच्छिष्टे जले स्थितौ ।
वैश्वदेवं प्रकुर्व्वीत पञ्चसूनापनुत्तये ॥ २५२
कनीयान् गुणवान् श्रेष्ठः श्रेष्ठश्चेन्निर्गुणो भवेत् ।
पूर्व्वं पाणिं गृहीत्वा च गृह्याग्निं धारयेद्बुधः ॥ २५३

ज्येष्ठश्चेद्यदि निर्द्दोषो गृह्णीयादग्निमग्रतः ।
नित्यं नित्यं भवेत्तस्य ब्रह्महत्या न संशयः ॥ २५४
महापातकसंस्पृष्टः स्नानमेव विधीयते ।
संस्पृष्टस्य यदा भुङ्क्ते स्नानमेव विधीयते ॥ २५५
पतितैः सह संसर्गं मासार्द्धं मासमेव वा ।
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति ॥ २५६
कृच्छ्रार्द्धं पतितस्यैव सकृद्भुक्त्वा द्विजोत्तमः ।
अविज्ञानाच्च तद्भुक्त्वा कृच्छ्रं सान्तपनं चरेत् ॥ २५७
पतितान्नं यदाभुक्तं भुक्तं चाण्डालवेश्मनि ।
मासार्द्धन्तु पिवेद्वारि इति शातातपोऽब्रवीत् ॥ २५८
गोब्राह्मणहतानाञ्च पतितानां तथैव च ।
अग्निना न च संस्कारः शङ्खस्य वचनं यथा ॥ २५९
यश्चाण्डालीं द्विजो गच्छेत् कथञ्चित् काममोहितः ।
त्रिभिः कृच्छ्रैर्व्विशुध्येत प्राजापत्यानुपूर्व्वशः ॥ २६०
पतिताच्चान्नमादाय भुक्त्वा वा ब्राह्मणो यदि ।
कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं विनिर्द्दिशेत् ॥ २६१
अन्त्यहस्ताच्च्युते क्षिप्तं काष्ठलोष्ट्रतृणानि च ।
न स्पृशेत्तुतथोच्छिष्टमहोरात्रं समाचरेत् २६२
चाण्डालं पतितं म्लेच्छं मद्यभाण्डं रजस्वलाम् ।
द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत् ॥ २६३
अतः परं न भुञ्जीत त्यक्त्वान्नं स्नानमाचरेत् ।
ब्राह्मणैः समनुज्ञातस्त्रिरात्रमुपवासयेत् ॥
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥ २६४

भुञ्जानः संस्पृशेद्यस्तु वायसं कुक्कुटं तथा।
त्रिरात्रेणैव शुद्धिः स्यादथोच्छिष्टस्त्वहेन तु॥ २६५
आरूढो नैष्ठिके धर्म्मे यस्तु प्रच्यवते पुनः।
चान्द्रायणं चरेन्मासमिति शातातपोऽब्रवीत्॥ २६६
पशुवेश्याभिगमने प्राजापत्यं विधीयते।
गवां गमे मनुप्रोक्तं व्रतं चान्द्रायणं चरेत्॥ २६७
अमानुषीषु गोवर्ज्जमुदक्यायामयोनिषु।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत्॥ २६८
उदक्यां सूतिकां वापि अन्त्यजां स्पृशते यदि।
त्रिरात्रेणैव शुद्धिः स्याद्विधिरेष पुरातनः॥ २६९
संसर्गं यदि गच्छेच्चेदुदक्यां वा तथान्त्यजैः।
प्रायश्चित्ती स विज्ञेयः पूर्व्वं स्नानं समाचरेत्॥ २७०
एकरात्रं चरेन्मूत्रे पुरीषे तु दिनत्रयम्।
दिनत्रयं तथा पाने मैथुने पञ्च सप्त वा॥ २७१
भोजने तु प्रसक्तानां प्राजापत्यं विधीयते।
दन्तकाष्ठे त्वहोरात्रमेष शौचविधिः स्मृतः॥ २७२
रजस्वला यदा स्पृष्टा श्वानचण्डालवायसैः।
निराहारा भवेत्तावत् स्नात्वा कालेन शुध्यति॥ २७३
रजस्वला यदा स्पृष्टा उष्ट्रजम्बुकशूकरैः।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति॥ २७४
स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या ब्राह्मणी च या।
एकरात्रं निराहारा पञ्चगव्येन शुध्यति॥ २७५
स्पृष्टा रजस्वलान्योन्यं ब्राह्मण्या क्षत्रियी च या।
त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा॥ २७६

स्पृष्टा रजस्वलान्येन्यं ब्राह्मण्या वैश्यसम्भवा ।
चतुरात्रं निराहारा पञ्चगव्येन शुध्यति ॥ २७७
स्पृष्टा रजस्वलान्येन्यं ब्राह्मण्या शूद्रसम्भवा ।
षड्रात्रेण विशुद्धिः स्याद्ब्राह्मणी कामकारतः ॥ २७८
अकामतश्चरेदर्द्धं ब्राह्मणी सर्व्वतः स्पृशेत् ।
चतुर्णामपि वर्णानां शुद्धिरेषा प्रकीर्त्तिता ॥ २७९
उच्छिष्टेन तु संस्पृष्टो ब्राह्मणो ब्राह्मणेन यः ।
भोजने मूत्रचारे च शङ्खस्य वचनं यथा ॥ २८०
स्नानं ब्राह्मणसंसर्गे जपहोमौ तु क्षत्रिये ।
वैश्ये नक्तञ्च कुर्व्वीत शूद्रे चैव उपोषणम् ॥ २८१
चर्म्मको रजको वैणो धीवरो नटकस्तथा ॥
एतान् स्पृष्ट्वा द्विजो मोहादाचामेत् प्रयतोऽपि सन् ॥ २८२
एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत् ।
उच्छिष्टैस्तैस्त्रिरात्रं स्याद्घृतं प्राश्य विशुध्यति ॥ २८३
यस्तुच्छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति ।
स च स्नानं प्रकुर्व्वीत घृतं प्राश्य विशुध्यति ॥ २८४
अभिशस्तो द्विजोऽरण्ये ब्रह्महत्याव्रतं चरेत्
मासोपवासं कुर्व्वीत चान्द्रायणमथापि वा ॥ २८५
वृथामिथ्योपयोगेन भ्रूणहत्याव्रतं चरेत् ।
अब्भक्षो द्वादशाहेन पराकेणैव शुध्यति ॥ २८६
शठश्च ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ।
निर्गुणं सगुणो हत्वा पराकव्रतमाचरेत् ॥ २८७
उपपातकसंयुक्तो मानवो म्रियते यदि ।
तस्य संस्कारकर्त्ता च प्राजापत्यद्वयं चरेत् ॥ २८८

प्रभुञ्जानोऽतिसस्नेहं कदाचित् स्पृश्यते द्विजः।
त्रिरात्रमाचरेत्तत्तैर्निस्नेहमुपवासयेत्॥ २८९
विड़ालकाकाद्युच्छिष्टं जग्ध्वा श्वनकुलस्य च।
केशकीटावपन्नञ्च पिवेद्ब्राह्मीं सुवर्चसम्॥ २९०
उष्ट्रयानं समारुह्य खरयानञ्च कामतः।
स्नात्वा च विप्रो दिग्वासाः प्राणायामेन शुध्यति॥ २९१
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिःपठेद्वा यतप्राणः प्राणायामः स उच्यते॥ २९२
शकृद्द्विगुणगोमूत्रं सर्पिर्दद्याच्चतुर्गुणम्।
क्षीरमष्टगुणं देयं पञ्चगव्ये तथा दधि॥ २९३
पञ्चगव्यं पिवेच्छूद्रो ब्राह्मणस्तु सुरां पिवेत्।
उभौ तौ तुल्यदोषौ च वसतो नरके चिरम्॥ २९४
अजा गावो महिष्यश्च अमेध्यं भक्षयन्ति याः।
दुग्धं हव्ये च कव्ये च गोमयं न विलेपयेत्॥ २९५
ऊनस्तनीमधिकां वा या चान्या स्तनपायिनी।
तासां दुग्धं न होतव्यं हुतञ्चेवाहुतं भवेत्॥ २९६
ब्राह्मौदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्॥ २९७
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम्।
स्वसुतान्नञ्च यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम्॥ २९८
स्वसुता अप्रजाता च नाश्नीयात्तद्गृहे पिता।
अन्नं भुङ्क्ते तु मायया पूयं स नरकं व्रजेत्॥ २९९
अधीत्य चतुरो वेदान् सर्व्वशास्त्रार्थतत्त्ववित्।
नरेन्द्रभवने भुक्त्वा विष्ठायां जायते कृमिः॥ ३००

सूर्य्यवातनखाग्राम्बु स्नानवस्त्रघटोदकम् ।
मार्ज्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवाकृतम् ॥ २१२
मार्ज्जनीरजकेशाम्बु देवतायतनोद्भवं ।
तेनावगुण्ठितो यस्तु गङ्गाम्भःप्लुत एव सः ॥ २१३
मृत्तिकाः सप्त न ग्राह्या वल्मीके मूषिकस्थले ।
अन्तर्जले श्मशानान्त वृक्षमूले सुरालये ।
वृषभैश्च तथोत्खाते श्रेयस्कामैः सदा बुधैः ॥ २१४
शुचौ देशे तु संग्राह्या कर्कराश्मविवर्ज्जिता ॥ २१५
पुरीषे मैथुने होमे प्रस्रावे दन्तधावने ।
स्नानभोजनजप्येषु सदा मौनं समाचरेत् ॥ २१६
यस्तु संवत्सरं पूर्णं भुङ्क्ते मौनेन सर्व्वदा ।
युगकोटिसहस्रेषु स्वर्गलोके महीयते ॥ २१७
स्नानं दानं जपं होमं भोजनं देवतार्च्चनम् ।
प्रौढ़पादो न कुर्व्वीत स्वाध्यायं पितृतर्पणम् ॥ २१८
सर्व्वस्वमपि यो दद्यात् पातयित्वा द्विजोत्तमम् ।
नाशयित्वा तु तत् सर्व्वं भ्रूणहत्याफलं लभेत् ॥ २१९
ग्रहणोद्वाहसंक्रान्तौ स्त्रीणाञ्च प्रसवे तथा ।
दानं नैमित्तिकं ज्ञेयं रात्रौ चापि प्रशस्यते ॥ २२०
क्षौमजं वाथ कार्पासं पट्टसूत्रमथापि वा ।
यज्ञोपवीतं यो दद्याद्वस्त्रदानफलं लभेत् ॥ २२१
कांस्यस्य भाजनं दद्याद्घृतपूर्णं सुशोभनम् ।
तथा भक्त्या विधानेन अग्निष्टोमफलं लभेत् ॥ २२२
श्राद्धकाले तु यो दद्याच्छोभनौ च उपानहौ ।
स गच्छन्नन्यमार्गेऽपि अन्नदानफलं लभेत् ॥ २२३

तैलपात्रन्तु यो दद्यात् सम्पूर्णन्तु समाहितः।
स गच्छति ध्रुवं स्वर्गं नरो नास्त्यत्र संशयः॥ ३२४
दुर्भिक्षे अन्नदाता च सुभिक्षे च हिरण्यदः।
पानीयदस्त्वरण्ये च स्वर्गलोके महीयते॥ ३२५
यावद्वत्सप्रसूता गौस्तावत् सा पृथिवी स्मृता।
पृथिवी तेन दत्ता स्याद्दोहश्रीं गां ददाति यः॥ ३२६
तेनाग्नयो हुताः सम्यक् पितरस्तेन तर्पिताः।
देवाश्च पूजिताः सर्व्वे यो ददाति गवाह्निकम्॥ ३२७
जन्मप्रभृति यत् पापं मातृकं पैतृकं तथा।
तत् सर्व्वं नश्यति क्षिप्रं वस्त्रदानान्न संशयः॥ ३२८
कृष्णाजिनञ्च यो दद्यात् सर्व्वोपस्करसंयुतम्।
उद्धरेन्नरकस्थानात् कुलान्येकोत्तरं शतम्॥ ३२९
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः।
शूलपाणिस्तु भगवानभिनन्दन्ति भूमिदम्॥ ३३०
वालुकानां कृता राशिर्यावत् सप्तर्षिमण्डलम्।
गते वर्षे शते चैव पलमेकंविशीर्य्यति॥ ३३१
क्षयो न दृश्यते तस्य कन्यादानेन चैव हि।
आतुरे प्राणदाता च त्रीणि दानफलानि च॥ ३३२
सर्व्वेषामेव दानानां विद्यादानं ततोऽधिकम्।
पुत्रादिस्वजने दद्याद्विप्राय च न कैतवे।
सकामः स्वर्गमाप्नोति निष्कामो मोक्षमाप्नुयात्॥ ३३३
ब्राह्मणे वेदविदुषि सर्व्वशास्त्रविशारदे।
मातृपितृपरे चैव ऋतुकालाभिगामिनि॥ ३३४
शीलचारित्रसम्पूर्णे प्रातःस्नानपरायणे।

तस्यैव दीयते दानं यदीच्छेच्छ्रेय आत्मनः ॥ २३५
सन्त्यज्य विदुषो विप्रानन्येभ्योऽपि प्रदीयते ।
तत् कार्य्यं नैव कर्त्तव्यं न दृष्टं न श्रुतं मया ॥ २३६
अतःपरं प्रवक्ष्यामि श्राद्धकर्म्मणि ये द्विजाः ।
पितॄणामक्षयं दानं दत्तं येषान्तु निष्फलम् ॥ २३७
न हीनाङ्गो न रोगी च श्रुतिस्मृतिविवर्ज्जितः ।
नित्यञ्चानृतवादी च तांस्तु श्राद्धे न भोजयेत् ॥ २३८
हिंसारतञ्च कपटं उपगुह्य सुतश्च यः ।
किङ्करं कपिलं काणं श्वित्रिणं रोगिणं यथा ॥ २३९
दुश्चर्म्माणं शीर्णकेशं पाण्डुरोगं जटाधरम् ।
भारवाहकमुग्रञ्च द्विभार्य्यं वृषलीपतिम् ॥ २४०
भेदकारी भवेच्चैव बहुपीड़ाकरोऽपि वा ।
हीनातिरिक्तगात्रो वा तमप्यपनयेत्तथा ॥ २४१
बहुभक्तो दीनमुखो मत्सरी क्रूरबुद्धिमान् ।
एतेषां नैव दातव्यं कदाचिद्धि प्रतिग्रहः ॥ २४२
अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः ।
अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः ॥ २४३
श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्त्तिते ।
काणः स्यादेकहीनोऽपि द्वाभ्यामन्धः प्रकीर्त्तितः ॥ २
न श्रुतिर्न स्मृतिर्यस्य न शीलं न कुलं यतः ।
तस्य श्राद्धं न दातव्यं त्वन्धकस्यात्रिरब्रवीत् ॥ २४५
तस्माद्वेदेन शास्त्रेण ब्राह्मणं ब्राह्मणस्य तु ।
न चैकेनैव वेदेन भगवानत्रिरब्रवीत् ॥ २४६
गोत्रशीलैश्चनैर्गुणैः ...

लौकिकञ्चैव शास्त्रोक्तं पश्येच्चैवाधरोत्तरम्।
वेदैश्च ऋषिभिर्गीतं दृष्टिमान् शास्त्रवेदवित्॥ ३४७
व्रतिनञ्च कुलीनञ्च श्रुतिस्मृतिरतं सदा।
तादृशं भोजयेच्छ्राद्धे पितृणामक्षयं भवेत्॥ ३४८
यावच्च ग्रसते ग्रासान् पितृणां दीप्ततेजसाम्।
पिता पितामहश्चैव तथैव प्रपितामहः॥ ३४९
नरकस्था विमुच्यन्ते ध्रुवं यान्ति त्रिपिष्टपम्।
तस्माद्विप्रं परीक्षेत श्राद्धकाले प्रयत्नतः॥ ३५०
न निर्व्वपति यः श्राद्धं प्रमीतपितृको द्विजः।
इन्दुक्षये मासि मासि प्रायश्चित्ती भवेत्तु सः॥ ३५१
सूर्य्ये कन्यागते कुर्य्याच्छ्राद्धं यो न गृहाश्रमी।
धनं पुत्राः कुलं तस्य पितृनिश्वासपीड़या॥ ३५२
कन्यागते सवितरि पितरो यान्ति सत्सुतान्।
शून्या प्रेतपुरी सर्व्वा यावद्वृश्चिकदर्शनम्॥ ३५३
ततो वृश्चिकसम्प्राप्ते निराशाः पितरो गताः।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम्।
पुत्त्रं वा भ्रातरं वापि दौहित्रं पौत्रकं तथा॥ ३५४
पितृकार्य्ये प्रसक्ता ये ते यान्ति परमां गतिम्॥ ३५५
यथा निर्म्मन्थनादग्निः सर्व्वकाष्ठेषु तिष्ठति।
तथा स दृश्यते धर्म्मश्राच्छ्राद्धदानान्न संशयः॥ ३५६
सर्व्वशास्त्रार्थगमनं सर्व्वतीर्थावगाहनम्।
सर्व्वयज्ञफलं विन्द्याच्छ्राद्धदानान्न संशयः॥ ३५७
महापातकसंयुक्तो यो युक्तश्चोपपातकैः।
घनैर्म्मुक्तो यथा भानू राहुमुक्तश्च चन्द्रमाः॥ ३५८

सर्व्वपापविनिर्मुक्तः सर्व्वतापं विलङ्घयेत्।
सर्व्वसौख्यं स्वयं प्राप्तः श्राद्धदानान्न संशयः॥ २५९
सर्व्वेषामेव दानानां श्राद्धदानं विशिष्यते।
मेरुतुल्ये कृते पापे श्राद्धदानं विशोधनम्।
श्राद्धं कृत्वा तु मर्त्त्यो वै स्वर्गलोके महीयते॥ २६०
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम्।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं भवेत्॥ २६१
एतत् सर्व्वं मया ख्यातं श्राद्धे काले समुत्थिते।
वैश्वदेवे च होमे च देवताभ्यर्च्चने जपे॥ २६२
अमृतं तेन विप्रान्नमृग् यजुःसामसंस्कृतम्।
व्यवहारानुपूर्व्वेण धर्म्मेण वलिभिर्जितम्।
क्षत्रियान्नं पयस्तेन विशोऽन्नं पशुपालनात्॥ २६३
देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः॥ २६४
सन्ध्यां स्नानं जपं होमं देवतानित्यपूजनम्।
अतिथिं वैश्वदेवञ्च देवब्राह्मण उच्यते॥ २६५
शाके पत्रे फले मूले वनवासे सदा रतः।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते॥ २६६
वेदान्तं पठते नित्यं सर्व्वसङ्गं परित्यजेत्।
साङ्ख्ययोगविचारस्थः स विप्रो द्विज उच्यते॥ २६७
अस्त्राहताश्च धन्वानः संग्रामे सर्व्वसम्मुखे।
आरम्भे निर्ज्जिता येन स विप्रः क्षत्र उच्यते॥ २६८
कृषिकर्म्मरतो यश्च गवाञ्च प्रतिपालकः।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते॥ २६९

लाक्षालवणसम्मिश्र-कुसुम्भक्षीरसर्पिषाम्।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते॥ ३७०
चौरश्च तस्करश्चैव सूचको दंशकस्तथा।
मत्स्यमांसे सदालुब्धो विप्रो निषाद उच्यते॥ ३७१
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्व्वितः।
तेनैव स च पापेन विप्रः पशुरुदाहृतः॥ ३७२
वापीकूपतड़ागानामारामस्य सरःसु च।
निःशङ्कं रोधकश्चैव स विप्रो म्लेच्छ उच्यते॥ ३७३
क्रियाहीनश्च मूर्खश्च सर्व्वधर्म्मविवर्ज्जितः।
निर्द्दयः सर्व्वभूतेषु विप्रश्चाण्डाल उच्यते॥ ३७४
वेदैर्विहीनाश्च पठन्ति शास्त्रं
शास्त्रेण हीनाश्च पुराणपाठाः।
पुराणहीनाः कृषिणो भवन्ति
भ्रष्टास्ततो भागवता भवन्ति॥ ३७५
ज्योतिर्व्विदो ह्यथर्व्वाणः कीरपौराणपाठकाः।
श्राद्धे यज्ञे महादाने वरणीयाः कदाच न॥ ३७६
श्राद्धञ्च पितरं घोरं दानञ्चैव तु निष्फलम्।
यज्ञे च फलहानिः स्यात्तस्मात्तान् परिवर्ज्जयेत्॥ ३७७॥
आविकश्चित्रकारश्च वैद्यो नक्षत्रपाठकः।
चतुर्व्विप्रा न पूज्यन्ते बृहस्पतिसमा यदि॥ ३७८
मागधो माथुरश्चैव कापटः कौटकामलौ।
पञ्च विप्रा न पूज्यन्ते बृहस्पतिसमा यदि॥ ३७९
क्रयक्रीता च या कन्या पत्नी सा न विधीयते।
तस्यां जाताः सुतास्तेषां पितृपिण्डं न विद्यते॥ ३८०

अष्टशल्यागतो नीरं पाणिना पिवते द्विजः ।
सुरापानेन तत्तुल्यं तुल्यं गोमांसभक्षणम् ॥ ३८१
ऊर्द्ध्वजङ्घेषु विप्रेषु प्रक्षाल्य चरणद्वयम् ।
तावच्चण्डालरूपेण यावद्गङ्गां न मज्जति ॥ ३८२
दीपशय्यासनच्छाया कार्पासं दन्तधावनम् ।
अजारेणु स्पृशंश्चैव शक्रस्यापि श्रियं हरेत् ॥ ३८३
गृहाद्दशगुणं कूपं कूपाद्दशगुणं तटम् ।
तटाद्दशगुणं नद्यां गङ्गासङ्ख्या न विद्यते ॥ ३८४
स्रवद्‌यद्‌ब्राह्मणं तोयं सरस्यं क्षत्रियं तथा ।
वापीकूपे तु वैश्यस्य शौद्रं भाण्डोदकं तथा ॥ ३८५
तीर्थस्नानं महादानं यच्चान्यत्तिलतर्पणम् ।
अब्दमेकं न कुर्व्वीत महागुरुनिपाततः ॥ ३८६
गङ्गा गया त्वमावस्या वृद्धिश्राद्धे क्षयेऽहनि ।
मघापिण्डप्रदानं स्यादनत्र परिवर्ज्जयेत् ॥ ३८७
घृतं वा यदि वा तैलं पयो वा यदि वा दधि ।
चत्वारो ह्याज्यसंस्थाने हुतं नैव तु वर्ज्जयेत् ॥ ३८८
श्रुत्वैतानृषयो धर्म्मान् भाषितानत्रिणा स्वयम् ।
इदमूचुर्म्महात्मानं सर्व्वे ते धर्म्मनिष्ठिताः ॥ ३८९
य इदं धारयिष्यन्ति धर्म्मशास्त्रमतन्द्रिताः ।
इह लोके यशः प्राप्य ते यास्यन्ति त्रिपिष्टपम् ॥ ३९०
विद्यार्थी लभते विद्यां धनकामो धनानि च ।
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥ ३९१

इति श्रीअत्रिमहर्षिस्मृतिः समाप्ता ॥ १ ॥

# संवर्त्तसंहिता।

---

संवर्त्तमेकमासीनमात्मविद्यापरायणम्।
ऋषयस्तु समागम्य पप्रच्छुर्धर्म्मकाङ्क्षिणः॥ १
भगवन् श्रोतुमिच्छामः श्रेयस्कर्म्म द्विजोत्तम।
यथावद्धर्म्ममाचच्व शुभाशुभविवेचनम्॥ २
वामदेवादयः सर्व्वे तमपृच्छन् महौजसम्।
तानब्रवीन्मुनीन् सर्व्वान् प्रीतात्मा श्रूयतामिति॥ ३
स्वभावाद्यत्र विचरेत् कृष्णसारः सदा मृगः।
धर्म्मप्रदेशः स विज्ञेयो द्विजानां धर्म्मसाधनम्॥ ४
उपनीतः सदा विप्रो गुरोस्तु हितमाचरेत्।
स्रग् गन्धमधुमांसानि ब्रह्मचारी विवर्ज्जयेत्॥ ५
सन्ध्यां प्रातः सनक्षत्रामुपासीत यथाविधि।
सादित्यां पश्चिमां सन्ध्यामर्द्धास्तमितभास्करे॥ ६
तिष्ठन् पूर्व्वां जपं कुर्य्याद्ब्रह्मचारी समाहितः।
आसीनः पश्चिमां सन्ध्यां जपं कुर्य्यादतन्द्रितः॥ ७
अग्निकार्य्यं ततः कुर्य्यान्मेधावी तदनन्तरम्।
ततोऽधीयीत वेदन्तु वीक्षमाणो गुरोर्म्मुखम्॥ ८
प्रणवं प्राक् प्रयुञ्जीत व्याहृतिं तदनन्तरम्।
गायत्रीञ्चानुपूर्व्वेण ततो वेदं समारभेत्॥ ९
हस्तौ सुसंयतौ कार्य्यौ जानुभ्यामुपरिस्थितौ।
गुरोरनुमतं कुर्य्यात् पठन् नान्यमतिर्भवेत्॥ १०

सायं प्रातस्तु भिक्षेत ब्रह्मचारी सदा व्रती ।
निवेद्य गुरवेऽश्नीयात् प्राङ्मुखो वाग् यतः शुचिः ॥ ११
सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्य्यादग्निहोत्रसमो विधिः ॥ १२
आचम्यैव तु भुञ्जीत भुक्त्वा चोपस्पृशेद्द्विजः ।
अनाचान्तस्तु योऽश्नीयात् प्रायश्चित्तीयते तु सः ॥ १३
अनाचान्तः पिवेद्यस्तु योऽपि वा भक्षयेद्द्विजः ।
गायत्र्यष्टसहस्रन्तु जपं कृत्वा विशुध्यति ॥ १४
अकृत्वा पादशौचन्तु तिष्ठन् मुक्तशिखोऽपि वा ।
विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्द्विजः ॥ १५
आचामेद्ब्राह्मतीर्थेन सोपवीती ह्युदङ्मुखः ।
उपवीती द्विजो नित्यं प्राङ्मुखो वाग् यतः शुचिः ॥ १६
जले जलस्थ आचामेत् स्थलाचान्तो वहिः शुचिः ।
वहिरन्तस्थ आचान्त एवं शुद्धिमवाप्नुयात् ॥ १७
आमणिबन्धनाद्धस्तौ पादावद्भिर्विशोधयेत् ।
अशब्दाभिरनुष्णाभिः स्ववर्णरसगन्धिभिः ॥ १८
हृद्गताभिरफेनाभिस्त्रिस्तुर्व्वाद्भिराचमेत् ।
परिमृज्य द्विरास्यन्तु कादशाङ्गानि च स्पृशेत् ॥ १९
स्नात्वा पीत्वा तथा भुक्त्वा सुप्त्वा चैव द्विजोत्तमाः ।
अनेन विधिना विप्र आचान्तः शुचितामियात् ॥ २०
शूद्रः शुध्यति हस्तेन वैश्यो दन्तेषु वारिभिः ।
कण्ठागतैः क्षत्रियस्तु आचान्तः शुचितामियात् ॥ २१
आसनारूढपादश्च कृतावसक्थिकस्तथा ।
आरूढपादको वापि न शुध्यति कदाचन ॥ २२

उपासीत न चेत् सन्ध्यामग्निकार्य्यं न वा व्रतम्।
गायत्र्यष्टसहस्रन्तु जपेत् स्नात्वा समाहितः॥ २३
सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च।
ब्रह्मचारी तु योऽश्नीयात् त्रिरात्रेणैव शुध्यति॥ २४
ब्रह्मचारी तु यो गच्छेत् स्त्रियं कामप्रपीड़ितः।
प्राजापत्यं चरेत् कृच्छ्रमब्दमेकं सुयन्त्रितः॥ २५
ब्रह्मचारी तु योऽश्नीयान्मधुमांसं कथञ्चन।
प्राजापत्यन्तु कृत्वासौ मौञ्जीहोमेन शुध्यति॥ २६
निर्व्वपेच्च पुरोडाशं ब्रह्मचारी च पर्व्वणि।
मन्त्रैः शाकलहोमान्तैरग्नावाज्यञ्च होमयेत्॥ २७
ब्रह्मचारी तु यः स्कन्देत् कामतः शुक्रमात्मन।
अवकीर्णिव्रतं कुर्य्यात् स्नात्वा शुध्येदकामतः॥ २८
भिक्षाटनमतः कृत्वा स्वस्थो ह्यकात्मनः स्तुतिः।
अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत्॥ २९
शूद्रहस्तेन योऽश्नीयात् पानीयं वा पिबेत् क्वचित्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ ३०
शुष्कपर्य्युषितोच्छिष्टं भुक्त्वान्नं केशदूषितम्।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ ३१
शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥ ३२
दिवा स्वपिति यः स्वस्थो ब्रह्मचारी कथञ्चन।
स्नात्वा सूर्य्यं समभ्यर्च्य गायत्र्यष्टशतं जपेत्॥ ३३
एष धर्म्मः समाख्यातः प्रथमाश्रमवासिनाम्।
एवं संवर्त्तमानस्तु प्राप्नोति परमां गतिम्॥ ३४

अथ द्विजोऽभ्यनुज्ञातः सवर्णां स्त्रियमुद्वहेत् ।
कुले महति सम्भूतां लक्षणैश्च समन्विताम् ॥ ३५
ब्राह्मेणैव विवाहेन शीलरूपगुणान्विताम् ।
पञ्चयज्ञविधानञ्च कुर्य्यादहरहर्द्विजः ॥ ३६
नाज्ञापयेत् क्वचिद्विप्रः श्रेयस्कामः कदाचन ।
हानिं तस्य तु कुर्व्वीत सदा मरणजन्मनोः ॥ ३७
विप्रो दशाहमासीत दानाध्ययनवर्ज्जितः ।
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशैव तु ।
शूद्रः शुध्यति मासेन संवर्त्तवचनं यथा ॥ ३८
प्रेतस्य तु जलं देयं स्नात्वा च गोत्रजैर्व्वहिः ।
प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ॥ ३९
चतुर्थे सञ्चयं कुर्य्यात् सर्व्वैस्तु गोत्रजैः सह ।
ततः सञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते ॥ ४०
चतुर्थेऽहनि विप्रस्य षष्ठे वै क्षत्रियस्य च ।
अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः ॥ ४१
जातस्यापि विधिर्दृष्ट एष एव मनीषिभिः ।
दशरात्रेण शुध्यन्ति वैश्वदेवविवर्ज्जिताः ॥ ४२
पुत्रे जाते पितुः स्नानं सचेलन्तु विधीयते ।
माता शुध्येद्दशाहेन स्नातस्य स्पर्शनं पितुः ॥ ४३
होमस्तत्र तु कर्त्तव्यः शुष्कान्नेन फलेन च ।
पञ्चयज्ञविधानन्तु न कार्य्यं मृत्युजन्मनोः ॥ ४४
दशाहात्तु परं सम्यग्विप्रोऽधीयीत धर्म्मवित् ।
दानञ्च विधिना देयमशुभात्तारकं शुभम् ॥ ४५

यद्यदिष्टतमं लोके यच्चापि दयितं गृहे।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता॥ ४६

नानाविधानि द्रव्याणि धान्यानि सुबहूनि च।
समुद्रजानि रत्नानि नरो विगतकल्मषः।
दत्त्वा विप्राय महते प्राप्नोति महतीं श्रियम्॥ ४७

गन्धमाभरणं माल्यं यः प्रयच्छति धर्म्मवित्।
स सुगन्धः सदा हृष्टो यत्र तत्रोपजायते॥ ४८

श्रोत्रियाय कुलीनाय त्वर्थिने च विशेषतः।
यद्दानं दीयते भक्त्या तद्भवेत् महत् फलम्॥ ४९

आहूय शीलसम्पन्नं श्रुतेनाभिजनेन च।
शुचिर्विप्रं महाप्राज्ञो हव्यकव्येषु पूजयेत्॥ ५०

नानाविधानि द्रव्याणि रसवन्तीप्सितानि च।
श्रेयस्कामेन देयानि स्वर्गमक्षयमिच्छता॥ ५१

वस्त्रदाता सुवेशः स्याद्रौप्यदो रूपमेव हि।
हिरण्यदो महच्चायुर्लभेत् तेजश्च मानवः॥ ५२

भूताभयप्रदानेन सर्व्वं कामानवाप्नुयात्।
दीर्घमायुश्च लभते सुखी चैव तथा भवेत्॥ ५३

धान्योदकप्रदायी च सर्पिर्भिः सुखमश्नुते।
अलङ्कृत्य त्वलङ्कारं दत्त्वा प्राप्नोति तत्फलम्॥ ५४

फलमूलानि विप्राय शाकानि विविधानि च।
सुरभीणि च पुष्पाणि दत्त्वा प्राज्ञः स जायते॥ ५५

ताम्बुलञ्चैव यो दद्याद्ब्राह्मणेभ्यो विचक्षण।
मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते॥ ५६

पादुकोपानहौ च्छत्रं शयनान्यासनानि च।
विविधानि च यानानि दत्त्वा दिव्यगतिर्भवेत् ॥ ५७
दद्याच्च शिशिरे वह्निं बहुकाष्ठं प्रयत्नतः।
कायाग्निदीप्तिं प्राशत्वं रूपसौभाग्यमाप्नुयात् ॥ ५८
औषधं स्नेहमाहारं रोगिणां रोगशान्तये।
दत्त्वा स्याद्रोगरहितः सुखी दीर्घायुरेव च ॥ ५९
इन्धनानि च यो दद्याद्विप्रेभ्यः शिशिरागमे।
नित्यं जयति संग्रामे श्रिया युक्तस्तु दीप्यते ॥ ६०
अलङ्कृत्य तु यः कन्यां वराय सदृशाय वै।
ब्राह्मेणैव विवाहेन दद्यात् तान्तु सुपूजिताम् ॥ ६१
स कन्यायाः प्रदानेन श्रेयो विन्दति पुष्कलम्।
साधुवादं लभेत् सद्भिः कीर्त्तिं प्राप्नोति पुष्कलाम् ॥ ६२
ज्योतिष्टोमादिसत्राणां शतं शतगुणीकृतम्।
प्राप्नोति पुरुषो दत्त्वा होममन्त्रैस्तु संस्कृताम् ॥ ६३
अलङ्कृत्य पिता कन्यां भूषणाच्छादनासनैः।
दत्त्वा स्वर्गमवाप्नोति पूजितस्तु सुरादिषु ॥ ६४
रोमदर्शनसम्प्राप्ते सोमो भुङ्क्तेऽथ कन्यकाम्।
रजो दृष्ट्वा तु गन्धर्व्वः कुचौ दृष्ट्वा तु पावकः ॥ ६५
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।
दशवर्षा भवेत् कन्या अत ऊर्द्धं रजस्वला ॥ ६६
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ६७
तस्माद्विवाहयेत् कन्यां यावन्नर्त्तुमती भवेत्।
विवाहोऽष्टमवर्षायाः कन्यायास्तु प्रशस्यते ॥ ६८

तैलमाज्ञेरणं प्राज्ञः पादाभ्यङ्गं ददाति यः।
प्रहृष्टमानसो लोके सुखी चैव सदा भवेत्॥ ६९
अनड्वाही च यो दद्यात् कीलसीरेण संयुतौ।
अलङ्कृत्य यथाशक्त्या धूर्व्वंहौ शुभलक्षणौ॥ ७०
सर्व्वपापविशुद्धात्मा सर्व्वकामसमन्वितः।
वर्षाणि वसति स्वर्गे रोमसङ्ख्याप्रमाणतः॥ ७१
धेनुञ्च यो द्विजे दद्यादलङ्कृत्य पयस्विनीम्।
कांस्यवस्त्रादिभिर्युक्तां स्वर्गलोके महीयते॥ ७२
भूमिं शस्यवतीं श्रेष्ठां ब्राह्मणे वेदपारगे।
गां दत्त्वार्द्धप्रसूताञ्च स्वर्गलोके महीयते॥ ७३

अग्नेरपत्यं प्रथमं सुवर्णं
भूर्व्वैष्णवी सूर्य्यसुताश्च गावः।
लोकास्त्रयस्तेन भवन्ति दत्ता
यः काञ्चनं गाञ्च महीञ्च दद्यात्॥ ७४

यावन्ति शस्यमूलानि आरोम्याणि च सर्व्वशः।
नरस्तावन्ति वर्षाणि स्वर्गलोके महीयते॥ ७५
सर्व्वेषामेव दानानामेकजन्मानुगं फलम्।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम्॥ ७६
यो ददाति स्वर्णरौप्यैर्हेमशृङ्गीमरोगिणीम्।
सवत्सां वाससा वीतां सुशीलां गां पयस्विनीम्॥ ७७
तस्यां यावन्ति रोमाणि सवत्सायां दिवं गतः।
तावद्वर्षसहस्राणि स नरो ब्रह्मणोऽन्तिके॥ ७८
यो ददाति बलीवर्द्दमुक्तेन विधिना शुभम्।
अव्यङ्गं गोप्रदानेन फलकद्वयगुणं फलम्॥ ७९

जलदस्तृप्तिमतुलां विद्यथ सर्व्ववस्तुषु।
अन्नदः सुखमाप्नोति सुद्यसः सर्व्ववस्तुषु ॥ ८०
सर्व्वेषामेव दानानामन्नदानं परं स्मृतम्।
सर्व्वेषामेव जन्तूनां यतस्तज्जीवितं फलम् ॥ ८१
यस्मादन्नात् प्रजाः सर्व्वाः कल्पे कल्पेऽसृजत् प्रभुः।
तस्मादन्नात् परं दानं न भूतं न भविष्यति ॥ ८२
अन्नदानात् परं दानं विद्यते न हि किञ्चन।
अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥ ८३
मृत्तिकां गोशकृद्दर्भानुपवीतं यथोत्तरम्।
दत्त्वा गुणाग्रविप्राय कुले महति जायते ॥ ८४
मुखत्रासञ्च यो दद्याद्दन्तधावनमेव च।
शुचिगन्धसमायुक्तो वाक्पटुः स सदा भवेत् ॥ ८५
पादशौचन्तु यो दद्यात्तथा च गुदलिङ्गयोः।
यः प्रयच्छति विप्राय शुद्धवुद्धिः सदा भवेत् ॥ ८६
औषधं पथ्यमाहारं स्नेहाभ्यङ्गं प्रतिश्रयम्।
यः प्रयच्छति रोगिभ्यः सर्व्वव्याधिविवर्ज्जितः ॥ ८७
गुड़मिक्षुरसञ्चैव लवणं वञ्जनानि च।
सुरभीणि च पानानि दत्त्वात्यन्तसुखी भवेत् ॥ ८८
दानैश्च विविधैः सम्यक् पुण्यमेतदुदाहृतम्।
विद्यादानेन पुण्येन ब्रह्मलोके महीयते ॥ ८९
अन्योन्याश्रयदा विप्रो अन्योन्यप्रतिपूजकाः।
अन्योन्यं प्रतिगृह्णन्ति तारयन्ति तरन्ति च ॥ ९०
दानान्येतानि देयानि ह्यन्यानि च विशेषतः।
दीनान्धकृपणादिभ्यः श्रेयस्कामेन धीमता ॥ ९१

ब्रह्मचारियतिभ्यश्च वपनं यस्तु कारयेत्।
नखकर्म्मादिकञ्चैव चक्षुष्मान् जायते नरः॥ ९२
देवागारे द्विजातीनां दीपं दद्याच्चतुष्पथे।
मेधाविज्ञानसम्पन्नश्चक्षुष्मान् जायते नरः॥ ९३
नित्ये नैमित्तिके काम्ये तिलान् दत्त्वा तु शक्तितः।
प्रजावान् पशुमांश्चैव धनवान् जायते नरः॥ ९४
यो ददात्यर्थितो विप्रो यत्तं सम्प्रतिपादिते।
तृणकाष्ठादिकञ्चैव गोप्रदानसमं भवेत्॥ ९५
कृत्वा गार्ह्याणि कर्म्माणि स्वभार्य्यापोषणे नरः।
ऋतुकालाभिगामी स्यात् प्राप्नोति परमां गतिम्॥ ९६
उषित्वैवं गृहे विप्रो द्वितीयादाश्रमां परम्।
वलीपलितसंयुक्तस्तृतीयन्तु समाश्रयेत्॥ ९७
गच्छेदेवं वनं प्राज्ञः स्वभार्य्यां सहचारिणीम्।
गृहीत्वा चाग्निहोत्रञ्च होमं तत्र न हापयेत्॥ ९८
कुर्य्याच्चैव पुरोडाशं वन्यैर्म्मेध्यैर्यथाविधि।
भिक्षाञ्च भिक्षवे दद्याच्छाकमूलफलानि च॥ ९९
कुर्य्यादध्ययनं नित्यमग्निहोत्रपरायणः।
इष्टिं पार्व्वायणीयाञ्च प्रकुर्य्यात् प्रतिपर्व्वसु॥ १००
उषित्वैवं वने सम्यग्विधिज्ञः सर्व्ववस्तुषु।
चतुर्थमाश्रमं गच्छेद्धुतहोमो जितेन्द्रियः॥ १०१
अग्निमात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्।
वेदाभ्यासरतो नित्यमात्मविद्यापरायणः॥ १०२
अष्टौ भिक्षाः समादाय स मुनिः सप्त पञ्च वा।
अद्भिः प्रक्षाल्य तत्सर्व्वं भुञ्जीतच समाहितः॥ १०३

अरण्ये निर्जने विप्रः पुनरासीत भुक्तवान् ॥
एकाकी चिन्तयेन्नित्यं मनोवाक्कायसंयतः ॥ १०४
मृत्युञ्च नाभिनन्देत जीवितं वा कथञ्चन ।
कालमेव प्रतीक्षेत यावतायुः समाप्यते ॥ १०५
संसेव्य चाश्रमानेतान् जितक्रोधो जितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति वेदशास्त्रार्थविद्विजः ॥ १०६
आश्रमेषु च सर्व्वेषु युक्तः प्रासङ्गिको विधिः ।
अथाभिवक्ष्ये पापानां प्रायश्चित्तं यथाविधि ॥ १०७
ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ।
महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ॥ १०८
ब्रह्मघ्नस्तु वनं गच्छेत् वल्कवासा जटी ध्वजी ।
वन्यान्येव फलान्यश्नन् सर्व्वकामविवर्ज्जितः ॥ १०९
भिक्षार्थी च चरेद्ग्रामं वन्यैर्यदि न जीवति ।
चातुर्व्वर्ण्यं चरेद्भैक्ष्यं खट्वाङ्गी संयतः पुमान् ॥ ११०
भैक्षञ्चैव समादाय वनं गच्छेत् ततः पुनः ।
वनवासी सपापश्च सदाकालमतन्द्रितः ॥ १११
ख्यापयन्नेव तत्पापं ब्रह्मघ्नः पापकारकः ।
अनेन तु विधानेन द्वादशाब्दव्रतं चरेत् ॥ ११२
सन्नियम्येन्द्रियग्रामं सर्व्वभूतहिते रतः ।
ब्रह्महत्यापनोदाय ततो मुच्येत किल्बिषात् ॥ ११३
अतःपरं सुरापस्य प्रवक्ष्यामि विनिष्कृतिम् ।
श्रोतुमिच्छत भो विप्रा वेदशास्त्रानुरूपिकाम् ॥ ११४
गौड़ी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा ।
यथैवैका तथा सर्व्वा न पातव्या द्विजैः सदा ॥ ११५

सुरापस्तु सुरां तप्तां पिबेत्तत्पापमोक्षकः।
गोमूत्रमग्निवर्णञ्च गोमयं वा तथाविधम्॥ ११६
घृतञ्चैव सुतप्तञ्च क्षीरं वापि तथाविधम्।
वत्सरं वा कणानश्नन् सर्व्वकामविवर्ज्जितः॥ ११७
चान्द्रायणानि वा त्रीणि सुरापो व्रतमाचरेत्।
मुच्यते तेन पापेन प्रायश्चित्ते कृते सति॥
एवं शुद्धिः सुरापस्य भवेदिति न संशयः।
मद्यभाण्डोदकं पीत्वा पुनः संस्कारमर्हति॥
स्तेयं कृत्वा सुवर्णस्य राज्ञे शंसेत मानवः।
ततो मुषलमादाय स्तेनं हन्यात्ततो नृपः॥ ११८—२०
यदि जीवति स स्तेनस्ततः स्तेयात् प्रमुच्यते।
अरण्ये चीरवासा वा चरेद्ब्रह्महणो व्रतम्॥ १२१
समालिङ्गेत् स्त्रियं वापि दीप्तां कृत्वायसा कृताम्।
एवं शुद्धिः कृता स्तेये संवर्त्तवचनं यथा॥ १२२
गुरुतल्पे शयानस्तु तल्पे स्वप्यादयोमये।
चान्द्रायणानि वा कुर्य्याच्चत्वारि त्रीणि वा द्विजः।
ततो विमुच्यते पापात् प्रायश्चित्ते कृते सति॥ १२३
एभिः सम्पर्कमायाति यः कश्चित् पापमोहितः।
षण्मासादधिकं वापि पूर्व्वोक्तं व्रतमाचरेत्॥ १२४
महापातकिसंयोगी ब्रह्महत्यादिभिर्नरः।
तत्पापस्य विशुद्ध्यर्थं तस्य तस्य व्रतं चरेत्॥ १२५
क्षत्रियस्य वधं कृत्वा त्रिभिः कृच्छ्रैर्विशुध्यति।
कुर्य्याच्चैवानुरूपेण त्रीणि कृच्छ्राणि संयतः॥ १२६

वैश्यञ्च हत्वान्तु सम्प्राप्तः कथञ्चित् काममोहितः।
कृच्छ्रातिकृच्छ्रं कुर्व्वीत स नरो वैश्यघातकः॥ १२७
कुर्य्याच्छूद्रवधं प्राप्तस्तप्तकृच्छ्रं यथाविधि॥ १२८
गोघ्नस्यातः प्रवक्ष्यामि निष्कृतिं तत्त्वतः पुमान्।
गोघ्नः कुर्व्वीत संस्थानं गोष्ठे गोरूपसंस्थिते॥ १२९
तत्रैव क्षितिशायी स्यान्मासार्द्धं संयतेन्द्रियः।
शुक्लयावकपिण्याकपयोदधि सक्तवः॥ १३०
एतानि क्रमतोऽश्नीयाद्द्विजस्तु पापमोचकः।
शुध्यते सार्द्धमासेन नखलोमविवर्ज्जितः॥ १३१
स्नानं त्रिषवणञ्चास्य गवामनुगमस्तथा।
एतत् समाहितः कुर्य्यान्नरो विगतमत्सरः॥ १३२
सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः।
ततश्चीर्णव्रतः कुर्य्याद्विप्राणां भोजनं परम्॥ १३३
भुक्तवत्सु च विप्रेषु गाञ्च दद्यात् सदक्षिणाम्॥ १३४
व्यापादितेषु बहुषु बन्धने रोधनेऽपि वा।
द्विगुणं गोव्रतं तस्य प्रायश्चित्तं विशुद्धये॥ १३५
एका चेद्बहुभिः कैश्चिद्दैवाद्व्यापादिता क्वचित्।
पादं पादन्तु हत्यायाश्चरेयुस्ते पृथक् पृथक्॥ १३६
यन्त्रणे गोचिकित्सार्थे मूढगर्भविमोचने।
यदि तत्र विपत्तिः स्यान्न स पापेन लिप्यते॥ १३७
निशावन्धनिरुपेषु सर्पव्याघ्रहतेषु च।
अग्निविद्युन्निपातेन प्रायश्चित्तं न विद्यते॥
प्रायश्चित्तस्य पादन्तु रोधेषु व्रतमाचरेत्।
द्वौ पादौ बन्धने चैव पादोनं कुट्टने तथा॥ १३८—३९

पाषाणैर्लगुडै र्दण्डैस्तथा शस्त्रादिभिर्नरः।
निपातने चरेत् सर्व्वं प्रायश्चित्तं विशुद्धये॥
गजञ्च तुरगं हत्वा महिषोष्ट्रकपिं तथा।
एषु कुर्व्वीत सर्व्वेषु सप्तरात्रमभोजनम्॥ १४०—४१
व्याघ्रं श्वानं तथा सिंहमृच्छं शूकरमेव च।
एतान् हत्वा द्विजः कृच्छ्रं ब्राह्मणानाञ्च भोजनम्॥ १४२
सर्व्वासामेव जातीनां मृगाणां वनचारिणाम्।
त्रिरात्रोपोषितस्तिष्ठेज्जपन् वै जातवेदसम्॥ १४३
हंसं काकं वलाकञ्च पारावतमथापि वा।
सारसं चासभासञ्च हत्वा त्रिदिवसं क्षिपेत्॥ १४४
चक्रवाकं तथा क्रौञ्चं सारिकाशुकतित्तिरिम्।
श्येनगृध्रावुलुकञ्च कपोतकमथापि वा॥ १४५
टिट्टिभं जालपादञ्च कोकिलं कुक्कुटं तथा।
एव पक्षिषु सर्व्वेषु दिनमेकमभोजनम्॥ १४६
मण्डूकैश्चैव हत्वा च सर्पमार्ज्जारमूषिकम्।
त्रिरात्रोपोषितस्तिष्ठेत् कुर्य्याद् ब्राह्मणभोजनम्॥ १४७
अनस्थीन् ब्राह्मणो हत्वा प्राणायामेन शुध्यति।
अस्थिमतो वधे विप्रः किञ्चिद्दद्याद्विचक्षणः॥ १४८
चाण्डालीं यो द्विजो गच्छेत् कथञ्चित् काममोहितः।
त्रिभिः कृच्छ्रैर्विशुध्येत प्राजापत्यानुपूर्व्वकैः॥ १४९
पुक्कसीगमनं कृत्वा कामतोऽकामतोऽपि वा।
कृच्छ्रं चान्द्रायणं तस्य पावनं परमं स्मृतम्॥ १५०
नटीं शैलूषिकीञ्चैव रजकीं वेणुजीविनीम्।
गत्वा चान्द्रायणं कुर्य्यात्तथा चर्म्मोपजीविनीम्॥ १५१

क्षत्रियामथ वैश्यां वा गच्छेद्‌यः काममोहितः ।
तस्य सान्तपनं कृच्छ्रं भवेत् पापापनोदकम् ॥ १५२
शूद्रीन्तु ब्राह्मणो गत्वा मासं मासार्द्धमेव वा ।
गोमूत्रयावकाहारो मासार्द्धेन विशुध्यति ॥ १५३
विप्रस्तु ब्राह्मणीं गत्वा प्राजापत्यं समाचरेत् ।
क्षत्रियां क्षत्रियो गत्वा तदेव व्रतमाचरेत् ॥ १५४
नरो गोगमनं कृत्वा कुर्य्याच्चान्द्रायणं व्रतम् ॥ १५५
गुरोर्दुहितरं गत्वा स्वसारं पितुरेव च ।
तस्या दुहितरञ्चैव चरेच्चान्द्रायणं व्रतम् ॥ १५६
मातुलानीं सनाभिञ्च मातुलस्यात्मजां स्नुषाम् ।
एता गत्वा स्त्रियो मोहात् पराकेण विशुध्यति ॥ १५७
पितृव्यदारगमने भ्रातृभार्य्यागमे तथा ।
गुरुतल्पव्रतं कुर्य्यात् तस्यान्या निष्कृतिर्न च ॥ १५८
पितृदारान् समारुह्य मातृवर्ज्जं नराधमः ।
भगिनीं मातुलसुतां स्वसारञ्चान्यमातृजाम् ।
एतास्तिस्रः स्त्रियो गत्वा तप्तकृच्छ्रं समाचरेत् ॥ १५९
मातरं योऽधिगच्छेच्च सुतां वा पुरुषाधमः ।
भगिनीञ्च निजां गत्वा निष्कृतिर्नो विधीयते ॥ १६०
कुमारीगमने चैव व्रतमेतत् समादिशेत् ।
पशुवेश्याभिगमने प्राजापत्यं विधीयते ॥ १६१
भार्य्यासखीं कुमारीञ्च श्वश्रूं वा श्यालिकां तथा ।
नियमस्थां व्रतस्थाञ्च योऽभिगच्छेत् स्त्रियं द्विजः ।
स कुर्य्यात् प्राकृतं कृच्छ्रं धेनुं दद्यात् पयस्विनीम् ॥ १६२

रजस्वलाञ्च यो गच्छेद्गर्भिणीं पतितां तथा।
तस्य पापविशुद्ध्यर्थमतिकृच्छ्रं विधीयते॥ १६३
वेश्याञ्च ब्राह्मणो गत्वा कृच्छ्रमेकं समाचरेत्।
एवं शुद्धि समाख्याता संवर्त्तस्य वचो यथा॥ १६४
ब्राह्मणो ब्राह्मणीं गत्वा कृच्छ्रेणैकेन शुध्यति॥ १६५
कथञ्चित् ब्राह्मणीं गत्वा चत्रियो वैश्य एव च।
गोमूत्रयावकाहारी मासेनैकेन शुध्यति॥ १६६
ब्राह्मणो शूद्रसम्पर्के कथञ्चित् समुपागते।
कृच्छ्रं चान्द्रायणं कुर्य्यात् पावनं परमं स्मृतम्॥ १६७
चाण्डालं पुक्कसञ्चैव श्वपाकं पतितं तथा।
एतान् श्रेष्ठस्त्रियो गत्वा कुर्य्याच्चान्द्रायणत्रयम्॥ १६८
अतःपरञ्च दुष्टानां निष्कृतिं श्रोतुमर्हथ।
सत्यस्य दुर्म्मतिः कश्चिदपत्यार्थं स्त्रियं व्रजेत्।
स कुर्य्यात् कृच्छ्रमश्रान्तः षण्मासं तदनन्तरम्॥ १६९
विषाग्निश्यामशवलास्तेषामेवं विनिर्द्दिशेत्।
स्त्रीणां तथाङ्गचरणे गर्भ्भाभिगमनेषु च।
पतितेषु तथैतेषु प्रायश्चित्तविधिः स्मृतः॥ १७०
नृणां विप्रतिपत्तौ च पावनः प्रेतराजाह॥ १७१
गोभिर्विप्रहते चैव तथा चैवात्मघातिनि।
नाश्रुप्रपातनं कार्य्यं सद्भिः श्रेयोऽनुकाङ्क्षिभिः॥ १७२
एषामन्यतमं प्रेतं यो वहेत् तदहेतवे।
तथोदकक्रियां कृत्वा चरेच्चान्द्रायणव्रतम्॥ १७३
तच्छवं केवलं स्पृष्ट्वा वस्त्रं वा केवलं यदि।
पूर्व्वं कृच्छ्रापहारी स्यादेकाहक्षपणं तथा॥ १७४

यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः ।
तत्रकार्य्यस्तिलैर्होमो गायत्र्यावर्त्तनं तथा ॥ १९८
एष एव मया प्रोक्तः प्रायश्चित्तविधिः शुभः ।
अनादिष्टेषु पापेषु प्रायश्चित्तं तथोच्यते ॥ १९९
दानैर्होमैर्जपैर्नित्यं प्राणायामैर्द्विजोत्तमः ॥
पातकेभ्यः प्रमुच्येत वेदाभ्यासान्न संशयः ॥ २००
सुवर्णदानं गोदानं भूमिदानं तथैव च ।
नाशयन्त्याशु पापानि ह्यन्यजन्मकृतान्यपि ॥ २०१
तिलधेनुञ्च यो दद्यात् संयताय द्विजन्मने ।
ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः ॥ २०२
माघमासे तु सम्प्राप्ते पौर्णमास्यामुपोषितः ।
ब्राह्मणेभ्यस्तिलान् दत्त्वा सर्व्वपापैः प्रमुच्यते ॥ २०३
उपवासी नरो भूत्वा पौर्णमास्याञ्च कार्त्तिके ।
हिरण्यं वस्त्रमन्नं वा दत्त्वा मुच्येत दुष्कृतैः ॥ २०४
अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः ।
एताः प्रशस्तास्तिथयो भानुवारस्तथैव च ॥ २०५
अत्र स्नानं जपो होमो ब्राह्मणानाञ्च भोजनम् ।
उपवासस्तथा दानमेकैकं पावयेन्नरम् ॥ २०६
स्नातः शुचिर्धौतवासाः शुद्धात्मा विजितेन्द्रियः ।
सात्त्विकं भावमाश्रित्य दानं दद्याद्विचक्षणः ॥ २०७
सप्तव्याहृतिभिर्होमो द्विजैः कार्य्यो हितात्मभि ।
उपपातकसिद्ध्यर्थं सहस्रपरिसङ्ख्यया ॥ २०८
महापातकसंयुक्तो लक्षहोमं सदा द्विजः ।
मुच्यते सर्व्वपापेभ्यो गायत्र्याश्चैव जापनात् ॥ २०९

अभ्यसेच्च महापुण्यां गायत्रीं वेदमातरम्।
गत्वारण्ये नदीतीरे सर्व्वपापविशुद्धये॥ २१०
स्नात्वा च विधिवत्तत्र प्राणानायम्य वाग्यतः।
प्राणायामैस्त्रिभिः पूतो गायत्रीन्तु जपेद्विजः॥ २११
अक्लिन्नवासाः स्थलगः शुचौ देशे समाहितः।
पवित्रपाणिराचान्तो गायत्र्या जपमारभेत्॥ २१२
ऐहिकामुष्मिकं लोके पापं सर्व्वं विशेषतः।
पञ्चरात्रेण गायत्रीं जपमानो व्यपोहति॥ २१३
गायत्र्यास्तु परं नास्ति शोधनं पापकर्म्मणाम्॥ २१४
महाव्याहृतिसंयुक्तां प्राणायामेन संयुताम्।
गायत्रीं प्रजपन् विप्रः सर्व्वपापैः प्रमुच्यते॥ २१५
ब्रह्मचारी मिताहारः सर्व्वभूतहिते रतः।
गायत्र्या लक्षजप्येन सर्व्वपापैः प्रमुच्यते॥ २१६
अयाज्ययाजनं कृत्वा भुक्त्वा चान्नं विगर्हितम्।
गायत्र्यष्टसहस्रन्तु जपं कृत्वा विमुच्यते॥ २१७
अहन्यहनि योऽधीते गायत्रीं वै द्विजोत्तमः।
मासेन मुच्यते पापादुरगः कञ्चुकाद्यथा॥ २१८
गायत्रीं यः सदा विप्रो जपते नियतः शुचिः।
स याति परमं स्थानं वायुभूतः खमूर्त्तिमान्॥ २१९
प्रणवेन तु संयुक्ता व्याहृतीः सप्त नित्यशः।
गायत्रीं शिरसा सार्द्धं मनसा त्रिः पठेद्विजः॥ २२०
निगृह्य चात्मनः प्राणान् प्राणायामो विधीयते।
प्राणायामत्रयं कुर्य्यान्नित्यमेव समाहितः॥ २२१

मानसं वाचिकं पापं कायेनैव तु यत् कृतम्।
तत् सर्व्वं नश्यते तूर्णं प्राणायामत्रये कृते ॥ २२२
ऋग्वेदमभ्यसेद्यस्तु यजुःशाखामथापि वा।
सामानि सरहस्यानि सर्व्वं पापैः प्रमुच्यते ॥ २२३
पावमानीं तथा कृत्स्नं पौरुषं सूक्तमेव च।
जप्त्वा पापैः प्रमुच्येत पितरञ्च मधुच्छन्दसम् ॥ २२४
मण्डलं ब्राह्मणं रुद्रसूक्तोक्ताश्च बृहत्कथाः।
वामदेव्यं बृहत्साम जप्त्वा पापैः प्रमुच्यते ॥ २२५
चान्द्रायणन्तु सर्व्वेषां पापानां पावनं परम्।
कृत्वा शुद्धिमवाप्नोति परमं स्थानमेव च ॥ २२६
धर्म्मशास्त्रमिदं पुण्यं संवर्त्तेन तु भाषितम्।
अधीत्य ब्राह्मणो गच्छेद्ब्रह्मणः सद्म शाश्वतम् ॥ २२७

---

# कात्यायनसंहिता।

## प्रथमोऽध्यायः।

अथातो गोभिलोक्तानामन्येषाञ्चैव कर्म्मणाम्।
असष्टानां विधिं सम्यग्दर्शयिष्ये प्रदीपवत्॥ १
त्रिवृदूर्द्ध्ववृतं कार्य्यं तन्तुत्रयमधोवृतम्।
त्रिवृत्तच्चोपवीतं स्यात् तस्यैको ग्रन्थिरिष्यते॥ २
पृष्ठवंशे च नाभ्याञ्च धृतं यद्विन्दते कटिम्।
तद्धार्य्यमुपवीतं स्यान्नातो लम्बं न चोच्छ्रितम्॥ ३
सदोपवीतिना भाव्यं सदा बद्धशिखेन च।
विशिखो व्युपवीतश्च यत् करोति न तत्कृतम्॥ ४
त्रिःप्राश्यापो द्विरुन्मृज्य मुखमेतान्युपस्पृशेत्।
आस्यनासाक्षिकर्णांश्च नाभिवक्षःशिरोऽंसकान्॥ ५
संहताभिस्त्रयङ्गुलिभिरास्यमेवमुपस्पृशेत्।
अङ्गुष्ठेन प्रदेशिन्या घ्राणञ्चैवमुपस्पृशेत्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुः श्रोत्रं पुनःपुनः॥ ६
कनिष्ठाङ्गुष्ठयोर्नाभिं हृदयन्तु तलेन वै।
सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्॥ ७
यत्रोपदिश्यते कर्म्म कर्त्तुरङ्गं न तूच्यते।
दक्षिणस्तत्र विज्ञेयः कर्म्मणां पारगः करः॥ ८
यत्र दिङ्नियमो न स्याज्जपहोमादिकर्म्मसु।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्रीसौम्यापराजिताः॥ ९

तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता ॥ १०
गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ ११
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।
गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्द्दश ॥ १२
कर्म्मादिषु तु सर्व्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥ १३
प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ।
अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥ १४
कुड्यलग्नां वसोर्द्धारां सप्तधारां घृतेन तु ।
कारयेत् पञ्चधारां वा नातिनीचां नचोच्छ्रिताम् ॥ १५
आयुष्यानि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेत् ॥ १६
अनिष्ट्वा तु पितॄन् श्राद्धे न कुर्य्यात् कर्म्म वैदिकम्
तथापि मातरः पूर्व्वं पूजनीयाः प्रयत्नतः ॥ १७
वसिष्ठोक्तो विधिः कृत्स्नो द्रष्टव्योऽत्र निरामिषः ।
अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ॥ १८

इति प्रथमखण्डः ।

---

## ।द्वितीयः खण्डः ।

प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।
उपवेश्य कुशान् दद्यादृजुनैव हि पाणिना ॥ १
हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ॥ २
हरिता वै सपिञ्जलाः शुष्काः स्निग्धा समाहिताः ।
रत्निमात्राः प्रमाणेन पितृतीर्थेन संस्तृताः ॥ ३
पिण्डार्थं ये स्तृता दर्भास्तर्पणार्थं तथैव च ।
धृतैः कृते च विरामूत्रे त्यागस्तेषां विधीयते ॥ ४
दक्षिणं पातयेज्जानु देवान् परिचरन् सदा ।
पातयेदितरज्जानु पितॄन् परिचरन्नपि ॥ ५
निपातो नहि सव्यस्य जानुनो विद्यते क्वचित् ।
सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ॥ ६
पितृभ्य इति दत्त्वैष उपवेश्य कुशेषु तान् ।
गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत् ॥ ७
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।
पात्राणां पूरणादीनि दैवेनैव हि कारयेत् ॥ ८
ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ।
कृत्वार्घ्यं सम्प्रदातव्यं नैकैकस्यात्र दीयते ॥ ९
अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ १०
एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम् ।
आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु ॥ ११

एतत् प्रामाण्यमेवैकी कौशीमेवार्द्रमञ्जरीम्।
शुष्कां वा शीर्णकुसुमां पिञ्जलीं परिचक्षते॥ १२
पित्र्यमन्त्रानुद्रवण आत्मालम्भेऽधमे क्षणे।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे॥ १३
मार्ज्जारमूषकस्पर्शे आक्रुष्टे क्रोधसम्भवे।
निमित्तेष्वेषु सर्व्वत्र कर्म्म कुर्व्वन्नपः स्पृशेत्॥ १४
इति द्वितीयः खण्डः॥ २॥

---

## तृतीयः खण्डः।

अक्रिया त्रिविधा प्रोक्ता विद्वद्भिः कर्म्मकारिणाम्।
अक्रिया च परोक्ता च तृतीया चायथाक्रिया॥ १
स्वशाखाश्रयमुत्सृज्य परशाखाश्रयञ्च यः।
कर्त्तुमिच्छति दुर्म्मेधा मोघं तत्तस्य चेष्टितम्॥ २
यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्म्मवत्॥ ३
प्रवृत्तमन्यथा कुर्य्याद् यदि मोहात् कथञ्चन।
यतस्तदन्यथाभूतं तत एव समापयेत्॥ ४
समाप्ते यदि जानीयान्मयैतदयथाकृतम्।
तावदेव पुनः कुर्य्यान्नावृत्तिः सर्व्वकर्म्मणः॥ ५
प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः।
तदङ्गस्याक्रियायाञ्च नावृत्तिर्नैव तत्क्रिया॥ ६
मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्।
गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्ज्जितः॥ ७

न चासन्नत्सु जपेदत्र कदाचित् पितृसंहिताम् ।
अन्य एव जपं कार्य्यः सोमसामादिकः शुभः ॥ ८
यस्तत्र प्रकरोऽन्नस्य तिलवद् यववत्तथा ।
उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ॥ ९
सम्पन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥ १०
प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्व्ववत् ।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति पात्रतः ॥ ११
द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः ।
मातामहप्रभृतींस्त्रीनितरानेव वामतः ॥ १२
सर्व्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ।
संयोज्य यवकर्कन्धूदधिभिः प्राङ्मुखस्ततः ॥ १३
अवनेजनवत् पिण्डान् दत्त्वा विल्वप्रमाणकान् ।
तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत् ॥ १४
इति तृतीयः खण्डः ॥ ३ ॥

---

## चतुर्थः खण्डः ।

उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरः ।
भवेदधश्चाधराणामधरश्राद्धकर्म्मणि ॥ १
तस्माच्छ्राद्धेषु सर्व्वेषु वृद्धिमत्स्वितरेषु च ।
मूलमध्याग्रदेशेषु ईषत्सक्तांश्च निर्व्वपेत् ॥ २
गन्धादीन्निक्षिपेत्तूष्णीं तत आचामयेद्द्विजान् ।
अन्यत्राप्येष एव स्यादुयवादिरहितो विधिः ॥ ३

दक्षिणाप्लवने देशे दक्षिणाभिमुखस्य च ।
दक्षिणाग्रेषु दर्भेषु एषोऽन्यत्र विधिः स्मृतः ॥ ४
अथाग्रभूमिमासिञ्चेत् सुसम्प्रोक्षितमस्त्विति ।
शिवा आपः सन्त्विति च युग्मानेवोदकेन च ॥ ५
सौमनस्यमस्त्विति च पुष्पदानमनन्तरम् ।
अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतान् प्रतिपादयेत् ॥ ६
अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते ।
षष्ठ्यैव नित्यं तत्कुर्य्यान्न चतुर्थ्या कदाचन ॥ ७
अर्घ्योऽक्षय्योदके चैव पिण्डदानेऽवनेजने ।
तन्त्रस्य तु निवृत्तिः स्यात् स्वधावाचन एव च ॥ ८
प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः ।
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ॥ ९
युग्मानेव स्वस्ति वाच्यमङ्गुष्ठाग्रग्रहं सदा ।
कृत्वा धुर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत् ततः ॥ १०
एष श्राद्धविधिः कृत्स्न उक्तः संक्षेपतो मया ।
ये विन्दन्ति न मुह्यन्ति श्राद्धकर्म्मसु ते क्वचित् ॥ ११
इदं शास्त्रञ्च गुह्यञ्च परिसङ्ख्यानमेव च ।
वसिष्ठोक्तञ्च यो वेद स श्राद्धं वेद नेतरः ॥ १२

इति चतुर्थः खण्डः ॥ ४ ॥

## पञ्चमः खण्डः ।

असकृत् तानि कर्म्माणि क्रियेरन् कर्म्मकारिभिः ।
प्रतिप्रयोगं नैताः स्युर्म्मातरः श्राद्धमेव च ॥ १

आधानहोमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्म्मणि दर्शे च पौर्णमासे तथैव च ॥ २

नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥ ३

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्ती जातकर्म्म प्रोषितागतकर्म्मसु ॥ ४

विवाहादिः कर्म्मगणो य उक्तो
गर्भाधानं शुश्रुम यस्य चान्ते ।
विवाहादावेकमेवात्र कुर्य्यात्
श्राद्धं नादौ कर्म्मणः कर्म्मणः स्यात् ॥ ५

प्रदोषे श्राद्धमेकं स्याद्गोनिष्क्रमप्रवेशयोः ।
न श्राद्धं युज्यते कर्त्तुं प्रथमे पुष्टिकर्म्मणि ॥ ६

हलाभियोगादिषु तु षट्सु कुर्य्यात् पृथक् पृथक् ।
प्रतिप्रयोगमप्येवानादावेकन्तु कारयेत् ॥ ७

वृहत्पत्रक्षुद्रपशुस्वस्त्यर्थं परिविन्यतोः ।
सूर्य्येन्दोः कर्म्मणी ये तु तयोः श्राद्धं न विद्यतेः ॥ ८

न दशाग्रन्थिके चैव विषवद्दष्टकर्म्मणि ।
कृमिदष्टचिकित्सायां नैव शेषेषु विद्यते ॥ ९

गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥ १०

यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ।
प्रासङ्गिकमिदं प्रोक्तमतः प्रकृतमुच्यते ॥ ११

इति पञ्चमः खण्डः ॥ ५ ॥

---

## षष्ठः खण्डः ।

आधानकाला ये प्रोक्तास्तथा यश्चाग्नियोनयः ।
तदाश्रयोऽग्निमादध्यादग्निमानग्रजो यदि ॥ १
दाराधिगमनाधाने यः कुर्य्यादग्रजाग्रिमः ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥ २
परिवित्तिपरिवेत्तारौ नरकं गच्छतो ध्रुवम् ।
अपि चीर्णप्रायश्चित्तौ पादोनफलभागिनौ ॥ ३
देशान्तरस्थक्लीवैकवृषणानसहोदरान् ।
वेश्याभिसक्तपतितशूद्रतुल्यातिरोगिणः ॥ ४
जड़मूकान्धबधिरकुब्जवामनकुण्ठकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च ॥ ५
धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा ।
कुलटोन्मत्तचौरांश्च परिविन्दन् न दुष्यति ॥ ६
धनवार्द्धुषिकं राजसेवकं कर्षकं तथा ।
प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥ ७
प्रोषितं यद्यशृण्वानमब्दादूर्द्ध्वं समाचरेत् ।
आगते तु पुनस्तस्मिन् पादं तच्छुद्धये चरेत् ॥ ८
लक्षणे प्राग्गतयोस्तु प्रमाणं द्वादशाङ्गुलम् ।
तन्मलसक्ता यादोचौ तस्या एतत्रवोत्तरम् ॥ ९

उदग्गतायाः संलग्नाः शेषाः प्रादेशमात्रिकाः।
सप्तसप्ताङ्गुलांस्त्यक्त्वा कुशेनैव समुल्लिखेत्॥ १०
मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि।
मानकृद्यजमानः स्याद्विदुषामेव निश्चयः॥ ११
पुण्यमेवादधीताग्निं स हि सर्व्वैः प्रशस्यते।
अनर्द्धुकत्वं यत्तस्य काम्यैस्तन्नीयते शमीम्॥ १२
यस्य दत्ता भवेत् कन्या वाचा सत्येन केनचित्।
सोऽन्त्यां समिधमाधास्यन्नादधीतैव नान्यथा॥ १३
अनूढैव तु सा कन्या पञ्चत्वं यदि गच्छति।
न तया व्रतलोपोऽस्य तेनैवान्यां समुद्वहेत्॥ १४
अथ चेन्न लभेतान्यां याचमानोऽपि कन्यकाम्।
तमग्निमात्मसात् कृत्वा क्षिप्रं स्यादुत्तराश्रमी॥ १५
इति षष्ठः खण्डः॥ ६॥

---

## सप्तमः खण्डः।

अश्वत्थो यः शमीगर्भः प्रशस्तोर्व्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा वादीची वोर्द्ध्वगापि वा॥ १
अरणिस्तन्मयी प्रोक्ता तन्मय्येवोत्तरारणिः।
सारवद्दारवं चत्रमोविली च प्रशस्यते॥ २
संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते।
अलाभे त्वशमीगर्भादुद्धरेदविलम्बितः॥
चतुर्व्विंशतिरङ्गुष्ठदैर्घ्यं षड़पि पार्थिवम्।
चत्वार उच्छ्रये मानमरण्योः परिकीर्त्तितम्॥ ४

अष्टाङ्गुलः प्रमन्थः स्याच्चत्रं स्याद्द्वादशाङ्गुलम् ।
ओविलो द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥ ५
अङ्गुष्ठाङ्गुलमानन्तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्व्वग्रन्थिभिर्मिनुयात् सदा ॥ ६
गावालैः शणसम्मिश्रैस्त्रिवृत्तममलात्मकम् ।
व्यामप्रमाणं नेत्रं स्यात् प्रमथ्यस्तेन पावकः ॥ ७
मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी ।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते ॥ ८
अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं स्मृतम् ।
एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ वस्ति द्वौ च गुह्यकम् ॥ ९
ऊरू जङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम् ।
अरण्यवयवा ह्येते याज्ञिकैः परिकीर्त्तिताः ॥ १०
यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते ।
अस्यां या जायते वह्निः स कल्याणकृदुच्यते ॥ ११
अन्येषु ये तु मथन्ति ते रोगभयमाप्नुयुः ।
प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च ॥ १२
उत्तरारणिनिष्पन्नः प्रमन्थः सर्व्वदा भवेत् ।
योनिसङ्करदोषेण युज्यते ह्यन्यमन्थकृत् ॥ १३
आर्द्रा सशुषिरा चैव घूर्णाङ्गी पाटिता तथा ।
न हिता यजमानानामरणिश्चोत्तरारणिः ॥ १४

इति सप्तमः खण्डः ॥ ७

## अष्टमः खण्डः ।

परिधायाहतं वासः प्रावृत्य च यथाविधि ।
बिभृयात् प्राङ्मुखो यन्त्रमावृता वक्ष्यमाणया ॥ १
चत्रवृध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः ।
कृत्वोत्तराग्रामरणिं तद्बुध्नमुपरि न्यसेत् ॥ २
चत्राधःकीलकाग्रस्थामोविलीमुदगग्रकाम् ।
विष्टम्भाद्धारयेद्यन्त्रं निष्कम्पं प्रयतः शुचिः ॥ ३
त्रिरुद्वेष्ट्याथ नेत्रेण चत्रं पत्न्योऽहतांशुकाः ।
पूर्व्वं मथ न्त्यरण्यान्त्याः प्राच्याग्नेः स्याद्यथाच्युतिः ॥ ४
नैकयापि विना कार्य्यमाधानं भार्य्यया द्विजैः ।
अकृतं तद्विजानीयात् सर्व्वान्वारभन्ति यत् ॥ ५
वर्णज्यैष्ठ्येन बह्वीभिः सवर्णाभिश्च जन्मतः ।
कार्य्यमग्निच्युतेराभिः साध्वीभिर्मन्थनं पुनः ॥ ६
ततः शक्ततरा पश्चादासामन्यतरापि वा ।
उपेतानां वान्यतमा मथ्नीयादग्निं निकामतः ॥ ७
नात्र शूद्रीं प्रयुञ्जीत न द्रोहद्वेषकारिणीम् ।
न चैवाव्रतस्थां नान्यपुंसा च सह सङ्गताम् ॥ ८
जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च ।
आधाय समिधश्चैव ब्राह्मणश्चोपवेशयेत् ॥ ९
ततः पूर्णाहुतिं हुत्वा सर्व्वमन्त्रसमन्विताम् ।
गां दद्याद्यज्ञवास्त्वन्ते ब्रह्मणे वाससी तथा ॥ १०
होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः ।
पाणिरेवेतरस्मिंस्तु स्रुचैवात्र तु हूयते ॥ ११

खादिरो वाथ पालाशो द्विवितस्तिः स्रुवः स्मृतः ।
स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः ॥ १२
स्रुवाग्रे घ्राणवत् खातंद्व्यङ्गुष्ठपरिमण्डलम् ।
जुह्वाः शरावत्खातं सनिर्व्वाहं षडङ्गुलं कुर्य्यात् ॥ १३
तेषां प्राक्शःकुशैः कार्य्यः सम्प्रमार्गो जुह्वता ।
प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा ॥ १४
प्राञ्चं प्राञ्चमुदग्ग्नेरुदगग्रं समीपतः ।
तत्तथासादयेद्द्रव्यं यद्यथा विनियुज्यते ॥ १५
आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥ १६
नाङ्गुष्ठादधिका ग्राह्या समित् स्थूलतया क्वचित् ।
न वियुक्ता त्वचा चैव न सकीटा न पाटिता ॥ १७
प्रादेशान्नाधिका नोना तथा न स्याद्विशाखिका ।
न सपर्णा न निर्व्वीर्य्या होमेषु च विजानता ॥ १८
प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम् ।
एवंविधाः स्युरेवेह समिधः सर्व्वकर्मसु ॥ १९
समिधोऽष्टादशेध्मस्य प्रवदन्ति मनीषिणः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः ॥ २०
समिदादिषु होमेषु मन्त्रदैवतवर्ज्जिता ।
पुरस्ताच्चोपरिष्टाच्च होन्धनार्थं समिद्भवेत् ॥ २१
इध्मोऽप्येधार्थमाचार्य्यैर्हविराहुतिषु स्मृतः ।
यत्र चास्य निवृत्तिः स्यात् तत् स्पष्टीकरवाण्यहम् ॥ २२
अङ्गहोमसमित्तन्त्रसोष्यन्त्याख्येषु कर्मसु ।
येषाञ्चैवैतदप्युक्तं तेषु तत्सदृशेषु च ॥ २३

अश्वभङ्गादिविपदि जलहोमादिकर्म्मणि।
सोमाहुतिषु सर्व्वासु नैतेष्विष्म विधीयते॥ २४

इति अष्टमः खण्डः॥ ८॥

---

## नवमः खण्डः।

सूर्य्योऽस्तशैलमप्राप्ते षट्‌त्रिंशद्भिः सदाङ्गुलैः।
प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शनात्॥ १
हस्तादूर्द्ध्वं रविर्य्यावद्गिरिं हित्वा न गच्छति।
तावद्धोमविधिः पुण्यो नात्येत्युदितहोमिनाम्॥ २
यावत् सम्यङ्‌न भाव्यन्ते नभस्यृक्षाणि सर्व्वतः।
न च लौहित्यमापैति तावत् सायञ्च ह्रूयते॥ ३
रजोनीहारधूमाभ्रवृक्षाग्रान्तरिते रवौ।
सन्ध्यामुद्दिश्य जुहुयाद्धुतमस्य न लुप्यते॥ ४
न कुर्य्यात् क्षिप्रहोमेषु द्विजः परिसमूहनम्।
विरूपाक्षञ्च न जपेत् प्रपदञ्च विवर्ज्जयेत्॥ ५
पर्य्युक्षणञ्च सर्व्वत्र कर्त्तव्यमादितेऽन्विति।
अन्ते च वामदेवस्य गानं कुर्य्यादृचस्त्रिधा॥ ६
अहोमकेष्वपि भवेद्‌यथोक्तं चन्द्रदर्शनम्।
वामदेव्यं गणेष्वन्ते वक्ष्यन्ते वैश्वदेविके॥ ७
यान्यध्...रणान्तानि न तेषु स्तरणं भवेत्।
एककार्य्यार्थसाध्यत्वात् परिधीनपि वर्ज्जयेत्।
वर्हिःपर्य्युक्षणञ्चैव वामदेव्यजपस्तथा।
कृत्वाहुतिषु सर्व्वासु त्रिकमेतन्न विद्यते॥ ८

हविष्येषु यवा मुख्यास्तदनु ब्रीहयः स्मृताः ।
माषकोद्रवगौरादि सर्व्वालाभेऽपि वर्ज्जयेत् ॥ १०

पाण्याहतिर्द्वादशपर्व्वपूरिका
कांसादिना चेत् स्रुवमात्रपावका ।
दैवेन तीर्थेन च ह्रयते हविः
स्वङ्गारिणि स्वर्च्चिषि तच्च पावके ॥ ११

योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्च स जायते ॥ १२
तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीम्पराम् ॥ १३
होतव्ये च हुते चैव पाणिशूर्पस्फ्यदारुभिः ।
न कुर्य्यादग्निधमनं कुर्य्याद्वा व्यजनादिना ॥ १४
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत ।
नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत् ॥ १५

इति नवमः खण्डः ॥ ९ ॥

---

## दशमः खण्डः ।

यथाहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत्तदमन्त्रवत् ॥ १
नारदाद्युक्तवार्क्षं यदष्टाङ्गुलमपाटितम् ।
सत्वचं दन्तकाष्ठं स्यात् तदग्रेण प्रधावयेत् ॥ २
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्राणि भक्षयेद्दन्तधावनम् ॥ ३

आयुर्व्वलं यशो वर्च्चः प्रजाः पशून् वसूनि च ।
ब्रह्म प्रज्ञाञ्च मेधाञ्च त्वन्नो धेहि वनस्पते ॥ ४
यथ इयं श्रावणादि सर्व्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः ॥ ५
धनुःसहस्राण्यष्टौ तु गतिर्य्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥ ६
उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते ॥ ७
वेदाश्छन्दांसि सर्व्वाणि ब्रह्माद्याश्च दिवौकसः ।
जलार्थिनोऽथ पितरो मरीच्याद्यास्तथर्षयः ॥ ८
उपाकर्म्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः ।
पियासूननुगच्छन्ति सन्तुष्टाः स्वशरीरिणः ॥ ९
समागमस्तु यत्रैषां यत्र हत्यादयो मलाः ।
नूनं सर्व्वं क्षयं यान्ति किमुतैकं नदीरजः ॥ १०
ऋषीणां सिच्यमानानामन्तरालं समाश्रितः ।
सम्पिबेद् यः शरीरेण पर्षन्मुक्तजलच्छटाः ॥ ११
विद्यादीन् ब्राह्मणः कामान् वरादीन् कन्यका ध्रुवम् ।
आमुष्मिकानपि सुखान्याप्नुयात् स न संशयः ॥ १२
अशुच्यशुचिना दत्तमाममन्त्रजलादिना ।
अनिर्गतदशाहास्तु प्रेता रक्षांसि भुञ्जते ॥ १३
स्वर्धन्यम्भः समानि स्युः सर्व्वाण्यम्भांसि भूतले ।
कूपस्थान्यपि सोमार्कग्रहणे नात्र संशयः ॥ १४

इति दशमः खण्डः ॥ १०

इति कर्म्मप्रदीपपरिशिष्टे कात्यायनविरचिते प्रथमः प्रपाठकः ॥ १ ॥

# एकादशः खण्डः ।

अत ऊर्द्धं प्रवक्ष्यामि सन्ध्योपासनकं विधिम् ।
अनर्हः कर्म्मणां विप्रः सन्ध्याहीनो यतः स्मृतः ॥ १
सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम् ।
ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घास्तु बर्हिषः ॥ २
दर्भाः पवित्रमित्युक्तमतः सन्ध्यादि कर्म्मणि ।
सव्यः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः ॥ ३
रक्षयेद्वारिणात्मानं परिक्षिप्य समन्ततः ।
शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः ॥ ४
प्रणवो भूर्भुवःस्वश्च सावित्री च तृतीयका ॥
अब्दैवत्यं तृचश्चैव चतुर्थमिति मार्ज्जनम् ॥ ५
भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्ज्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥ ६
आपज्योतीरसोमृतं ब्रह्मभुर्भुवः स्वरिति शिरः ।
प्रतीप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ॥ ७
एता एतां सहासेन तथैभिर्दशभिः सह ।
त्रिर्ज्जपेदायतप्राणः प्राणायामः स उच्यते ॥ ८
करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्व्वा त्रिः सकृद्वाघमर्षनम् ॥ ९
उत्थायार्कं प्रतिप्रोहे त्रिकेणाञ्जलिनाम्भसः ।
उच्चित्रमृग्द्वयेनाथ चोदृतिष्ठेदनन्तरम् ॥ १०
सन्ध्याद्वयेऽप्युपस्थानमेतदाहुर्म्मनीषिणः ।
मध्ये त्वह्न उपर्य्यस्य विभ्राड़ादीच्छया जपेत् ॥ ११

तदसंसक्तपार्ष्णिर्व्वा एकपादार्द्धपादपि ।
कुर्य्यात् कृताञ्जलिर्व्वापि ऊर्द्ध्वबाहुरथापि वा ॥ १२
यत्र स्यात् कृच्छ्रभूयस्त्वं श्रेयसोऽपि मनीषिणः ।
भूयस्त्वं ब्रुवते तत्र कृच्छ्राच्छ्रेयो ह्यवाप्यते ॥ १३
तिष्ठेदुदयनात् पूर्व्वां मध्यमामपि शक्तितः ।
आसीतोड़ूद्गमाच्चान्त्यं सन्ध्यां पूर्व्वंत्रिकं जपन् ॥ १४
एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥ १५
सन्ध्यालोपाच्च चकितः स्नानशीलश्च यः सदा ।
तं दोषा नोपसर्पन्ति गरुत्मन्तमिवोरगाः ॥ १६
वेदमादित आरभ्य शक्तितोऽहरहर्ज्जपेत् ।
उपतिष्ठेत्ततो रुद्रं सर्व्वाद्वा वैदिकाज्जपात् ॥ १७

इति एकादशः खण्डः ॥ ११ ॥

---

## द्वादशः खण्डः ।

अथाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄनपि ।
नमोऽन्ते तर्पयामीति आदावोमिति च ब्रुवन् ॥ १

ब्रह्माणं विष्णुं रुद्रं प्रजापतिं वेदान् देवांश्छन्दांस्यृषीन् पुराणानाचार्य्यान् गन्धर्व्वानितरान् मासं संवत्सरं सावयवं देवीरप्सरसो वेदानुगान् नागान् सागरान् पर्व्वतान् सरितो दिव्यान् मनुष्यानितरान् मनुष्यान् यक्षान् रक्षांसि सुपर्णान् पिशाचान् पृथिवीमोषधीः पशून् वनस्पतीन् भूतग्रामं चतुर्व्विधमित्युपवीत्यथ प्राचीनावीती यमं यमपुरुषान् कव्यवाड़नलं सोमं यममर्य्यमणमग्निष्वात्तान् सोमपीथान् बर्हिषदोऽथ

स्वान् पितॄन् सकृत सकृन्मातामहांश्चेति प्रतिपुरुषमभ्यस्येज्ज्येष्ठ-भ्रातृश्वशुरपितृव्यमातुलांश्च पितृवंश-मातृवंशौ ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीत्ययमवसानाञ्जलिरथ श्लोकाः ॥ २

छायां यथेच्छेच्छरदातपार्त्तः
पयः पिपासुः क्षुधितोऽन्नमन्नम्।
बालो जनित्रीं जननी च बालं
योषित् पुमांसं पुरुषश्च योषाम् ॥ ३
तथा सर्व्वाणि भूतानि स्थावराणि चराणि च।
विप्रादुदकमिच्छन्ति सर्व्वाभ्युदयकृद्धि सः ॥ ४
तस्मात् सदैव कर्त्तव्यमकुर्व्वन् महतेनसा।
युज्यते ब्राह्मणः कुर्व्वन् विश्वमेतद्बिभर्त्ति हि ॥ ५
अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्म्मणः।
प्रातर्न तनुयात् स्नानं होमलोपो हि गर्हितः ॥ ६

इति द्वादशः खण्डः ॥ १२ ॥

---

## त्रयोदशः खण्डः।

पञ्चानामथ सत्राणां महतामुच्यते विधिः।
यैरिष्ट्वा सततं विप्रः प्राप्नुयात् सद्म शाश्वतम् ॥ १
देवभूतपितृब्रह्म-मनुष्याणामनुक्रमात्।
महासत्राणि जानीयात् त एवेह महामखाः ॥ २
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ३

श्राद्धं वा पितृयज्ञः स्यात् पित्र्यो वलिरथापि वा।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स चोच्यते॥ ४
स चार्व्वाक् तर्पणात् कार्य्यः पश्चाद्वा प्रातराहुतेः।
वैश्वदेवावसाने वा नान्यत्तत्रौ निमित्तकात्॥ ५
अनेकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा॥ ६
अप्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः॥ ७
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदीरयेत्।
हन्तकारं मनुष्येभ्यस्तदर्द्धे निनयेदपः॥ ८
मुनिभिर्द्दिरशनमुक्तं विप्राणां मर्त्त्यवासिनां नित्यम्।
अहनि च तथा तमस्विन्याः सार्द्धप्रहरयामान्तः॥ ९
सायं प्रातर्व्वैश्वदेवः कर्त्तव्यो वलिकर्म्म च।
अनश्नतापि सततमन्यथा किल्वीषी भवेत्॥ १०
अमुष्मै नम इत्येवं वलिदानं विधीयते।
वलिदानप्रदानार्थं नमस्कारः कृतो यतः॥ ११
स्वाहाकारवषट्कारनमस्कारा दिवौकसाम्।
स्वधाकारः पितृणाञ्च हन्तकारो नृणां कृतः॥ १२
स्वधाकारेण निनयेत् पित्र्यं वलिमतः सदा।
तदप्येके नमस्कारं कुर्व्वते नेति गौतमः॥ १३
नावरार्द्धग्रावलयोभवन्ति महामार्ज्जारश्रवणप्रमाणात्।
एकत्र चेदविलष्टा भवन्तीतरेतर संसक्ताश्च॥ १४

इति त्रयोदशः खण्डः॥ १३॥

## चतुर्द्दशः खण्डः ।

अथ तद्विन्यासो वृद्धिपिण्डानिवोत्तरांश्चतुरो बलीन् निदध्यात् पृथिव्यै वायवे विश्वेभ्यो देवेभ्यः प्रजापतय इति सव्यत एतेषामेकैकमन्तर ओषधिवनस्पतिभ्य आकाशाय कामायेत्येतेषामपि मन्यव इन्द्राय वासुकये ब्रह्मण इत्येतेषामपि रक्षोजनेभ्य इति सर्व्वेषां दक्षिणतः पितृभ्य इति चतुर्द्दश नित्या आलस्यप्रभृतयः काम्याः सर्व्वेषामुभयतोऽद्भिः परिषेकः पिण्डवच्च पश्चिमा प्रतिपत्तिः ॥ १

न स्यातां काम्यसामान्ये जुहोतिबलिकर्म्मणोः ।
पूर्व्वं नित्यविशेषोक्तं जुहोतिबलिकर्म्मणोः ॥ २
काममन्ते भवेयातां न तु मध्ये कदाचन ।
नैकस्मिन् कर्म्मणि ततो कर्म्मान्यत्तायते यतः ॥ ३
अग्न्यादिर्गौतमाद्युक्तो होमः शाकल एव च ।
अनाहिताग्नेरप्येष युज्यते बलिभिः सह ॥ ४
स्पृष्ट्वापो वीक्षमाणोऽग्निं कृताञ्जलिपुटस्ततः ।
वामदेव्यजपात् पूर्व्वं प्रार्थयेद्द्रविणोदयम् ॥ ५
आरोग्यमायुरैश्वर्य्यं धीर्धृतिः शं बलं यशः ।
ओजोवर्च्चः पशून् वीर्य्यं ब्रह्म ब्राह्मण्यमेव च ॥ ६
सौभाग्यं कर्म्मसिद्धिञ्च कुलज्यैष्ठं सुकर्त्तृताम् ।
सर्व्वमेतत् सर्व्वसाक्षिन् द्रविणोदरिरीहि णः ॥ ७

न ब्रह्मयज्ञादधिकोऽस्ति यज्ञो
न तत्प्रदानात् परमस्ति दानम् ।
सर्व्वे तदन्ताः क्रतवः सदाना
नान्तो दृष्टः कैश्चिदस्य द्विकस्य ॥ ८

ऋचः पठन् मधुपयःकुल्याभिस्तर्पयेत् सुरान्।
घृतामृतौघकुल्याभिर्यजूंष्यपि पठन् सदा॥ ९
सामान्यपि पठन् सोमघृतकुल्याभिरन्वहम्।
मेदःकुल्याभिरपि च अथर्व्वाङ्गिरसः पठन्॥ १०
मांसक्षीरौदनमधुकुल्याभिस्तर्पयेत् पठन्।
वाकोवाक्यं पुराणानि इतिहासानि चान्वहम्॥ ११
ऋगादीनामन्यतममेतेषां शक्तितोऽन्वहम्।
पठन् मध्वाज्यकुल्याभिः पितॄनपि च तर्पयेत्॥ १२
ते तृप्तास्तर्पयन्त्येनं जीवन्तं प्रेतमेव च।
कामचारी च भवति सर्व्वेषु सुरसद्मसु॥ १३
गुर्व्वप्येनो न तं स्पृशेत् पङ्क्तिञ्चैव पुनाति सः।
यं यं क्रतुञ्च पठति फलभाक् तस्य तस्य च॥ १४
वसुपूर्णां वसुमतीं त्रिर्द्दानफलमाप्नुयात्।
ब्रह्मयज्ञादपि ब्रह्म दानमेवातिरिच्यते॥ १५
इति चतुर्द्दशः खण्डः॥ १४॥

---

## पञ्चदशः खण्डः।

ब्रह्मणो दक्षिणा देया यत्र या परिकीर्त्तिता।
कर्म्मान्तेऽनुच्यमानापि पूर्णपात्रादिका भवेत्॥ १
यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते।
नावरार्द्ध्यमतः कुर्य्यात् पूर्णपात्रमिति स्थितिः॥ २
विदध्याच्छ्रौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत्।
स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्॥ ३

कुलर्त्विजमधीयानं सन्निकृष्टं तथा गुरुम्।
नातिक्रामेत् सदा दित्सन् य इच्छेदात्मनो हितम्॥ ४
अहमस्मै ददामीति एवमाभाष्य दीयते।
नैतावपृष्ट्वा ददतः पात्रेऽपि फलमस्ति हि॥ ५
दूरस्थाभ्यामपि द्वाभ्यां प्रदाय मनसा वरम्।
इतरेभ्यस्ततो देयादेव दानविधिः परः॥ ६
सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
यद्ददाति तमुल्लङ्घ्य ततः स्तेयेन युज्यते॥ ७
यस्य त्वेकगृहे मूर्खो दूरस्थश्च गुणान्वितः।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥ ८
ब्राह्मणाभिक्रमो नास्ति विप्रे वेदविवर्ज्जिते।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते॥ ९
आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा।
महीमयी वा कर्त्तव्या सर्व्वास्वाज्याहुतीषु च॥ १०
आज्यस्थाल्याः प्रमाणन्तु यथाकामन्तु कारयेत्।
सुदृढ़ामव्रणां भद्रामाज्यस्थालीं प्रचक्षते॥ ११
तिर्य्यगूर्द्ध्वं समिन्मात्रा दृढ़ा नातिबृहन्मुखी।
मृन्मय्यौदुम्बरी वापि चरुस्थाली प्रशस्यते॥ १२
स्वशाखोक्तिः प्रसुखिन्नो ह्यदग्धोऽकठिनः शुभः।
न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा॥ १३
इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्।
वृत्ताश्चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्॥ १४
एषैव दर्व्वी यस्तत्र विशेषस्तमहं ब्रुवे।
दर्व्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोऽनन्तमेक्षणम्॥ १५

मुषलोलूखले वार्च्चे स्वायते सुदृढ़े तथा।
इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च ॥ १६
दक्षिणं वामतो वाह्यमात्माभिमुखमेव च ।
करं करस्य कुर्व्वीत करणेन्यच्च कर्म्मणः ॥ १७
कृत्वाग्न्यभिमुखौ पाणी स्वस्थानस्थौ सुसंयतौ ।
प्रदक्षिणं तथासीनः कुर्य्यात् परिसमूहनम् ॥ १८
वाहुमात्राः परिधय ऋजवः सत्वचोऽव्रणाः ।
त्रयो भवन्ति शीर्णाग्रा एकेषान्तु चतुर्द्दिशम् ॥ १९
प्रागग्रावभितः पश्चादुदगग्रमथापरम् ।
न्यसेत् परिधिमन्यञ्चेदुदगग्रः स पूर्व्वतः ॥ २०
यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवानामिव गोधूमा व्रीहीणामिव शालयः ॥ २१
इति पञ्चदशः खण्डः ॥ १५ ॥

---

## षोड़शः खण्डः ।

पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥ १
यदा चतुर्द्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥ २
यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।
आनयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि ॥ ३
यच्चोक्तं दृश्यमानेऽपि तच्चतुर्द्दश्यपेक्षया ।
अमावास्यां प्रतीक्षेत तदन्ते वापि निर्व्वपेत् ॥ ४

अष्टमेंऽशे चतुर्द्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमांशे च पुनः किल भवेदणुः ॥ ५
आग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत् ।
विशेषमाभ्यां ब्रुवतो चन्द्रचारविदो जनाः ॥ ६
अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते, चतुर्थभागो न कलावशिष्टः ।
तदन्त एव क्षयमेति कृत्स्नमेवं ज्यातिश्चक्रविदो वदन्ति ॥७
यस्मिन्नब्दे द्वादशैकस्य यव्यस्तस्मिंस्तृतीयया
परिदृश्यो नोपजायते ।
एवं चारं चन्द्रमसो विदित्वा
क्षीणे तस्मिन्नपराह्णे च दद्यात् ॥ ८
सम्मिश्रा च चतुर्द्दश्या अमावस्या भवेत् क्वचित् ।
खर्व्विंतां तां विदुः केचिद्गताध्वामिति चापरे ॥ ९
वर्द्धमानाममावास्यां लभेच्चेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥ १०
पक्षादावेव कुर्व्वीत सदा पक्षादिकं चरुम् ।
पूर्व्वाह्ण एव कुर्व्वन्ति विद्धेऽप्यन्ये मनीषिणः ॥ ११
स्वपितुः पितृकृत्येषु ह्यधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥ १२
पितामहे ध्रियति च पितुः प्रेतस्य निर्व्वपेत् ।
पितुस्तस्य च वृत्तस्य जीवेच्चेत् प्रपितामहः ॥ १३
पितुः पितुः पितुश्चैव तस्यापि पितुरेव च ।
कुर्य्यात् पिण्डत्रयं यस्य संस्थितः प्रपितामहः ॥ १४
जीवन्तमपि दद्याद्वा प्रेतायान्नोदके द्विजः ।
पितुः पितृभ्यो वा दद्यात् स्वपितेत्यपरा श्रुतिः ॥ १५

पितामहः पितुः पश्चात् पञ्चत्वं यदि गच्छति ।
पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोड़शम् ॥ १६
नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः ।
पितुः सपिण्डनं कृत्वा कुर्य्यान्मासानुमासिकम् ॥ १७
असंस्कृतौ न संस्कार्य्यौ पूर्व्वौ पौत्रप्रपौत्रकैः ।
पितरं तत्र संस्कुर्य्यादिति कात्यायनोऽब्रवीत् ॥ १८
पापिष्ठमति शुद्धेन शुद्धं पापीकृतापि वा ।
पितामहेन पितरं संस्कुर्य्यादिति निश्चयः ॥ १९
ब्राह्मणादिहते ताते पतिते सङ्गवर्ज्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥ २०
मातुः सपिण्डीकरणं पितामह्या सहोदितम् ।
यथोक्तेनैव कल्पेन पुत्रिकाया न चेत् सुतः ॥ २१
न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्त्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता ॥ २२
मातुः प्रथमतः पिण्डं निर्व्वपेत् पुत्रिकासुतः ।
द्वितीयन्तु पितुस्तस्यास्तृतीयस्तु पितुः पितुः ॥ २३

इति षोड़शः खण्डः ॥ १६ ॥

---

## सप्तदशः खण्डः ।

पुरतो यात्मनः कर्षूः सा पूर्व्वा परिकीर्त्तयते ।
मध्यमा दक्षिणेनास्यास्तद्दक्षिणत उत्तमा ॥ १
वायूग्निदिक्षु खान्तास्ताः कार्य्याः सार्द्धाङ्गुलान्तराः ।
तीक्ष्णान्ता यवमध्याश्च मध्यं नाव द्रवोत्किरेत् ॥ २

शङ्कुश्च खादिरः कार्य्यो रजतेन विभूषितः।
शङ्कश्चैवोपवेषश्च द्वादशाङ्गुल इष्यते॥ ३
अग्न्याशाग्रैः कुशैः कार्य्यं कर्षूणां स्तरणं घनैः।
दक्षिणान्तं तदग्रैस्तु पितृयज्ञे परिस्तरेत्॥ ४
तगरं सुरभि ज्ञेयं चन्दनादि विलेपनम्।
सौवीराञ्जनमित्युक्तं पिञ्जलीनां यदञ्जनम्॥ ५
स्वस्तरे सर्व्वमासाद्य यथावदुपयुज्यते।
देवपूर्व्वं ततः श्राद्धमत्वरः शुचिरारभेत्॥ ६
आसनाद्यर्घ्यपर्य्यन्तं वसिष्ठेन यथेरितम्।
कृत्वा कर्म्माथ पात्रेषु उक्तं दद्यात्तिलोदकम्॥ ७
तूष्णीं पृथगपो दत्त्वा मन्त्रेण तु तिलोदकम्।
गन्धोदकञ्च दातव्यं सन्निकर्षक्रमेण तु॥ ८
आसुरेण तु पात्रेण यस्तु दद्यात् तिलोदकम्।
पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च॥ ९
कुलालचक्रनिष्पन्नमासुरं मृण्मयं स्मृतम्।
तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्॥ १०
गन्धान् ब्राह्मणसात् कृत्वा पुष्पाण्यृतुभवानि च।
धूपञ्चैवानुपूर्व्वेण ह्यग्नौ कुर्य्यादनन्तरम्॥ ११
अग्नौकरणहोमश्च कर्त्तव्य उपवीतिना।
प्राङ्मुखेनैव देवेभ्यो जुहोतीति श्रुतिः श्रुतेः॥ १२
अपसव्येन वा कार्य्यो दक्षिणाभिमुखेन च।
निरूप्य हविरन्यस्मा अन्यस्मै न हि हूयते॥ १३
स्वाहा कुर्य्यान्नचात्रान्ते न चैव जुहुयाद्धविः।
स्वाहाकारेण हुत्वाग्नौ पश्चान्मन्त्रं समापयेत्॥ १४

पिबेत्र यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निमान् ।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् ॥ १५
न कुर्य्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् ।
अन्येषाञ्चाविकृष्टानां कालेनाचमनादिना ॥ १६
सव्येन पाणिनेत्येवं यदत्र समुदीरितम् ।
परिग्रहणमात्रं तत् सव्यस्यादिशति व्रतम् ॥ १७
पित्र्यत्वाद्यभिसंगृह्य दक्षिणेनेतरात् करात् ।
अन्वारभ्य च सव्येन कुर्य्यादुल्लेखनादिकम् ॥ १८
यावदर्थमुपादाय हविषोऽर्भकमर्भकम् ।
चरुणा सह सन्नीय पिण्डान् दातुमुपक्रमेत् ॥ १९
पितुरुत्तरकर्ष्वग्रे मध्यमे मध्यमस्य तु ।
दक्षिणे तत्पितुश्चैव पिण्डान् पर्व्वणि निर्व्वपेत् ॥ २०
वाममावर्त्तनं केचिदुदगन्तं प्रचक्षते ।
सर्व्वं गोतमशाण्डिल्यौ शाण्डिल्यायन एव च ॥ २१
आवृत्य प्राणमायम्य पितॄन् ध्यायन् यथार्थतः ।
जपंस्तेनैव चावृत्य ततः प्राणं प्रमोचयेत् ॥ २२
शाकञ्च फाल्गुनाष्टम्यां स्वयं पत्न्यपि वा पचेत् ।
यस्तु शाकादिको होमः कार्य्योऽपूपाष्टकावृतः ॥ २३
आन्वष्टक्यं मध्यमायामिति गोभिलगोतमौ ।
वार्कखण्डिश्च सर्व्वासु कौत्सो मेनेऽष्टकासु च ॥ २४
स्थालीपाकं पशुस्थाने कुर्य्याद्यद्यनुकल्पितम् ।
श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्यनु ॥ २५

इति सप्तदशः खण्डः ॥ १७ ॥

---

## अष्टादशः खण्डः ।

सायमादि प्रातरन्तमेकं कर्म्म प्रचक्षते ।
दर्शान्तं पौर्णमासाद्यमेकमेव मनीषिणः ॥ १
ऊर्द्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोऽपि वाग्रिमः ।
य आयाति स होतव्यः स एवादिरिति श्रुतिः ॥ २
ऊर्द्ध्वं पूर्णाहुतेः कुर्य्यात् सायं होमादनन्तरम् ।
वैश्वदेवन्तु पाकान्ते बलिकर्म्मसमन्वितम् ॥ ३
ब्राह्मणान् भोजयेत् पश्चादभिरूपान् स्वशक्तितः ।
यजमानस्ततोऽश्नीयादिति कात्यायनोऽब्रवीत् ॥ ४
वैवाहिकेऽग्नौ कुर्व्वीत सायं प्रातस्त्वतन्द्रितः ।
चतुर्थीकर्म्म कृत्वैतदेतच्छात्यायनेर्म्मतम् ॥ ५
ऊर्द्ध्वं पूर्णाहुतिः प्रातर्हुत्वा तां सायमाहुतिम् ।
प्रातर्होमस्तदैव स्यादेष एवोत्तरो विधिः ॥ ६
पौर्णमास्यत्यये हव्यं होता वा यदहर्भवेत् ।
तदहर्ज्जुहुयादेवममावास्यात्ययेऽपि च ॥ ७
अहूयमानेऽनश्नं सेवयेत् कालं समाहितः ।
सम्पन्ने तु यथा तत्र हूयते तदिहोच्यते ॥ ८
आहुताः परिसङ्ख्याय पात्रे कृत्वाहुतीः सकृत् ।
मन्त्रेण विधिवद्धुत्वाधिकमेवापरा अपि ॥ ९
यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत् ।
चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा ॥ १०
अपि वाज्ञातमित्येषा प्राजापत्यापि वाहुतिः ।
होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः ॥ ११

यद्याग्निरग्निनान्येन सम्भवेदाहितः क्वचित् ।
अग्नये विविचय इति जुहुयाद्वा घृताहुतिम् ॥ १२
अग्नयेऽप्सुमते चैव जुहुयाद्वैद्युतेन चेत् ।
अग्नये शुचये चैव जुहुयाच्चेद्दुरग्निना ॥ १३
गृहदाहाग्निनाग्निस्तु यष्टव्यः क्षामवान् द्विजैः ।
दावाग्निना च संसर्गे हृदयं यदि तप्यते ॥ १४
द्विभूतो यदि संसृज्येत् संसृष्टमुपशामयेत् ।
असंसृष्टं जागरग्नेर्नद्विरिष्टमेवमुक्तवान् ॥ १५
न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम् ।
स्वगर्भसत्क्रियार्थांश्च यावन्नासौ प्रजायते ॥ १६
अग्निस्तु नामधेयादौ होमे सर्व्वत्र लौकिकः ।
न हि पित्रा समानीतः पुत्रस्य भवति क्वचित् ॥ १७
यस्याग्नावन्यहोमः स्यात् स वैश्वानरदैवतम् ।
चरुं निरुप्य जुहुयात् प्रायश्चित्तन्तु तस्य तत् ॥ १८
परेणाग्नौ हुते स्वार्थं परस्याग्नौ हुते स्वयम् ।
पितृयज्ञात्यये चैव वैश्वदेवद्वयस्य च ॥ १९
अनिष्ट्वा नवयज्ञेन नवान्नप्राशने तथा ।
भोजने पतितान्नस्य चरुर्वैश्वानरो भवेत् ॥ २०
स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥ २१
भूतप्रवाचने पत्नी यद्यसन्निहिता भवेत् ।
रजोरोगादिना तत्र कथं कुर्व्वन्ति याज्ञिकाः ॥ २२
महानसेऽन्नं या कुर्य्यात् सवर्णा तां प्रवाचयेत् ।
प्रणवाद्यपि वा कुर्य्यात् कात्यायनवचो यथा ॥ २३

यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा ।
दर्भसङ्ख्या न विहिता विष्टरास्तरणेषु च ॥ २४

इत्यष्टादशः खण्डः ॥ १८ ॥

---

## एकोनविंशः खण्डः ।

निक्षिप्याग्निं स्वदारेषु परिकल्पर्त्विजं तथा ।
प्रवसेत् कार्य्यवान् विप्रो वृथैव नचिरं क्वचित् ॥ १
मनसा नैत्यिकं कर्म्म प्रवसन्नप्यतन्द्रितः ।
उपविश्य शुचिः सर्व्वं यथाकालमनुद्रवेत् ॥ २
पत्न्या चाप्यवियोगिन्या शुश्रुष्योऽग्निर्व्विनीतया ।
सौभाग्यवित्तावैधव्यकामया भर्तृभक्तया ॥ ३
या वा स्याद्वीरसूरासामाज्ञासम्पादिनी प्रिया ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥ ४
दिनैकेन न कर्म्मस्यात् यथाज्यैष्ठं स्वशक्तितः ।
विभज्य सह वा कुर्य्युर्यथाज्ञानच्च शास्त्रवत् ॥ ५
स्त्रीणां सौभाग्यतो जैष्ठं विद्ययैव द्विजन्मनाम् ।
न हि ख्यात्या न तपसा भर्त्ता तुष्यति योषिताम् ॥ ६
भर्त्तुरादेशवर्त्तिन्या यथोमा बहुभिर्व्रतैः ।
अग्निश्च तोषितोऽमुत्र सा स्त्री सौभाग्यमाप्नुयात् ॥ ७
विनयावनतापि स्त्री भर्त्तुर्या दुर्भगा भवेत् ।
अमुत्रोमाग्निभर्त्तॄणामवज्ञातिः कृता तया ॥ ८
श्रोत्रियं सुभगां गाञ्च अग्निमग्निचितिं तथा ।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥ ९

पापिष्ठं दुर्भगामन्त्यं नग्नमुत्कृत्तनासिकम्।
प्रातरुत्थाय यः पश्येत् स कलेरुपयुज्यते॥ १०
पतिमुल्लङ्घ्य मोहात् स्त्री किं न किं नरकं व्रजेत्।
कृच्छ्रान्मनुष्यतां प्राप्य किं किं दुःखं न विन्दति॥ ११
पतिशुश्रूषयैव स्त्री कान् न लोकान् समश्नुते।
दिवः पुनरिहायाता सुखानामम्बुधिर्भवेत्॥ १२
सदारोऽन्यान् पुनर्दारान् कथञ्चित् कारणान्तरात्।
य इच्छेदग्निमान् कर्त्तुं क्व होमोऽस्य विधीयते॥ १३
स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन।
न ह्याहिताग्नेः स्वं कर्म्म लौकिकेऽग्नौ विधीयते॥ १४
षड़ाहुतिकमन्येन जुहुयाद्दृभुवदग्रणात्।
न ह्यात्मनोऽर्थं स्यात् तावद्यावन्न परिणीयते॥ १५
पुरस्तात् त्रिविकल्पं यत् प्रायश्चित्तमुदाहृतम्।
तत् षड़ाहुतिकं शिष्टैर्यज्ञविद्भिः प्रकीर्त्तितम्॥ १६
॥ इत्येकोनविंशः खण्डः॥ १९॥
इति कात्यायनविरचिते कर्म्मप्रदीपे द्वितीयः प्रपाठकः॥

---

## विंशः खण्डः।

असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षं हि भवेद्धुतमनर्थकम्॥ १
विहायाग्निं सभार्य्यश्चेत् सीमामदुल्लङ्घ्य गच्छति।
होमकालात्यये तस्य पुनराधानमिष्यते॥ २

अरण्योः क्षयनाशाग्निदाहैर्ग्निं समाहितः ।
पालयेदुपशान्तोऽस्मिन् पुनराधानमिष्यते ॥ ३
ज्येष्ठा चेद्वहुभार्य्यस्य अतिचारेण गच्छति ।
पुनराधानमत्रैक इच्छन्ति न तु गौतमः ॥ ५
दाहयित्वाग्निभिर्भार्य्यां सदृशीं पूर्व्वसंस्थिताम् ।
पात्रैश्चाथाग्निमादध्यात् कृतदारोऽविलम्बितः ॥ ४
एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्व्वमारिणीम् ।
दाहयित्वाग्निहोत्रेण यज्ञपात्रैश्च धर्म्मवित् ॥ ६
द्वितीयाञ्चैव यः पत्नीं दहेद्वैतानिकाग्निभिः ।
जीवन्त्यां प्रथमायान्तु ब्रह्मघ्नेन समं हि तत् ॥ ७
मृतायान्तु द्वितीयायां योऽग्निहोत्रं समुतसृजेत् ।
ब्रह्मोज्झं तं विजानीयाद्यश्च कामात् समुत्सृजेत् ॥ ८
मृतायामपि भार्य्यायां वैदिकाग्निं न हि त्यजेत् ।
उपाधिनापि तत्कर्म्म यावज्जीवं समापयेत् ॥ ९
रामोऽपि कृत्वा सौवर्णां सीतां पत्नीं यशस्विनीम् ।
ईजे यज्ञैर्व्वहुविधैः सह भ्रातृभिरच्युतः ॥ १०
यो दहेदग्निहोत्रेण स्वेन भार्य्यां कथञ्चन ।
स स्त्री सम्पद्यते तेन भार्य्या वास्य पुमान् भवेत् ॥ ११
भार्य्या मरणमापन्ना देशान्तरगतापि वा ।
अधिकारी भवेत् पुत्रो महापातकिनि द्विजे ॥ १२
मान्या चेन्म्रियते पूर्व्वं भार्य्या पतिविमानिता ।
त्रीणि जन्मानि सा पुंस्त्वं पुरुषः स्त्रीत्वमर्हति ॥ १३
पूर्व्वैव योनिः पूर्व्वावृत् पुनराधानकर्म्मणि ।
विशेषोऽत्राग्न्युपस्थानमाज्याहुत्यष्टकं तथा ॥ १४

कृत्वा व्याहृतिहोमान्तमुपतिष्ठेत पावकम् ।
अध्याय: केवलाग्नेय: कस्तेजामिरमानस: ॥ १५
अग्निमीड़े अग्न आयाह्यग्न आयाहि वीतये ।
तिस्रोऽग्निर्ज्योतिरित्यग्निं दूतमग्ने मृड़ेति च ॥ १६
इत्यष्टावाहुतीर्हुत्वा यथाविध्यनुपूर्व्वश: ।
पूर्णाहुत्यादिकं सर्व्वमन्यत् पूर्व्ववदाचरेत् ॥ १७
अरण्योरल्पमप्यङ्गं यावत् तिष्ठति पूर्व्वयो: ।
न तावत् पुनराधानमन्यारण्योर्विधीयते ॥ १८
विनष्टं स्रुक् स्रुवं न्युब्जं प्रत्यक्स्थलमुदर्च्चिषि ।
प्रत्यगग्रञ्च मुषलं प्रहरेज्जातवेदसि ॥ १९
इति विंश: खण्ड ॥ २० ॥

---

## एकविंश: खण्ड: ।

स्वयं होमासमर्थस्य समीपमुपसर्पणम् ।
तत्राप्यसक्तस्य सत: शयनाच्चोपवेशनम् ॥ १
हुतायां सायमाहुत्यां दुर्व्वलश्चेद्‌गृही भवेत् ।
प्रातर्होमस्तदैव स्याज्जीवेच्चेच्छ्वः पुनर्न वा ॥ २
दुर्व्वलं स्नापयित्वा तु शुद्धचैलाभिसंवृतम् ।
दक्षिणाशिरसं भूमौ वर्हिष्मत्यां निवेशयेत् ॥ ३
घृतेनाभ्यक्तमाप्लाव्य सवस्त्रमुपवीतिनम् ।
चन्दनोक्षितसर्व्वाङ्गं सुमनोभिर्व्विभूषितम् ॥ ४
हिरण्यशकलान्यस्य क्षिप्त्वा च्छिद्रेषु सप्तसु ।
मुखेष्वथापिधायैनं निर्हरेयु: सुतादय: ॥ ५

आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम् ।
एकोऽनुगच्छेत् तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि ॥ ६
अर्द्धमादहनं प्राप्त आसीनो दक्षिणामुखः ।
सव्यं जान्वाच्य शनकैः सतिलः पिण्डदानवत् ॥ ७
अथ पुत्रादिराप्लुत्य कुर्य्याद्दारुचयं महत् ।
भूप्रदेशे शुचौ देशे पश्चाच्चित्यादिलक्षणे ॥ ८
तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे ।
आज्यपूर्णां स्रुवं दद्याद्दक्षिणाग्रां नसि स्रुवम् ॥ ९
पादयोरधरां प्राचीमरणीमुरसीतराम् ।
पार्श्वयोः शूर्पचमसे सव्यदक्षिणयोः क्रमात् ॥ १०
मूषलेन सहान्युजमन्तरूर्व्वोरुदूखलम् ।
चत्री विलीकमवैवमनश्रुनयनो विभोः ॥ ११
अपसव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः ।
अथाग्निं सव्यजान्वक्तो दद्याद्दक्षिणतः शनैः ॥ १२
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहेति यजुरीरयन् ॥ १३
एवं गृहपतिर्दग्धः सर्व्वं तरति दुष्कृतम् ।
यश्चैनं दाहयेत् सोऽपि प्रजां प्राप्नोत्यनिन्दिताम् ॥ १४
यथा स्वायुधधृक् पान्थो ऽरण्यान्यापि निर्भयः ।
अतिक्रम्यात्मनोऽभीष्टं स्थानमिष्टञ्च विन्दति ॥ १५
एवमेषोऽग्निमान् यज्ञपात्रायुधविभूषितः ।
लोकानन्याननतिक्रम्य एवं ब्रह्मैव विन्दति ॥ १६

इत्येकविंशः खण्डः ॥ २१ ॥

---

## द्वाविंशः खण्डः।

अथानवेक्षमित्यापः सर्व्व एव शवस्पृशः।
स्नात्वा सचैलमाचम्य दद्युरस्योदकं स्थले॥ १
गोत्रनामानुरादान्ते तर्पयामीत्यनन्तरम्।
दक्षिणाग्रान् कुशान् कृत्वा सतिलन्तु पृथक् पृथक्॥ २
एवं कृतोदकान् सम्यक् सर्व्वान् शाद्वलसंस्थितान्।
आप्लुत्य पुनराचान्तान् वदेयुस्तेऽनुयायिनः॥ ३
मा शोकं कुरुतानित्ये सर्व्वस्मिन् प्राणधर्म्मिणि।
धर्म्मं कुरुत यत्नेन यो वः सह गमिष्यति॥ ४
मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्।
यः करोति स सम्मूढ़ो जलवुद्‌वुदसन्निभे॥ ५
गन्त्री वसुमती नाशमुदधिर्द्दैवतानि च।
फेनप्रख्यः कथं नाशं मर्त्तलोको न यास्यति॥ ६
पञ्चधा स स्मृतः कायो यदि पञ्चत्वमागतः।
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना॥ ७
सर्व्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्॥ ८
श्लेष्माश्रु वान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यं हि क्रियाः कार्य्याः प्रयत्नतः॥ ९
एवमुक्ता व्रजेयुस्ते गृहाद्बालपुरःसराः।
स्नानाग्निस्पर्शनाद्याशैः शुध्येयुरितरे कृतैः॥ १०

इति द्वाविंशः खण्डः॥ २२॥

---

# त्रयोविंशः खण्डः।

एवमेवाहिताग्नेस्तु पात्रन्यासादिकं भवेत्।
कृष्णाजिनादिकस्तत्र विशेषः सूत्रचोदितः॥ १
विदेशमरणेऽस्थीनि ह्याहृत्याभ्यज्य सर्पिषा।
दाहयेदूर्णयाच्छाद्य पात्रन्यासादि पूर्व्ववत्॥ २
अस्थामलाभे पर्णानि सकलान्युक्तयावृता।
भर्ज्जयेदस्थिसङ्ख्यानि ततः प्रभृति सूतकम्॥ ३
महापातकसंयुक्तो दैवात् स्यादग्निमान् यदि।
पुत्रादिः पालयेदग्निं युक्त आ-दोषसंक्षयात्॥ ४
प्रायश्चित्तं न कुर्य्याद्यः कुर्व्वन् वा म्रियते यदि।
गृह्यं निर्व्वापयेच्छ्रौतमप्स्वस्येत् सपरिच्छदम्॥ ५
सादयेदुभयं वाप्सु छन्दोगोऽग्निरभवद् यतः।
पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत्॥ ६
अनयैवावृता नारी दग्धव्या वा व्यवस्थिता।
अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः॥ ७
अग्निनैव दहेद्भार्य्यां सतन्त्रा पतिता न चेत्।
तदुत्तरेण पात्राणि दाहयेत् पृथगन्तिके॥ ८
अपरेद्युस्तृतीये वा अस्था सञ्चयनं भवेत्।
यस्तत्र विधिरादिष्ट ऋषिभिः सोऽधुनोच्यते॥ ९
स्नान्तं पूर्व्ववत् कृत्वा गव्येन पयसा ततः।
सिञ्चेदस्थीनि सर्व्वाणि प्राचीनावीत्यभाषयन्॥ १०
शमीपलाशशाखाभ्यामुद्धृत्योद्धृत्य भस्मनः।
आज्येनाभ्यज्य गव्येन सेचयेद्गन्धवारिणा॥ ११

मृत्पात्रसम्पुटं कृत्वा सूत्रेण परिवेष्ट्य च।
खभ्रं खात्वा शुचौ भूमौ निखनेद्दक्षिणामुखः॥ १२
पूरयित्वावटं पङ्कपिण्डशैवालसंयुतम्।
दत्त्वोपरि समं शेषं कुर्य्यात् पूर्व्वोक्तकर्म्मणा॥ १३
एवमेवाग्टहीताग्नेः प्रेतस्य विधिरिष्यते।
स्त्रीणामिवाग्निदानं स्यादथातोऽनुक्रमुच्यते॥ १४
इति त्रयोविंशः खण्डः॥ २३॥

---

## चतुर्व्विंशः खण्डः।

सूतके कर्म्मणां त्यागः सन्ध्यादीनां विधीयते।
होमः श्रौते तु कर्त्तव्यः शुष्कान्नेनापि वा फलैः॥ १
अकृतं हावयेत् स्मार्त्ते तदभावे कृताकृतम्।
कृतं वा हावयेदन्नमन्नरम्भविधानतः॥ २
कृतमोदनशक्त्वादि तण्डुलादि कृताकृतम्।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः॥ ३
सूतके च प्रवासेषु चाशक्तौ श्राद्धभोजने।
एवमादिनिमित्तेषु हावयेदिति योजयेत्॥ ४
न त्यजेत् सूतके कर्म्म ब्रह्मचारी स्वकं क्वचित्।
न दीक्षणात् परं यज्ञे न कृच्छ्रादि तपश्चरन्॥ ५
पितर्य्यपि मृते नैषां दोषो भवति कर्हिचित्।
अशौचं कर्म्मणोऽन्ते स्यात् त्र्यहं वा ब्रह्मचारिणः॥ ६
श्राद्धमग्निमतः कार्य्यं दाहादेकादशेऽहनि।
प्रत्याब्दिकन्तु कुर्व्वीत प्रमीताहनि सर्व्वदा॥ ७

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा।
सपिण्डीकरणञ्चैव एतद्वै श्राद्धषोड़शम्॥ ८
एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।
न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा॥ ९
यानि पञ्चदशाद्यानि अपुत्रस्येतराणि तु।
एकस्मिन्नह्नि देयानि सपुत्रस्यैव सर्व्वदा॥ १०
न योषायाः पतिर्दद्यादपुत्रया अपि क्वचित्।
न पुत्रस्य पिता दद्यान्नानुजस्य तथाग्रजः॥ ११
एकादशेऽह्नि निर्व्वर्त्य अर्व्वाग्दर्शाद्यथाविधि।
प्रकुर्व्वीताग्निमान् पुत्रो मातापित्रोः सपिण्डताम्॥ १२
सपिण्डिकरणादूर्द्ध्वं न दद्यात् प्रतिमासिकम्।
एकोद्दिष्टेन विधिना दद्यादित्याह गोतमः॥ १३
कर्षूसमन्वितं मुक्त्वा यथाद्यं श्राद्धषोड़शम्।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षड़िति स्थितिः॥ १४
अर्घ्येऽचय्योदके चैव पिण्डदानेऽवने जने।
तन्त्रस्य तु निवृत्तिः स्यात् स्वधावाचन एव च॥ १५
ब्रह्मदण्डादियुक्तानां येषां नास्त्यग्निसत्क्रिया।
श्राद्धादिसत्क्रियाभाजो न भवन्तीह ते क्वचित्॥ १६
इति चतुर्व्विंशः खण्डः॥ २४

## पञ्चविंशः खण्डः ।

मन्त्रान्तेऽग्न इत्येत । पञ्चकं लाघवार्थिभिः ।
पठ्यते तत्प्रयोगे स्यात्मन्त्राणामिव विंशतिः ॥ १
अग्नेः स्थाने वायुचन्द्रसूर्य्याबहुवदूह्य च ।
समस्य पञ्चमीसूक्ते चतुश्चतुरिति श्रुतः ॥ २
प्रथमे पञ्चके पापो लक्ष्मीरिति पदं भवेत् ।
अपि पञ्चसु मन्त्रेषु इति यज्ञविदो विदुः ॥ ३
द्वितीये तु पतिघ्नीस्यादपुत्रे ति तृतीयके ।
चतुर्थे त्वयशस्येति इदमाहुतिनिश्चकम् ॥ ४
धृतिहोमे न प्रयुञ्ज्याद्रोनामसु तथाष्टसु ।
चतुर्थ्यामन्ना इत्यन्नोनामसु हि हूयते ॥ ५
लताग्रपल्लवो गूढः शुङ्गेति परिकीर्त्त्यते ।
पतिव्रता व्रतवती ब्रह्मबन्धुस्तथाश्रुतः ॥ ६
श्लाटु नीलमित्युक्तं ग्रन्थः स्तवक उच्यते ।
कपुष्णिकाभितः केशा मूर्द्ध्नि पश्चात् कपुच्छलम् ॥ ७
स्याविच्छलाका शललो तथा वीरतरः शरः ।
तिलतण्डुलसम्पृक्तः कृशरः सोऽभिधीयते ॥ ८
नामधेये मुनिवसुपिशाचाबहुवत् सदा ।
यत्राश्च पितरो देवा यष्टव्यास्तिथिदेवताः ॥ ९
आग्नेयाद्येऽथ सर्पाद्ये विशाखाद्ये तथैव च ।
आषाढाद्ये धनिष्ठाद्ये अश्विन्याद्ये तथैव च ॥ १०
द्वन्द्वान्येतानि बहुवद्दयाणां जुहुयात् सदा ।
द्वन्द्वद्वयं द्विवच्छेषमवशिष्टान्यथैकवत् ॥ ११

देवता अपि हूयन्ते बहुवत् सर्पवत्स्वपः ।
देवाश्च पितरश्चैव हविषद्भर्गाश्विनौ सदा ॥ १२
ब्रह्मचारी समादिष्टो गुरुणा व्रतकर्म्मणि ।
बाढ़मोमिति वा ब्रूयात् तथा चैवानुपालयेत् ॥ १३
सशिखं वपनं कार्य्यमास्नानाद्ब्रह्मचारिणा ।
आशरीरविमोचाय ब्रह्मचर्य्यं न चेद्भवेत् ॥ १४
न गात्रोत्सादनं कुर्य्यादनापदि कदाचन ।
जलक्रीड़ामलङ्कारान् व्रती दण्ड इवाप्लवेत् ॥ १५
देवतानां विपर्य्यासे जुह्वोतिषु कथं भवेत् ।
सर्व्वं प्रायश्चित्तं हुत्वा क्रमेण जुहुयात् पुनः ॥ १६
संस्कारा अतिपत्येरन् स्वकालश्चेत् कथञ्चन ।
हुत्वैतदेव कर्त्तव्या ये तूपनयनादधः ॥ १७
अनिष्ट्वा नवयज्ञेन नवान्नं योऽश्यकामतः ।
वैश्वानरश्चरुस्तस्य प्रायश्चित्तं विधीयते ॥ १८
इति पञ्चविंशः खण्डः ॥ २५ ॥

---

## षड्विंशः खण्डः ।

चरुः समसनीयो यस्तथा गोयज्ञकर्म्मणि ।
वृषभोत्सर्ज्जने चैव अश्वयज्ञे तथैव च ॥ १
आवण्यां वा प्रदोषे यो कृष्यारम्भे तथैव च ।
कथमेतेषु निर्व्वापाः कथञ्चैव जुह्वोतयः ॥ २
देवतासंख्यया ग्राह्या निर्व्वपास्तु पृथक् पृथक् ।
तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक् ॥ ३

यावता होमनिर्वृत्तिर्भवद्दो यत्र कीर्त्तिता।
शेषश्चैव भवेत् किञ्चित् तावन्तं निर्व्वपेच्चरुम्॥ ४
चरौ समश्नीये तु पितृयज्ञे चरौ तथा।
होतव्यं मेक्षणेनाज्य उपस्तीर्णाभिघारितम्॥ ५
कालः कात्यायनेनोक्तो विधिश्चैव समासतः।
वृषोत्सर्गे यतो नोऽत्र गोभिलेन तु भाषितः॥ ६
पारिभाषिक एव स्यात् कालो गोवाजियज्ञयोः।
अन्यस्मादुपदेशात्तु प्रस्तरारोहणस्य च॥ ७
अथवा मार्गपाल्येऽह्नि कालो गोयज्ञकर्म्मणः।
नीराजनेऽह्नि वाश्वानामितितन्त्रान्तरे विधिः॥ ८
शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः॥ ९
आश्वयुज्यां तथा कृष्यां वास्तुकर्म्मणि याज्ञिकाः।
यज्ञार्थतत्त्ववेत्तारो होममेवं प्रचक्षते॥ १०
द्वे पञ्च द्वे क्रमेणैता हविराहुतयः स्मृताः।
शेषा आज्येन होतव्या इति कात्यायनोऽब्रवीत्॥ ११
पयो यदाज्यसंयुक्तं तत् पृषातकमुच्यते।
दध्येके तदुपासाद्य कर्त्तव्यः पायसश्चरुः॥ १२
व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः।
यवाश्चौषधयः सप्त विपदं घ्नन्ति धारिताः॥ १३
संस्काराः पुरुषस्यैते स्मर्य्यन्ते गोतमादिभिः।
अतोऽष्टकादयः कार्य्याः सर्व्वे कालक्रमोदिताः॥ १४
सकृदप्यष्टकादीनि कुर्य्यात् कर्म्माणि यो द्विजः।
स पङ्क्तिपावनो भूत्वा लोकान् प्रैति घृतश्चुतः॥ १५

एकाहमपि कर्म्मस्थो योऽग्निशुश्रुषकः शुचिः ।
नयत्यत्र तदेवास्य शताहं दिवि जायते ॥ १६
यस्त्वाधायाग्निमाशास्य देवादीनैभिरिष्टवान् ।
निराकर्त्तामरादीनां स विज्ञेयो निराकृतिः ॥ १७
इति षड़्विंशः खण्डः ।

---

## सप्तविंशः खण्डः ।

यच्छ्राद्धं कर्म्मणामादौ या चान्ते दक्षिणा भवेत् ॥
अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते ॥ १
एकसाध्येष्वबर्हिःषु न स्यात् परिसमूहनम् ।
नोदगासादनञ्चैव चिप्रहोमा हि ते मताः ॥ २
अभावे व्रीहियवयोर्दध्ना वा पयसापि वा ।
तदभावे यवाग्वा वा जुहुयादुदकेन वा ॥ ३
रौद्रन्तु राक्षसं पित्र्यमासुरञ्चाभिचारिकम् ॥
उक्त्वा मन्त्रं स्पृशेदाप आलभ्यात्मानमेव च ॥ ४
यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥ ५
लवणं मधु मांसञ्च क्षारांशो येन हूयते ।
उपवासेन भुञ्जीत नोक्तरात्रौ न किञ्चन ॥ ६
स्वकाले सायमाहुत्य अप्राप्तौ होतृहव्ययोः ।
प्राक्प्रातराहुतेः कालः प्रायश्चित्ते हुते सति ॥ ७
प्राक्सायमाहुतेः प्रातर्होमकालानतिक्रमः ।
प्राक्पौर्णमासाद्दर्शस्य प्राग्दर्शादितरस्य तु ॥ ८

वैश्वदेवे त्वतिक्रान्ते अहोरात्रमभोजनम् ।
प्रायश्चित्तमथो हुत्वा पुनः सन्तनुयाद्व्रतम् ॥ ९
होमद्वयात्यये दर्शपौर्णमासात्यये तथा ।
पुनरेवाग्निमादध्यादिति भार्गवशासनम् ॥ १०
अनृचो माणवो ज्ञेय एणः कृष्णमृगः स्मृतः ।
रुरुर्गौरमृगः प्रोक्तस्मरः शल उच्यते ॥ ११
केशान्तिको ब्राह्मणस्य दण्डः कार्य्यः प्रमाणतः ।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥ १२
ऋजवस्ते तु सर्व्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा नृणां सत्वचोऽनग्निदूषिताः ॥ १३
गौर्विशिष्टतया विप्रैर्व्वेदेष्वपि निगद्यते ।
न ततोऽन्यद्वरं यस्मात्तस्माद्गौर्व्वर उच्यते ॥ १४
येषां व्रतानामन्तेषु दक्षिणा न विधीयते ।
वरस्तत्र भवेद्दानमपि वाच्छादयेद्गुरुम् ॥ १५
अस्थानोच्छ्वासविच्छेदघोषणाध्यापनादिकम् ।
प्रमादिकं श्रुतौ यत् स्यादयातयामत्वकारि तत् ॥ १६
प्रत्यब्दं यदुपाकर्म्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते च्छन्दसां तेन पुनराप्यायनं भवेत् ॥ १७
अयातयामैश्छन्दोभिर्यत् कर्म्म क्रियते द्विजैः ।
क्रीड़मानमपि सदा तत्तेषां सिद्धिकारकम् ॥ १८
गायत्रीश्च सगायत्रां बार्हस्पत्यमिति त्रिकम् ।
शिष्येभ्योऽनूच्य विधिवदुपाकुर्य्यात्ततः श्रुतिम् ॥ १९
छन्दसामेकविंशानां संहितायां यथाक्रमम् ।
तच्छन्दस्काभिरेवर्गभिराद्याभिर्होम इष्यते ॥ २०

पर्व्वभिश्चैव गानेषु ब्राह्मणेयुत्तरादिभिः ॥
अङ्गेषु चर्चामन्त्रेषु इति षष्टिर्जुहोतयः ॥ २१

इति सप्तविंशः खण्डः ॥ २७

---

## अष्टाविंशः खण्डः।

अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते।
भृष्टास्तु व्रीहयो लाजा घटः खाण्डिक उच्यते ॥ १
नाधीयीत रहस्यानि सोत्तराणि विचक्षणः।
न चोपनिषदश्चैव षण्मासान् दक्षिणायनात् ॥ २
उपाकृत्योदगयने ततोऽधीयीत धर्म्मवित्।
उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेऽपि वा ॥ ३
अजातव्यञ्जना लोम्नी न तया सह संविशेत्।
अयुगूः काकवन्ध्याया जाता तां न विवाहयेत् ॥ ४
संसक्तपदविन्यासस्त्रिपदः प्रक्रमः स्मृतः।
स्मार्त्ते कर्म्मणि सर्व्वत्र श्रौते त्वध्वर्य्युणोदितः ॥ ५
यस्यां दिशि वलिं दद्यात्तामेवाभिमूखो वलिम्।
श्रवणाकर्म्मणि भवेन्नग्रहकर्म्म न सर्व्वदा ॥ ६
वलिशेषस्य हवनमग्निप्रणयनं तथा।
प्रत्यहं न भवेयातामुल्मुकन्तु भवेत् सदा ॥ ७
पृषातकप्रेषणयोर्नवस्य हविषस्तथा।
शिष्टस्य प्राशने मन्त्रस्तत्र सर्व्वेऽधिकारिणः ॥ ८
ब्राह्मणानामसान्निध्ये स्वयमेव पृषातकम्।
अवेक्षेत्तविषः शेषं नवयज्ञेऽपि भक्षयेत् ॥ ९

सकला वदरीशाखा कलवत्यभिधीयते।
धनाविसिकताशङ्काः स्मृता जातुशिलास्तु ताः॥ १०
नष्टो विनष्टो मणिकः शिलानाशे तथैव च।
लब्ध्वैवाहृत्य संस्कार्य्यो नापेक्षेदाग्रहायणीम्॥ ११
श्रवणाकर्म्म लुप्तञ्चेत् कथञ्चित् सूतकादिना।
आग्रहायणिकं कुर्य्याद्बलिवर्ज्जमशेषतः॥ १२
ऊर्द्ध्वं स्रस्तरशायी स्याद्मासमर्द्धमथापि वा।
सप्तरात्रं त्रिरात्रं वा एकां वा सद्य एव वा॥ १३
नोर्द्ध्वं मन्त्रप्रयोगः स्यान्नान्यागारं नियम्यते।
नाहतास्तरणञ्चैव न पार्श्वञ्चापि दक्षिणम्॥ १४
दृढ़ञ्चेदाग्रहायण्यामावृत्तावपि कर्म्मणः।
कुम्भो मन्त्रवदासिञ्चेत् प्रतिकुम्भमृचं पठेत्॥ १५
अल्पानां यो विघातः स्यात् स वाधो वहुभिः स्मृतः।
प्राणसम्मित इत्यादिवासिष्ठं वाधितं यथा॥ १६
विरोधो यत्र वाक्यानां प्रमाणं तत्र भूयसाम्।
तुल्यप्रमाणकत्वे तु न्याय एवं प्रकीर्त्तितः॥ १७
त्र्यम्बकं करतलमपूपा मण्डकाः स्मृताः।
पालाशा गोलकाश्चैव लोहचूर्णञ्च चीवरम्॥ १८
स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि।
अनुमन्त्रणीयं सर्व्वं च सदैवमनुमन्त्रयेत्॥ १९

इत्यष्टाविंशः खण्डः॥ २८॥

---

## एकोनत्रिंशः खण्डः ।

चालनं दर्भकूर्चेन सर्व्वत्र स्रोतसां पशोः ।
तूष्णीमिच्छाक्रमेण स्यादृसार्थे पार्श्वदारुणो ॥ १
सप्त तावन्मूर्द्धन्यानि तथा स्तनचतुष्टयम् ।
नाभिः श्रोणिरपानञ्च गोत्रं तानि चतुर्द्दश ॥ २
क्षुरो मांसावदानार्थः कृत्स्ना शिष्टकदाहृता ।
वसामादाय जुहुयात् तत्र मन्त्रं समापयेत् ॥ ३
हृज्जिह्वा क्रोडसक्थीनि यकृद्वृक्कौ गुदं स्तनाः ।
श्रोणिस्कन्धसटापार्श्वं पश्वङ्गानि प्रचक्षते ॥ ४
एकादशानामङ्गानामवदानानि सङ्ख्यया ।
पार्श्वस्य वृक्कसक्थ्नोश्च द्वित्वादाहुश्चतुर्द्दश ॥ ५
चरितार्था श्रुतिः कार्य्या यस्मादप्यनुकल्पशः ।
अतोऽष्टर्चेन होमः स्याच्छागपक्षे चरावपि ॥ ६
अवदानानि यावन्ति क्रियेरन् प्राप्तये पशोः ।
तावतः पायसान् पिण्डान् पशुभावेऽपि कारयेत् ॥ ७
छेदनव्यञ्जनार्थन्तु पशुाभावेऽपि पायसम् ।
सद्रवं श्रपयेत् तद्वदन्वष्टक्येऽपि कर्म्मणि ॥ ८
प्राधान्यं पिण्डदानस्य केचिदाहुर्मनीषिणः ।
गयादौ पिण्डमात्रस्य दीयमानत्वदर्शनात् ॥ ९
भोजनस्य प्रधानत्वं वदन्त्यन्ये महर्षयः ।
ब्राह्मणस्य परीक्षायां महायत्नप्रदर्शनात् ॥ १०
आमश्राद्धविधानस्य विना पिण्डैः क्रियाविधिः ।
तदालभ्यःप्यनध्यायविधानश्रवणादपि ॥ ११

विद्वन्मतमुपादाय ममाप्येतद्धृदि स्थितम्।
प्रधानमुभयोर्यस्मात् तस्मादेष समुच्चयः॥ १२
प्राचीनावीतिना कार्य्यं पित्र्येषु प्रोक्षणं पशोः।
दक्षिणोद्वासनान्तञ्च चरोर्निर्व्वपणादिकम्॥ १३
सन्नयस्यावदानानां प्रधानार्थो न चेतरः।
प्रधानं हवनञ्चैव शेषं प्रकृतिवद्भवेत्॥ १४
दीपमुन्नतमाख्यातं शाद्वा च्वेष्टका स्मृता।
कौलिनं सजलं प्रोक्तं दूरखातोदको मरुः॥ १५
द्वारगवाक्षस्तम्भैः कर्णमभित्यन्तकोणवेधैश्च।
नेष्टं वास्तुद्वारं विद्धमनाक्रान्तमार्य्यैश्च॥ १६
वत्सङ्गमावित्ति व्रीहीञ्छ्रुत्वेति यवांस्तथा।
अमावित्यत्र नामोक्त्वा जुहुयात् च्छिप्रहोमवत्॥ १७
साक्षतं सुमनोयुक्तमुदकं दधिसंयुतम्।
अर्घ्यं दधिमधुभ्याञ्च मधुपर्को विधीयते॥ १८
कांस्येनैवार्हणीयस्य निनयेदर्घ्यमञ्जलौ।
कांस्यापिधानं कांस्यस्थं मधुपर्कं समर्पयेत्॥ १९

इत्येकोनत्रिंशः खण्डः॥ २९

इति कात्यायनविरचिते कर्म्मप्रदीपे तृतीयः प्रपाठकः॥

---

# बृहस्पतिसंहिता।

इष्ट्वा क्रतुशतं राजा समाप्तवरदक्षिणम्।
मघवान् वाग्विदां श्रेष्ठं पर्य्यपृच्छद् बृहस्पतिम्॥ १
भगवन् केन दानेन सर्व्वतः सुखमेधते।
यद्दत्तं यन्महार्घञ्च तन्मे ब्रूहि महातपः॥ २
एवमिन्द्रेण पृष्टोऽसौ देवदेवपुरोहितः।
वाचस्पतिर्म्महाप्राज्ञो बृहस्पतिरुवाच ह॥ ३
सुवर्णदानं गोदानं भूमिदानञ्च वासव।
एतत् प्रयच्छमानस्तु सर्व्वं पापैः प्रमुच्यते॥ ४
सुवर्णं रजतं वस्त्रं मणिरत्नञ्च वासव।
सर्व्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति॥ ५
फालाकृष्टां महीं दत्त्वा सबीजां शस्यशालिनीम्।
यावत् सूर्य्यकरा लोकास्तावत् स्वर्गे महीयते॥ ६
यत्किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्षितः।
अपि गोचर्म्ममात्रेण भूमिदानेन शुध्यति॥ ७
दशहस्तेन दण्डेन त्रिंशद्दण्डानि वर्त्तनम्।
दश तान्येव विस्तारा गोचर्म्मैतन्महाफलम्॥ ८
सवृषं गोसहस्रञ्च यत्र तिष्ठत्यतन्द्रितम्।
बालवत्सप्रसूतानां तद्गोचर्म्म इति स्मृतम्॥ ९
विप्राय दद्याच्च गुणान्विताय तपोनियुक्ताय जितेन्द्रियाय।
यावन्मही तिष्ठति सागरान्ता तावत् फलं तस्य भवेदनन्तम्॥

यथा बीजानि रोहन्ति प्रकीर्णानि महीतले।
एवं पुण्याः प्ररोहन्ति भूमिदानसमार्ज्जिताः॥ ११
यथाप्सु पतितः सद्यस्तैलबिन्दुः प्रसर्पति।
एवं भूमिकृतं दानं शस्ये शस्ये प्ररोहति॥ १२
अन्नदाः सुखिनो नित्यं वस्त्रदश्चैव रूपवान्।
स नरः सर्व्वदा भूपो यो ददाति वसुन्धराम्॥ १३
यथा गौर्भरते वत्सं चीरमुत्सृज्य चीरिणी।
एवं दत्ता सहस्राच भूमिर्भरति भूमिदम्॥ १४
शङ्खं भद्रासनं छत्रं चरस्थावरवारणाः।
भूमिदानस्य पुण्यानि फलं स्वर्गः पुरन्दर॥ १५
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः।
शूलपाणिश्च भगवानभिनन्दति भूमिदम्॥ १६
आस्फोटयन्ति पितरः प्रहर्षन्ति पितामहाः।
भूमिदाता कुले जातः स नस्त्राता भविष्यति॥ १७
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती।
तारयन्ति हि दातारं सर्व्वात् पापादसंशयम्॥ १८
प्रावृता वस्त्रदा यान्ति नग्ना यान्ति त्ववस्त्रदाः।
तृप्ता यान्त्यन्नदातारः क्षुधिता यान्त्यनन्नदाः॥ १९
काङ्क्षन्ति पितरः सर्व्वे नरकाद्भयभीरवः।
गयां यो यास्यति पुत्रः स नस्त्राता भविष्यति॥ २०
एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥ २१
लोहितो यस्तु वर्णेन पुच्छाग्रे यस्तु पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥ २२

नील: पाण्डुरलाङ्गूलस्तृणमुद्धरते तु य: ।
षष्टिर्व्वर्षसहस्राणि पितरस्तेन तर्पिता: ॥ २३
यच्च शृङ्गगतं पङ्कं कूलात्तिष्ठति चोद्धृतम् ।
पितरस्तस्य गच्छन्ति सोमलोकं शुभाद्युतिम् ॥ २४
पृथ्वो यदोर्द्दिलोपस्य नृगस्य नहुषस्य च ।
अन्येषाञ्च नरेन्द्राणां पुनरन्या भविष्यति ॥ २५
वहुभिर्व्वसुधा दत्ता राजभि: सगरादिभि: ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ २६
यस्तु ब्रह्मघ्न: स्त्रीघ्नो वा यस्तु वै पितृघातक: ।
गवां शतसहस्राणां हन्ता भवति दुष्कृती ॥ २७
स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ।
स्वविष्ठायां क्रिमिर्भूत्वा पितृभि: सह पच्यते ॥ २८
आक्षेप्ता वानुमन्ता च तमेव नरकं व्रजेत् ॥ २९
भूमिदो भूमिहर्त्ता च नापरं पुण्यपापयो: ।
ऊर्द्धाधो वावतिष्ठेत यावदाभूतसंप्लवम् ॥ ३०
अग्नेरपत्यं प्रथमं हिरण्यं भूर्वैष्णवी सूर्य्यसुताश्च गाव: ।
लोकास्त्रयस्तेन भवन्ति दत्ता य: काञ्चनं
गाञ्च महीञ्च दद्यात् ॥ ३१
षड़शीतिसहस्राणां योजनानां वसुन्धराम् ।
स्वतो दत्ता तु सर्व्वत्र सर्व्वकामप्रदायिनी ॥ ३२
भूमिं य: प्रतिगृह्णाति भूमिं यस्तु प्रयच्छति ।
उभौ तौ पुण्यकर्म्माणौ नियतं स्वर्गगामिनौ ॥ ३३
सर्व्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥ ३४

यो न हिंस्यादहं ह्यात्मा भूतग्रामं चतुर्व्विधम् ।
तस्य देहाद्वियुक्तस्य भयं नास्ति कदाचन ॥ ३५
अन्यायेन हृता भूमिर्यैर्नरैरपहारिता ।
हरतो हारयन्तश्च हन्युस्ते सप्तमं कुलम् ॥ ३६
हरते हरयेद्यस्तु मन्दबुद्धिस्तमोवृतः ।
स वध्यो वारुणैः पाशैस्तिर्य्यग्योनिषु जायते ॥ ३७
अश्रुभिः पतितैस्तेषां दानानामपकीर्त्तनम् ।
ब्राह्मणस्य हृते चैव हृतं त्रिपुरुषं कुलम् ॥ ३८
वापीकूपसहस्रेण अश्वमेधशतेन च ।
गवां कोटिप्रदानेन भूमिहर्त्ता न शुध्यति ॥ ३९
ग्रामिकां स्वर्णमेकं वा भूमेरप्यर्द्धमङ्गुलम् ।
कुम्भनरकमायाति यावदाभूतसंप्लवम् ॥ ४०
अर्द्धाङ्गुलस्य सीमाया हरणेन प्रणश्यति ।
गोवीथीं ग्रामरथ्याञ्च श्मशानं गोकुलं तथा ॥ ४१
सम्पीड्य नरकं याति यावदाभूतसंप्लवम् ।
ऊषरे निर्ज्जले स्थाने प्रास्तं शस्यं विसर्ज्जयेत् ॥ ४२
जलाधारश्च कर्त्तव्यो व्यासस्य वचनं यथा ।
पञ्च कन्यानृते हन्ति दश हन्ति गवानृते ॥ ४३
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ।
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदेत् ॥ ४४
सर्व्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदीः ।
ब्रह्मस्वे मा रतिं कुर्य्याः प्राणैः कण्ठगतैरपि ॥ ४५
अनौषधमभेषजः विषमं तद्धलाहलम् ।
न विषं विषमित्याहुर्ब्रह्मस्वं विषमच्यते ॥ ४६

विषमेकाकिनं हन्ति ब्रह्मस्वः पुत्रपौत्रकम्।
लौहखण्डाश्मचूर्णञ्च विषञ्च जरयेन्नरः॥ ४७
ब्रह्मस्वं त्रिषु लोकेषु कः पुमान् जरायष्यति।
मन्युप्रहरणा विप्रा राजानः शस्त्रपाणयः॥ ४८
शस्त्रमेकाकिनं हन्ति विप्रमन्युः कुलक्षयम्।
मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः॥ ४९
चक्रात् तीव्रतरो मन्युस्तस्माद्विप्रं न कोपयेत्।
अग्निदग्धाः प्ररोहन्ति सूर्य्यदग्धास्तथैव च॥ ५०
मन्युदग्धस्य विप्राणामङ्कुरो न प्ररोहति।
अग्निर्दहति तेजसा सूर्य्यो दहति रश्मिभिः॥ ५१
राजा दहति दण्डेन विप्रो दहति मन्युना।
ब्रह्मस्वेन तु यत् सौख्यं देवस्वेन तु या रतिः॥ ५२
तद्धनं कुलनाशाय भवत्यात्मविनाशकम्।
ब्रह्मस्वं ब्रह्महत्या च दरिद्रस्य च यद्धनम्॥ ५३
गुरुमित्रहिरण्यं च स्वर्गस्थमपि पीड़येत्।
ब्रह्मस्वेन तु यच्छिद्रं तच्छिद्रं न प्ररोहति॥ ५४
प्रच्छादयति तच्छिद्रमन्यत्र तु विसर्पति।
ब्रह्मस्वेन तु पुष्टानि साधनानि बलानि च॥ ५५
संग्रामे तानि लीयन्ते सिकतासु यथोदकम्।
श्रोत्रियाय कुलीनाय दरिद्राय च वासव॥ ५६
सन्तुष्टाय विनीताय सर्व्वभूतहिताय च।
वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः॥ ५७
ईदृशाय सुरश्रेष्ठ यद्दत्तं हि तदक्षयम्।
आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु॥ ५८

विनश्येत् पात्रदौर्ब्बल्यात् तच्च पात्रं विनश्यति ।
एवं गाञ्च हिरण्यञ्च वस्त्रमन्नं महीं तिलान् ॥ ५९
अविद्वान् प्रतिगृह्णाति भस्मीभवति काष्ठवत् ।
यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः ॥ ६०
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ।
कुलं तारयते धीरः सप्त सप्त च वासव ॥ ६१
यस्तटाकं नवं कुर्य्यात् पुराणं वापि खानयेत् ।
स सर्व्वं कुलमुद्धृत्य स्वर्गे लोके महीयते ॥ ६२
वापीकूपतड़ागानि उद्यानोपवनानि च ।
पुनःसंस्कारकर्त्ता च लभते मौलिकं फलम् ॥ ६३
निदाघकाले पानीयं यस्य तिष्ठति वासव ।
स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुयात् ॥ ६४
एकाहन्तु स्थितं तोयं पृथिव्यां राजसत्तम ।
कुलानि तारयेत् तस्य सप्त सप्त पराण्यपि ॥ ६५
दीपालोकप्रदानेन वपुष्मान् स भवेन्नरः ।
प्रोक्षणीयप्रदानेन स्मृतिं मेधाञ्च विन्दति ॥ ६६
कृत्वापि पापकर्म्माणि यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन लिप्यते ॥ ६७
भूमिर्गावस्तथा दाराः प्रसह्य ह्रियते यदा ।
न चावेदयते यस्तु तमाहुर्ब्रह्मघातकम् ॥ ६८
निवेदितस्तु राजा वै ब्राह्मणैर्मन्युपीड़ितैः ।
तं न तारयते यस्तु तमाहुर्ब्रह्मघातकम् ॥ ६९
उपस्थिते विवाहे च यज्ञे दाने च वासव ।
मोहाच्चलति विघ्नं यः स मृतो जायते कृमिः ॥ ७०

धनं फलति दानेन जीवितं जीवरक्षणात् ।
रूपमैश्वर्य्यमारोग्यमहिंसाफलमश्नुते ॥ ७१
फलमूलाशणात् पूज्य स्वर्गं सत्येन लभ्यते ।
प्रायोपवेशनाद्राज्यं सर्व्वत्र सुखमश्नुते ॥ ७२
गवाढ्यशक्रदीक्षायाः स्वर्गगामी तृणाशनः ।
स्त्रियस्त्रिषवणस्नायी वायुं पीत्वा क्रतं लभेत् ॥ ७३
नित्यस्नायी भजेदर्कं सन्ध्ये द्वे च जपन् द्विजः ।
न तत् साधयते राज्यं नाकपृष्ठमनाशके ॥ ७४
अग्निप्रवेशे नियतं ब्रह्मलोके महीयते ।
रत्नानां प्रतिसंहारे पशून् पुत्रांश्च विन्दति ॥ ७५
नाके चिरं स वसते उपवासी च यो भवेत् ।
सततञ्चैकशायी यः स लभेदीप्सितां गतिम् ॥ ७६
वीरासनं वीरशय्यां वीरस्थानमुपाश्रितः ।
अक्षयास्तस्य लोकाः स्युः सर्व्वकामगमास्तथा ॥ ७७
उपवासञ्च दीक्षाञ्च अभिषेकञ्च वासव ।
कृत्वा द्वादश वर्षाणि वीरस्थानाद्विशिष्यते ॥ ७८
अधीत्य सर्व्ववेदान् वै सद्यो दुःखात्प्रमुच्यते ।
पावनं चरते धर्म्मं स्वर्गे लोके महीयते ॥ ७९
बृहस्पतिमतं पुण्यं ये पठन्ति द्विजातयः ।
चत्वारि तेषां वर्द्धन्ते आयुर्विद्या यशो बलम् ॥ ८०

इति बृहस्पतिसंहिता ।

---

# दक्षसंहिता।

## प्रथमोऽध्यायः।

सर्व्वधर्म्मार्थतत्त्वज्ञः सर्व्ववेदविदां वरः।
पारगः सर्व्वविद्यानां दक्षो नाम प्रजापतिः॥ १
उत्पत्तिः प्रलयश्चैव स्थितिः संहार एव च।
आत्मा चात्मनि तिष्ठेत आत्मा ब्रह्मण्यवस्थितः॥ २
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
एतेषान्तु हितार्थाय दक्षः शास्त्रमकल्पयत्॥ ३
जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः।
स हि गर्भसमो ज्ञेयो व्यक्तिमात्रप्रदर्शितः॥ ४
भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते।
तस्मिन् काले न दोषोऽस्ति स यावन्नोपनीयते॥ ५
उपनीतस्य दोषोऽस्ति क्रियमाणैर्विगर्हितैः।
अप्राप्तव्यवहारोऽसौ यावत् षोड़शवार्षिकः॥ ६
स्वीकरोति यदा वेदं चरेद्वेदव्रतानि च।
ब्रह्मचारी भवेत् तावदूर्द्धं स्नातो भवेद्गृही॥ ७
द्विविधो ब्रह्मचारी तु स्मृतः शास्त्रे मनीषिभिः।
उपकुर्व्वाणकस्त्वाद्यो द्वितीयो नैष्ठिकः स्मृतः॥ ८
यो गृहाश्रममास्थाय ब्रह्मचारी भवेत् पुनः।
न यतिर्न वनस्थश्च सर्व्वाश्रमविवर्ज्जितः॥ ९
अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः।
आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हि सः॥ १०

जपे होमे तथा दाने स्वाध्याये चरतिस्तु यः।
नासौ तत्फलमाप्नोति कुर्व्वाणोऽप्याश्रमाद्रतः॥
त्रयाणामानुलोम्यं हि प्रातिलोम्यं न विद्यते॥ ११
प्रातिलोम्येन यो याति न तस्मात् पापकृत्तमः।
मेखलाजिनदण्डेन ब्रह्मचारी तु लक्ष्यते॥ १२
गृहस्थो देवयज्ञाद्यैर्नखलोम्ना वनाश्रितः।
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक्॥ १३
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती न चाश्रमी।
उक्तकर्म्मक्रमेणोक्ता न कालो मुनिभिः स्मृतः॥ १४
द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत्॥ १५
इति दाक्षे धर्म्मशास्त्रे प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः॥

प्रातरुत्थाय कर्त्तव्यं यद्द्विजेन दिने दिने।
तत् सर्व्वं सम्प्रवक्ष्यामि द्विजानामुपकारकम्॥ १
उदयास्तमयं यावन्न विप्रः क्षणिको भवेत्।
नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः॥ २
यः स्वकर्म्म परित्यज्य यदन्यत् कुरुते द्विजः।
अज्ञानाद्यदि वा मोहात् स तेन पतितो भवेत्॥ ३
दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा॥ ४
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक्।
विभागेष्वेषु यत् कर्म्म तत् प्रवक्ष्याम्यशेषतः॥ ५

उषःकाले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत्।
ततः स्नानं प्रकुर्व्वीत दन्तधावनपूर्व्वकम्॥ ६
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनम्॥ ७
क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि स्रवन्ति च।
अङ्गानि समतां यान्ति उत्तमान्यधमैः सह॥ ८
नानास्वेदसमाकीर्णः शयनादुत्थितः पुमान्।
अस्नात्वा नाचरेत् कर्म्म जपहोमादि किञ्चन॥ ९
प्रातरुत्थाय यो विप्रः प्रातःस्नायी भवेत् सदा।
समस्तजन्मजं पापं त्रिभिर्व्वर्षैर्व्यपोहति॥ १०
उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ।
प्राजापत्येन तत्तुल्यं महापातकनाशनम्॥ ११
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्।
सर्व्वमर्हति पूतात्मा प्रातःस्नायी जपादिकम्॥ १२
स्नानादनन्तरं तावदुपस्पर्शनमुच्यते।
अनेन तु विधानेन आचान्तः शुचितामियात्॥ १३
प्रक्षाल्य पादौ हस्तौ च त्रिः पिबेदम्बु वीक्षितम्।
संवृत्याङ्गुष्ठमूलेन द्विः प्रमृज्यात्ततो मुखम्॥ १४
संहत्य तिसृभिः पूर्व्वमास्यमेवमुपस्पृशेत्।
ततः पादौ समभ्युक्ष्य अङ्गानि समुपस्पृशेत्॥ १५
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम्।
अङ्गुष्ठानामिकाभ्याञ्च चक्षुःश्रोत्रे पुनःपुनः॥ १६
कनिष्ठाङ्गुष्ठया नाभिं हृदयञ्च तलेन वै।
सर्व्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्॥ १७

सन्ध्यायाञ्च प्रभाते च मध्याह्ने च ततः पुनः।
सन्ध्यां नोपासते यस्तु ब्राह्मणो हि विशेषतः।
स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते॥ १८
सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु।
यदन्यत् कुरुते कर्म्म न तस्य फलमश्नुते॥ १९
सन्ध्याकर्म्मावसाने तु स्वयं होमो विधीयते।
स्वयं होमे फलं यत्तु तदन्येन न जायते॥ २०
ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः।
एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि॥ २१
देवकार्य्यं ततः कृत्वा गुरुमङ्गलवीक्षणम्।
देवकार्य्याणि पूर्व्वाह्णे मनुष्याणाञ्च मध्यमे॥ २२
पितृ[illegible] च कार्य्याण्येतानि यत्नतः॥ २३
पौर्व्वाह्णिकन्तु यत् कर्म्म यदि तत् सायमाचरेत्।
न तस्य फलमाप्नोति वन्ध्यास्त्रीमैथुनं यथा॥ २४
दिवसस्याद्यभागे तु सर्व्वमेतद्विधीयते।
द्वितीये च तथा भागे वेदाभ्यासो विधीयते॥ २५
वेदाभ्यासो हि विप्राणां परमं तप उच्यते।
ब्रह्मयज्ञः स विज्ञेयः षड़ङ्गसहितस्तु सः॥ २६
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः।
ततो दानञ्च शिष्येभ्यो वेदाभ्यासो हि पञ्चधा॥ २७
समित् पुष्पकुशादीनां स कालः समुदाहृतः।
तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम्॥ २८
पिता माता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः॥ २९

ज्ञातिर्बन्धुजनः क्षीणस्तथानाथः समाश्रितः।
अन्येऽप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः॥ ३०
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्।
नरकं पीड़ने चास्य तस्माद्यत्नेन तं भरेत्॥ ३१
सार्व्वभौतिकमन्नाद्यं कर्त्तव्यन्तु विशेषतः।
ज्ञानविद्भ्यः प्रदातव्यमन्यथा नरकं व्रजेत्॥ ३२
स जीवति य एवैको बहुभिश्चोपजीव्यते।
जीवन्तो मृतकाश्चान्ये य आत्मम्भरयो नराः॥ ३३
बह्वर्थे जीव्यते कश्चित् कुटुम्बार्थे तथा परः।
आत्मार्थेऽन्यो न शक्नोति स्वोदरेणापि दुःखितः॥ ३४
दीनानाथविशिष्टेभ्यो दातव्यं भूतिमिच्छता।
अदत्तदाना जायन्ते परभाग्योपजीविनः॥ ३५
यद्ददाति विशिष्टेभ्यो यज्जुहोति दिने दिने।
तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति।
चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत्॥ ३६
तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले।
नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते॥ ३७
तेषां मध्ये तु यन्नित्यं तत् पुनर्भिद्यते त्रिधा।
मलापहरणं पश्चान्मन्त्रवत्तु जले स्मृतम्॥ ३८
सन्ध्यास्नानमुभाभ्याञ्च स्नानभेदाः प्रकीर्त्तिताः।
मार्ज्जनं जलमध्ये तु प्राणायामो यतस्ततः॥ ३९
उपस्थानं ततः पश्चात् सावित्र्या जप उच्यते।
सविता देवता यस्या मुखमग्निस्त्रिधा स्थितः॥ ४०

विश्वामित्र ऋषिश्छन्दो गायत्री सा विशिष्यते।
पञ्चमे च तथा भागे संविभागो यथार्हतः॥ ४१
पितृदेवमनुष्याणां कीटानाञ्चोपदिश्यते।
देवैश्चैव मनुष्यैश्च तिर्य्यग्भिश्चोपजीव्यते॥ ४२
गृहस्थः प्रत्यहं यस्मात्तस्माज्ज्येष्ठाश्रमी गृही।
त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते॥ ४३
तेनैव सीदमानेन सीदन्तीहेतरे त्रयः।
मूलप्राणो भवेत् स्कन्धः स्कन्धाच्छाखाः सपल्लवाः॥ ४४
मूलेनैव विनष्टेन सर्व्वमेतद्विनश्यति।
तस्मात् सर्व्वप्रयत्नेन रक्षितव्यो गृहाश्रमी॥ ४५
राज्ञा चान्यैस्त्रिभिः पूज्यो माननीयश्च सर्व्वदा।
गृहस्थोऽपि क्रियायुक्तो न गृहेण गृहाश्रमी॥ ४६
न चैव पुत्रदारेण स्वकर्म्मपरिवर्ज्जितः।
अस्नात्वा चाप्यहुत्वा चाजप्त्वादत्त्वा च मानवः॥ ४७
देवादीनामृणी भूत्वा नरकं प्रतिपद्यते।
एक एव हि भुङ्क्तेऽन्नमपरोऽन्नेन भुज्यते॥ ४८
न भुज्यते स एवैको यो भुङ्क्तेऽन्नं स साक्षिणा।
विभागशीलो यो नित्यं क्षमायुक्तो दयापरः॥ ४९
देवतातिथिभक्तश्च गृहस्थः स तु धार्म्मिकः।
दया लज्जा क्षमा श्रद्धा प्रज्ञा योगः कृतज्ञता॥ ५०
एते यस्य गुणाः सन्ति स गृही मुख्य उच्यते।
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत्॥ ५१
भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत्।
इतिहासपुराणाद्यैः षष्ठञ्च सप्तमं नयेत्॥ ५२

अष्टमे लोकयात्रा तु वहिः सन्ध्या ततः पुनः ।
होमो भोजनकञ्चैव यच्चान्यद्गृहकृत्यकम् ॥ ५३
कृत्वा चैवं ततः पश्चात् स्वाध्यायं किञ्चिदाहरेत् ।
प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ॥ ५४
यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते ।
नैमित्तिकानि काम्यानि निपतन्ति यथा यथा ॥ ५५
तथा तथैव कार्य्याणि न कालस्तु विधीयते ।
अस्मिन्नेव प्रयुञ्जानो ह्यस्मिन्नेव तु लीयते ॥ ५६
तस्मात् सर्व्वप्रयत्नेन कर्त्तव्यं सुखमिच्छता ।
सर्व्वत्र मध्यमौ यामौ हुतशेषं हविश्च यत् ॥ ५७
भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ॥ ५८
इति दाक्षे धर्म्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

सुधा नव गृहस्थस्य प्रवक्ष्यामि नवैव तु ।
तथैव नव कर्म्माणि विकर्म्माणि तथा नव ॥ १
प्रच्छन्नानि नवान्यानि प्रकाश्यानि तथा नव ।
सफलानि नवान्यानि निष्फलानि नवैव तु ॥ २
अदेयानि नवान्यानि वस्तुजातानि सर्व्वदा ।
नवका नव निर्द्दिष्टा गृहस्थोन्नतिकारकाः ॥ ३
सुधावस्तूनि वक्ष्यामि विशिष्टे गृहमागते ।
मनश्चक्षुर्म्मुखं वाक्यं सौम्यं दद्याच्चतुष्टयम् ॥ ४

अभ्युत्थानमिहागच्छ पृच्छालापप्रियान्वित: ।
उपासनमनुव्रज्या कार्य्याण्येतानि यत्नत: ॥ ५
ईषद्दानानि चान्यानि भूमिरापस्तृणानि च ।
पादशौचं तथाभ्यङ्गमाश्रय: शयनं तथा ॥ ६
किञ्चिच्चान्नं यथाशक्ति नास्यानश्नन् गृहे वसेत् ।
मृज्जलञ्चार्थिने देयमेतान्यपि सदा गृहे ॥ ७
सन्ध्या स्नानं जपो होम: स्वाध्यायो देवतार्च्चनम् ।
वैश्वदेवं तथातिथ्यमुद्धतञ्चापि शक्तित: ॥ ८
पितृदेवमनुष्याणां दीनानाथतपस्विनाम् ।
मातापितृगुरूणाञ्च संविभागो यथार्हत: ॥ ९
एतानि नव कर्म्माणि विकर्म्माणि तथा पुन: ।
अनृतं पारदार्य्यञ्च तथाभक्ष्यस्य भक्षणम् ॥ १०
अगम्यागमनापेयपानं स्तेयञ्च हिंसनम् ।
अश्रौतकर्म्माचरणं मित्रधर्म्मवहिष्कृतम् ॥ ११
नवैतानि विकर्म्माणि तानि सर्व्वाणि वर्ज्जयेत् ।
आयुर्व्वित्तं गृहच्छिद्रं मन्त्रमैथुनभेषजम् ॥ १२
तपो दानावमानौ च नव गोप्यानि यत्नत: ।
आरोग्यमृणशुद्धिश्च दानाध्ययनविक्रया: ॥ १३
कन्यादानं वृषोत्सर्गो रह:पापमकुत्सनम् ।
प्रकाश्यानि नवैतानि गृहस्थाश्रमिणस्तथा ॥ १४
मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत् ॥ १५
धूर्त्ते वन्दिनि मन्दे च कुवैद्ये कितवे शठे ।
चाटुचारणचौरेभ्यो दत्तं भवति निष्फलम् ॥ १६

सामान्यं याचितं न्यास आधिद्दाराश्च तद्धनम् ।
क्रमायातश्च निक्षेपः सर्व्वस्वञ्चान्वये सति ॥ १७
आपत्स्वपि न देयानि नव वस्तूनि सर्व्वदा ।
यो ददाति स मूढ़ात्मा प्रायश्चित्तीयते नरः ॥ १८
नवनवकवेत्तारमनुष्ठानपरं नरम् ।
इह लोके परे च श्रीः स्वर्गस्थश्च न मुञ्चति ॥ १९
यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथात्मनि तथा परे ॥ २०
सुखं वा यदि वा दुःखं यत् किञ्चित् क्रियते परे ।
ततस्तत्तु पुनः पश्चात् सर्व्वमात्मनि जायते ॥ २१
न क्लेशेन विना द्रव्यं द्रव्यहीने कुतः क्रिया ।
क्रियाहीने न धर्म्मः स्याद्धर्म्महीने कुतः सुखम् ॥ २२
सुखं वाञ्छन्ति सर्व्वे हि तच्च धर्म्मसमुद्भवम् ।
तस्माद्धर्म्मः सदा कार्य्यः सर्व्ववर्णैः प्रयत्नतः ॥ २३
न्यायागतेन द्रव्येण कर्त्तव्यं पार[illegible] ।
दानञ्च विधिना देयं काले पात्रे गुणान्विते ॥ २४
समद्विगुणसाहस्रमानन्त्यञ्च यथाक्रमम् ।
दाने फलविशेषः [illegible] तावदेव तु ॥ २५
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
सहस्रगुणमाचार्य्ये त्वनन्तं वेदपारगे ॥ २६
विधिहीने तथा पात्रे यो ददाति प्रतिग्रहम् ।
न केवलं तद्दिनश्येच्छेषमप्यस्य नश्यति ॥ २७
व्यसनप्रतिकाराय कुटुम्बार्थञ्च याचते ।
एवमन्विष्य दातव्यमन्यथा न फलं भवेत् ॥ २८

मातापितृविहीनन्तु संस्कारोद्वहनादिभिः।
यः स्थापयति तस्येह पुण्यसङ्ख्या न विद्यते॥ २९
न तच्छ्रेयोऽग्निहोत्रेण नाग्निष्टोमेन लभ्यते।
यच्छ्रेयः प्राप्यते पुंसा विप्रेण स्थापितेन तु॥ ३०
यद्यदिष्टतमं लोके यच्चापि दयितं गृहे।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता॥ ३१
इति दाक्षे धर्म्मशास्त्रे तृतीयोऽध्यायः॥ ३॥

---

## चतुर्थोऽध्यायः।

पत्नीमूलं गृहं पुंसां यदि छन्दोऽनुवर्त्तिनी।
गृहाश्रमसमं नास्ति यदि भार्य्या वशानुगा॥ १
तया धर्म्मार्थकामानां त्रिवर्गफलमश्नुते।
प्राकाम्ये वर्त्तमाना तु स्नेहान्न तु निवारिता॥ २
अवश्या सा भवेत् पश्चाद्यथा व्याधिरुपेक्षितः।
अनुकूला न वाग्दुष्टा दक्षा साध्वी प्रियंवदा॥ ३
आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी॥ ४
अनुकूलकलत्रो यस्तस्य स्वर्ग इहैव हि।
प्रतिकूलकलत्रस्य नरको नात्र संशयः॥ ५
स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम्।
रक्त एको विरक्तोऽन्यस्तस्मात् कष्टतरं नु किम्॥ ६
गृहवासः सुखार्थाय पत्नीमूलं गृहे सुखम्।
सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्त्तिनी॥ ७

दुःखा ह्यन्ना सदा खिन्ना चित्तभेदः परस्परम्।
प्रतिकूलकलत्रस्य द्विदारस्य विशेषतः॥ ८
योषित् सर्व्वा जलौकेव भूषणाच्छादनाशनैः।
सुभृताऽपि कृता नित्यं पुरुषं ह्यपकर्षति॥ ९
जलौका रक्तमादत्ते केवलं सा तपस्विनी।
इतरा तु धनं वित्तं मांसं वीर्य्यं बलं सुखम्॥
सशङ्का बालभावे तु यौवने विमुखी भवेत्।
भृत्यवन्मन्यते पश्चाद्वृद्धभावे स्वकं पतिम्॥ ११
अनुकूला न वाग्दुष्टा दक्षा साध्वी पतिव्रता।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः॥ १२
या हृष्टमनसा नित्य स्थानमानविचक्षणा।
भर्त्तुः प्रीतिकरी नित्यं सा भार्य्या ह्यितरा जरा॥ १३
शिष्यो भार्य्या शिशुर्भ्राता पुत्रो दासः समाश्रितः।
यस्यैतानि विनीतानि तस्य लोके हि गौरवम्॥ १४
प्रथमा धर्म्मपत्नी च द्वितीया रतिवर्द्धिनी।
दृष्टमेव फलं तत्र नादृष्टमुपजायते॥ १५
धर्म्मपत्नी समाख्याता निर्द्दोषा यदि सा भवेत्।
दोषे सति न दोषः स्यादन्या भार्य्या गुणान्विता॥ १६
अदुष्टापतितां भार्य्यां यौवने यः परित्यजेत्।
स जीवनान्ते स्त्रीत्वञ्च वन्ध्यात्वञ्च समाप्नुयात्॥ १७
दरिद्रं व्याधितञ्चैव भर्त्तारं यावमन्यते।
शुनी गृध्री च मकरी जायते सा पुनःपुनः॥ १८
मृते भर्त्तरि या नारी समारोहेद्धुताशनम्।
सा भवेत्तु शुभाचारा स्वर्गलोके महीयते॥ १९

व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्।
तथा सा पतिमुद्धृत्य तेनैव सह मोदते॥ २०

इति दाक्षे धर्म्मशास्त्रे चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

उक्तं शौचमशौचञ्च कार्य्यं त्याज्यं मनीषिभिः।
विशेषार्थं तयोः किञ्चिद्वक्ष्यामि हितकाम्यया॥ १
शौचे यत्नः सदा कार्य्यः शौचमूलो द्विजः स्मृतः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः॥ -
शौचञ्च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्॥ ३
अशौचाद्धि वरं बाह्यंतस्मादाभ्यन्तरं वरम्।
उभाभ्याञ्च शुचिर्यस्तु स शुचिर्नेतरः शुचिः॥ ४
एका लिङ्गे गुदे तिस्रो दश वामकरे तथा।
उभयोः सप्त दातव्या मृदास्तिस्रस्तु पादयोः॥ ५
गृहस्थशौचमाख्यातं त्रिष्वन्येषु यथाक्रमम्।
द्विगुणं त्रिगुणञ्चैव चतुर्थस्य चतुर्गुणम्॥ ६
अर्द्धप्रसृतिमात्रन्तु प्रथमा मृत्तिका स्मृता।
द्वितीया च तृतीया च तदर्द्धं परिकीर्त्तिता॥ ७
लिङ्गेऽप्यत्र समाख्याता त्रिपर्व्वी पूर्य्यते यया।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्॥ ८
त्रिगुणन्तु वनस्थानां यतीनाञ्च चतुर्गुणम्।
दातव्यमुदकं तावन्मृदभावो यथा भवेत्॥ ९

मृदा जलेन शुद्धिः स्यान्न क्लेशो न धनव्ययः।
यस्य शौचेऽपि शैथिल्यं चित्तं तस्य परीक्षितम्॥ १०
एतदेव दिवा शौचः रात्रावन्यद्विधीयते।
अन्यदापत्सु विप्राणामन्यदेव ह्यनापदि॥ ११
दिवोदितस्य शौचस्य रात्रावर्द्धं विधीयते।
तदर्द्धमातुरस्याहुस्त्वरायामर्द्धमध्वनि॥ १२
न्यूनाधिकं न कर्त्तव्यं शौचे शुद्धिमभीप्सता।
प्रायश्चित्ते न युज्येत विहितातिक्रमे कृते॥ १३
इति दाक्षे धर्म्मशास्त्रे पञ्चमोऽध्यायः॥ ५

---

## षष्ठोऽध्यायः।

सूतकन्तु प्रवक्ष्यामि जन्ममृत्युसमुद्भवम्।
यावज्जीवं तृतीयन्तु यथावदनुपूर्व्वशः॥ १
सद्यःशौचं तथैकाहो द्वित्रिचतुरहस्तथा।
दशाहो द्वादशाहश्च पक्षो मासस्तथैव च॥ २
मरणान्तं तथा चान्यद्दशपक्षन्तु सूतके।
उपन्यस्तक्रमेणैव वक्ष्याम्यहमशेषतः॥ ३
ग्रन्थार्थतो विजानाति वेदमङ्गैः समन्वितम्।
सकल्पं सरहस्यञ्च क्रियावांश्चेन्न सूतकी॥ ४
राजर्त्विग्दीक्षितानाञ्च बाले देशान्तरे तथा।
व्रतिनां सत्रिणाञ्चैव सद्यःशौचं विधीयते॥ ५
एकाहस्तु समाख्यातो योऽग्निवेदसमन्वितः।
हीने हीनतरे चैव द्वित्रिचतुरहस्तथा॥ ६

जातिविप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ७
अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्त्वा च यः पुनः ।
एवंविधस्य सर्व्वस्य सूतकं समुदाहृतम् ॥ ८
व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्व्वदा ।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥ ९
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः ।
स्वहात्यागविहीनस्य भस्मान्तं सूतकं भवेत् ॥ १०
न सूतकं कदाचित् स्याद्यावज्जीवन्तु सूतकम् ।
एवं गुणविशेषेण सूतकं समुदाहृतम् ॥ ११
सूतके मृतके चैव तथा च मृतसूतके ।
एतत्संहतशौचानां मृतशौचेन शुध्यति ॥ १२
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ।
दशाहात्तु परं शौचं विप्रोऽर्हति च धर्म्मवित् ॥ १३
दानञ्च विधिना देयमशुभात्तारकं हि तत् ।
मृतकान्ते मृतो यस्तु सूतकान्ते च सूतकम् ॥ १४
एतत् संहतशौचानां पूर्व्वाशौचेन शुध्यति ।
उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ॥ १५
चतुर्थेऽहनि कर्त्तव्यमस्थिसञ्चयनं द्विजैः ।
ततः सञ्चयनादूर्द्धमङ्गस्पर्शो विधीयते ॥ १६
वर्णानामानुलोम्येन स्त्रीणामेका यदा पतिः ।
दशषट्त्र्यहमेकाहः प्रसवे सूतकं भवेत् ॥ १७
यज्ञकाले विवाहे च देशभङ्गे तथैव च ।
हूयमाने तथाग्नौ च नाशौचं मृतसूतके ॥ १८

सुस्थकाले त्विदं सर्व्वमशौचं परिकीर्त्तितम् ।
आपद्गतस्य सर्व्वस्य सूतके न तु सूतकम् ॥ १८

इति दाक्षे धर्म्मशास्त्रे षष्ठोऽध्यायः ॥ ६

---

## सप्तमोऽध्यायः ।

लोको वशीकृतो येन येन चात्मा वशीकृतः ।
इन्द्रियार्थो जितो येन तं योगं प्रब्रवीम्यहम् ॥ १
प्राणायामस्तथा ध्यानं प्रत्याहारस्तु धारणा ।
तर्कश्चैव समाधिश्च षड़ङ्गो योग उच्यते ॥ २
नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिश्च न योगः कस्यचिद्भवेत् ॥ ३
न च पद्मासनाद्योगो न नासाग्रनिरीक्षणात् ।
न च शास्त्रातिरिक्तेन शौचेन स भवेत् क्वचित् ॥ ४
न मौनमन्त्रकुहकैरनेकैः सुकृतैस्तथा ।
लोकयात्रावियुक्तस्य योगो भवति कस्यचित् ॥ ५
अभियोगात्तथाभ्यासात्तस्मिन्नेव तु निश्चयात् ।
पुनःपुनश्च निर्व्वेदाद्योगः सिध्यति नान्यथा ॥ ६
आत्मचिन्ताविनोदेन शौचक्रीड़नकेन च ।
सर्व्वभूतसमत्वेन योगः सिध्यति नान्यथा ॥ ७
यश्चात्मनिरतो नित्यमात्मक्रीड़स्तथैव च ।
आत्मनिष्ठश्च सततमात्मन्येव स्वभावतः ॥ ८
रतश्चैव स्वयं तुष्टः सन्तुष्टो नान्यमानसः ।
आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिध्यति ॥ ९

सुप्तोऽपि योगयुक्तः स्याज्जाग्रच्चापि विशेषतः ।
ईदृक्‌चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम् ॥ १०
य आत्मव्यतिरेकेण द्वितीयं नैव पश्यति ।
ब्रह्मीभूय स एवं हि दक्षपक्ष उदाहृतः ॥ ११
विषयासक्तचित्तो हि यतिर्मोक्षं न विन्दति ।
यत्नेन विषयासक्तिं तस्माद्‌योगी विवर्जयेत् ॥ १२
विषयेन्द्रियसंयोगं केचिद्‌योगं वदन्ति हि ।
अधर्म्मो धर्म्मरूपेन गृहीतस्तैरपण्डितैः ॥ १३
मनसश्चात्मनश्चैव संयोगञ्च तथापरे ।
उक्तानामधिका ह्येते केवलं योगवञ्चिताः ॥ १४
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥ १५
कषायमोहविक्षेप लज्जाशङ्कादिचेतसः ।
व्यापारास्तु समाख्यातास्तान् जित्वा वशमानयेत् ॥ १६
कुटुम्बैः पञ्चभिर्ग्राम्यैः षष्ठस्तत्र महत्तरः ।
देवासुरमनुष्यैस्तु स जेतुं नैव शक्यते ॥ १७
बलेन परराष्ट्राणि गृह्णन् शूरस्तु नोच्यते ।
जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः ॥ १८
बहिर्मुखानि सर्व्वाणि कृत्वा चाभिमुखानि वै ।
सर्व्वञ्चैवेन्द्रियग्रामं मनश्चात्मनि योजयेत् ॥ १९
सर्व्वभावविनिर्मुक्तः क्षेत्रज्ञं ब्रह्मणि न्यसेत् ।
एतद्ध्यानञ्च योगश्च शेषाः स्युर्ग्रन्थविस्तराः ॥ २०
त्यक्त्वा विषयभोगांश्च मनो निश्चलतां गतम् ।
आत्मशक्तिस्वरूपेण समाधिः परिकीर्त्तितः ॥ २१

चतुर्णां सन्निकर्षेण पदं यत्तद्गाश्वतम्।
द्वयोस्तु सन्निकर्षेण शाश्वतं ध्रुवमक्षयम्॥ २२
यन्नास्ति सर्व्वलोकस्य तदस्तीति विरुध्यते।
कथ्यमानं तथान्यस्य हृदये नावतिष्ठते॥ २३
स्वसंवेद्यं हि तद्ब्रह्म कुमारी मैथुनं यथा।
अयोगी नैव जानाति जातान्धो हि यथा घटम्॥ २४
नित्याभ्यसनशीलस्य सुसंवेद्यं हि तद्भवेत्।
तत् सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम्॥ २५
बुधस्त्वाभरणं भावं मनसालोचनं यथा।
मन्यते स्त्री च मूर्खश्च तदेव बहु मन्यते॥ २६
सत्त्वोत्कटाः सुराश्चापि विषयेण वशीकृताः।
प्रमादिभिः क्षुद्रसत्त्वैर्म्मानुषैरत्र का कथा॥ २७
तस्मात् त्यक्तकषायेण कर्त्तव्यं दण्डधारणम्।
इतरस्तु न शक्नोति विषयैरभिभूयते॥ २८
न स्थिरं क्षणमप्येकमुदकं हि यथोर्म्मिभिः।
वाताहतं तथा चित्तं तस्मात् तस्य न विश्वसेत्॥ २९
त्रिदण्डव्यपदेशेन जीवन्ति बहवो नराः।
यो हि ब्रह्म न जानाति न त्रिदण्डार्हं एव सः॥ ३०
ब्रह्मचर्य्यं सदा रक्षेदष्टधा मैथुनं पृथक्।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्॥ ३१
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥ ३२
न ध्यातव्यं न वक्तव्यं न कर्त्तव्यं कदाचन।
एतैः सर्व्वैः सुसम्पन्नो यतिर्भवति नेतरः॥ ३३

पारिव्राज्यं गृहीत्वा च यो धर्म्मे नावतिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥ ३४

एको भिक्षुर्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम् ।
त्रयो ग्रामस्तथा ख्यात अर्द्धन्तु नगरायते ॥ ३५

नगरं हि न कर्त्तव्यं ग्रामो वा मिथुनं तथा ।
एतत्त्रयं प्रकुर्व्वाणः स्वधर्म्माच्च्यवते यतिः ॥ ३६

राजवार्त्तादि तेषान्तु भिक्षावार्त्ता परस्परम् ।
स्नेहपैशुन्यमात्सर्य्यं सन्निकर्षादसंशयम् ॥ ३७

लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः ।
एते चान्ये च बहवः प्रपञ्चाः कुतपस्विनाम् ॥ ३८

ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
भिक्षोश्चत्वारि कर्म्माणि पञ्चमो नोपपद्यते ॥ ३९

तपोजपैः कृशीभूतो व्याधितोऽवसथावहः ।
वृद्धो ग्रहगृहीतश्च यश्चान्यो विकलेन्द्रियः ॥ ४०

नीरुजश्च युवा चैव भिक्षुर्नावसथावहः ।
स दूषयति तत् स्थानं पशून् पीड़यतीति च ॥ ४१

नीरुजश्च युवा चैव ब्रह्मचर्य्याद्विनश्यति ।
ब्रह्मचर्य्याद्विनष्टन्तु कुलञ्चैव तु नाशयेत् ॥ ४२

वसन्नावसथे भिक्षुर्म्मैथुनं यदि सेवते ।
तस्यावसथनाथस्य मूलान्यपि निकृन्तति ॥ ४३

आश्रमे तु यतिर्यस्य मुहूर्त्तमपि विश्रमेत् ।
किं तस्यान्येन धर्म्मेण कृतकृत्योऽभिजायते ॥ ४४

सञ्चितं यद्गृहस्थेन पापमामरणान्तिकम् ।
स निर्द्दहति तत् सर्व्वमेकरात्रोषितो यतिः ॥ ४५

योगाश्रमपरिश्रान्तं यस्तु भोजयते यतिम्।
निखिलं भोजितं तेन त्रैलोक्यं सचराचरम्॥ ४६
यस्मिन् देशे वसेद्योगी ध्यानयोगविचक्षणः।
सोऽपि देशो भवेत् पूतः किं पुनस्तस्य बान्धवाः॥ ४७
द्वैतपक्षे तथाद्वैतं द्वैताद्वैतं तथैव च।
न द्वैतं नापि चाद्वैतमितो तत् परमार्थिकम्॥ ४८
नाहं नैवान्यसम्बन्धो ब्रह्मभावेन भावितः।
ईदृशायामवस्थायामवाप्यं परमं पदम्॥ ४९
द्वैतपक्षे समास्था ये अद्वैते तु व्यवस्थिताः।
अद्वैतिनां प्रवक्ष्यामि यथा धर्मः सुनिश्चितः॥ ५०
तत्रात्मव्यतिरेकेण द्वितीयं यदि पश्यति।
ततः शास्त्राण्यधीयन्ते श्रयन्ते ग्रन्थसञ्चयाः॥ ५१
दक्षशास्त्रं यथा प्रोक्तमशेषाश्रममुत्तमम्।
अधीयन्ते तु ये विप्रास्ते यान्त्यमरलोकताम्॥ ५२
इदन्तु यः पठेद्भक्त्या शृणुयादधमोऽपि वा।
स पुत्रपौत्रपशुमान् कीर्त्तिञ्च समवाप्नुयात्॥ ५३
श्रावयित्वा त्विदं शास्त्रं श्राद्धकालेऽपि वा द्विजः।
अक्षयं भवति श्राद्धं पितृभ्यश्चोपजायते॥ ५४

इति दाक्षे धर्मशास्त्रे सप्तमोऽध्यायः॥ ७॥

---

# शातातपसंहिता ।

## प्रथमोऽध्यायः ।

प्रायश्चित्तविहीनानां महापातकिनां नृणाम् ।
नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥ १
प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचितम् ।
प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः ॥ २
महापातकजं चिह्नं सप्तजन्मनि जायते ।
उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥ ३
दुष्कर्म्मजा नृणां रोगा यान्ति चोपक्रमैः शमम् ।
जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥ ४
पूर्व्वजन्मकृतं पापं नरकस्य परिक्षये ।
बाधते व्याधिरूपेण तस्य जप्यादिभिः शमः ॥ ५
कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकासा अतिसारभगन्दरौ ॥ ६
दुष्टव्रणं गण्डमाला पक्षाघातोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥ ७
जलोदरं यकृत् प्लीहा शूलरोगव्रणानि च ।
श्वासाजीर्णज्वरच्छर्द्दि भ्रममोहगलग्रहाः ॥ ८
रक्तार्व्बुदविसर्पाद्या उपपापोद्भवा गदाः ।
दण्डापतानकश्चित्र वपुःकम्पविचर्च्चिकाः ॥ ९
वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः ।
अर्शआद्या नृणां रोगा अतिपापाद्भवन्ति हि ॥ १०

अन्ये च बहवो रोगा जायन्ते पापसङ्कराः ।
उच्यन्ते च निदानानि प्रायश्चित्तानि वै क्रमात् ॥ ११
महापापेषु सर्व्वं स्यात् तदर्द्धमुपपातके ।
दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम् ॥ १२
अथ साधारणं तेषु गोदानादिषु कथ्यते ।
गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी ॥ १३
वृषदाने शुभोऽनड्वान् शुक्लाम्बरसकाञ्चनः ।
निवर्त्तनानि भूदाने दश दद्याद्द्विजातये ॥ १४
दशहस्तेन दण्डेन त्रिंशद्दण्डं निवर्त्तनम् ।
दश तान्येव गोचर्म्म दत्त्वा स्वर्गे महीयते ॥ १५
सुवर्णशतनिष्कन्तु तदर्द्धार्द्धप्रमाणतः ।
अश्वदाने मृदु श्लक्ष्णमश्वं सोपस्करं दिशेत् ॥ १६
महिषीं माहिषे दाने दद्यात् स्वर्णायुधान्विताम् ।
दद्याद्गजं महादाने सुवर्णफलसंयुतम् ॥ १७
लक्षसङ्ख्याङ्कितं पुष्पं प्रदद्याद्देवतार्च्चने ।
दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥ १८
रुद्रं जपेल्लक्षपुष्पैः पूजयित्वा च त्र्यम्बकम् ।
एकादश जपेद्रुद्रान् दशांशं गुग्गुलैर्घृतैः ॥ १९
हुत्वाभिषेचनं कुर्य्यान्मन्त्रैर्व्वरुणदैवतैः ।
शान्तिके गणशान्तिश्च ग्रहशान्तिः [illegible] ॥ २०
धान्यदाने शुभं धान्यं खारीषड्विमितं स्मृतम् ।
वस्त्रदाने पट्टवस्त्रद्वयं कर्पूरसंयुतम् ॥ २१
दशपञ्चाष्टचतुर उपवेश्य द्विजान् शुभान् ।
विधाय वैष्णवीं पूजां सङ्कल्प्य निजकाम्यया ॥ २२

धेनुं दद्याद् द्विजातिभ्यो दक्षिणाञ्चापि शक्तितः।
अलङ्कृत्य यथाशक्ति वस्त्रालङ्करणैर्द्विजान्॥ २३
याचेद्दण्डप्रमाणेन प्रायश्चित्तं यथोदितम्।
तेषामनुज्ञया कृत्वा प्रायश्चित्तं यथाविधि॥ २४
पुनस्तान् परिपूर्णार्थानर्चयेद्विधिवद्द्विजान्।
सन्तुष्टा ब्राह्मणा दद्युरनुज्ञां व्रतकारिणे॥ २५
जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्म्मणि।
सर्व्वं भवति निश्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः॥ २६
ब्राह्मणा यानि भाषन्ते मान्यन्ते तानि देवताः।
सर्व्वदेवमया विप्रा न तद्वचनमन्यथा॥ २७
उपवासो व्रतञ्चैव स्नानं तीर्थफलं तपः।
विप्रैः सम्पादितं सर्व्वं सम्पन्नं तस्य तत्फलम्॥ २८
सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः।
प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं लभेत्॥ २९
ब्राह्मणा जङ्गमं तीर्थं निर्ज्जलं सार्व्वकामिकम्।
तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः॥ ३०
तेभ्योऽनुज्ञामभिप्राप्य प्रगृह्य च तथाशिषः।
भोजयित्वा द्विजान् शक्त्या भुञ्जीत सह बन्धुभिः॥ ३१
इति शातातपीये कर्म्मविपाके प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः।

ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते।
प्रायश्चित्तं प्रकुर्व्वीत स तत्पातकशान्तये॥ १

चत्वार: कलसा: कार्य्या: पञ्चरत्नसमन्विता: ।
पञ्चपल्लवसंयुक्ता: सितवस्त्रेण संयुता: ॥ २
अश्वस्थानादिमृद्युक्तास्तीर्थोदकसुपूरिता: ।
कषायपञ्चकोपेता नानाविधफलान्विता: ॥ ३
सर्व्वौषधिसमायुक्ता: स्थाप्या: प्रतिदिशं द्विजै: ।
रौप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् ॥ ४
तस्योपरि न्यसेद्देवं ब्रह्माणञ्च चतुर्म्मुखम् ।
पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्म्मितम् ॥ ५
अर्च्चेत् पुरुषसूक्तेन त्रिकालं प्रतिवासरम् ।
यजमान: शुभैर्गन्धै: पुष्पैर्धूपैर्यथाविधि ॥ ६
पूर्व्वादिकुम्भेषु ततो ब्राह्मणा ब्रह्मचारिण: ।
पठेयु: स्वस्ववेदांस्ते ऋग्वेदप्रभृतीन् शनै: ॥ ७
दशांशेन ततो होमो ग्रहशान्तिपुर:सरम् ।
मध्यकुम्भे विधातव्यो घृताक्तैस्तिलहेमभि: ॥ ८
द्वादशाहमिदं कर्म्म समाप्य द्विजपुङ्गव: ।
तत्र पीठे यजमानमभिषिञ्चेद्यथाविधि ॥ ९
ततो दद्याद्यथाशक्ति गोभूहेमतिलादिकम् ।
ब्राह्मणेभ्यस्तथा देवमाचार्य्याय निवेदयेत् ॥ १०
आदित्या वसवो रुद्रा विश्वदेवा मरुद्गणा: ।
प्रीता सर्व्वे व्यपोहन्तु मम पापं सुदारुणम् ॥ ११
इत्युदीर्य्य मुहुर्भक्त्या तमाचार्य्यं क्षमापयेत् ।
एवं विधाने विहिते श्वेतकुष्ठी विशुध्यति ॥ १२
कुष्ठी गोवधकारी स्यात्तरकान्तेऽस्य निष्कृति: ।
स्थापयेद् घटमेकन्तु पूर्व्वोक्तद्रव्यसंयुतम् ॥ १३

रक्तचन्दनलिप्ताङ्गं रक्तपुष्पाम्बरान्वितम् ।
रक्तकुम्भन्तु तत् कृत्वा स्थापयेद्दक्षिणां दिशम् ॥ १४
ताम्रपात्रं न्यसेत् तत्र तिलचूर्णेन पूरितम् ।
तस्योपरि न्यसेद्देवं हेमनिष्कमयं यमम् ॥ १५
यजेत् पुरुषसूक्तेन पापं मे शाम्यतामिति ।
सामपारायणं कुर्य्यात् कलसे तत्र सामवित् ॥ १६
दशांशं सर्षपैर्हुत्वा पावमान्यभिषेचने ।
विहिते धर्म्मराजानमाचार्य्याय निवेदयेत् ॥ १७
यमोऽपि महिषारूढ़ो दण्डपाणिर्भयावहः ।
दक्षिणाशापतिर्देवो मम पापं व्यपोहतु ॥ १८
इत्युच्चार्य्य विसृज्यैनं मासं सङ्क्रान्तिमाचरेत् ।
ब्रह्मगोवधयोरेषा प्रायश्चित्तेन निष्कृतिः ॥ १९
पितृहा चेतनाहीनो मातृहान्धः प्रजायते ।
नरकान्ते प्रकुर्व्वीत प्रायश्चित्तं यथाविधि ॥ २०
प्राजापत्यानि कुर्व्वीत त्रिंशच्चैव विधानतः ।
व्रतान्ते कारयेन्नावं सौवर्णपलसम्मिताम् ॥ २१
कुम्भं रौप्यमयञ्चैव ताम्रपात्राणि पूर्व्ववत् ।
निष्कहेम्ना तु कर्त्तव्यो देवः श्रीवत्सलाञ्छनः ॥ २२
पट्टवस्त्रेण संवेष्ट्य पूजयेत् तं विधानतः ।
नावं द्विजाय तां दद्यात् सर्व्वोपस्करसंयुताम् ॥ २३
वासुदेव जगन्नाथ सर्व्वभूताशयस्थित ।
पातकार्णवमग्नं मां तारय प्रणतार्त्तिहृत् ॥ २४
इत्युदीर्य्य प्रणम्याथ ब्राह्मणाय विसर्ज्जयेत् ।
अन्येभ्योऽपि यथाशक्ति विप्रेभ्यो दक्षिणां ददेत् ॥ २५

स्वस्तघाती तु बधिरो नरकान्ते प्रजायते ।
मूको भ्रातृवधे चैव तस्येदं निष्कृतिः स्मृता ॥ २६
सोऽपि पापविशुद्ध्यर्थं चरेच्चान्द्रायणव्रतम् ।
व्रतान्ते पुस्तकं दद्यात् सुवर्णफलसंयुतम् ॥ २७
इमं मन्त्रं समुच्चार्य्य ब्राह्मणीं तां विसर्ज्जयेत् ।
सरस्वति जगन्मातः शब्दब्रह्माधिदैवते ॥ २८
दुष्कर्म्मकरणात् पापं पाहि मां परमेश्वरि ।
बालघाती च पुरुषो मृतवत्सः प्रजायते ॥ २९
ब्राह्मणोद्वाहनञ्चैव कर्त्तव्यं तेन शुद्धये ।
श्रवणं हरिवंशस्य कर्त्तव्यञ्च यथाविधि ॥ ३०
महारुद्रजपञ्चैव कारयेच्च यथाविधि ।
षडङ्गैकादशे रुद्रे रुद्रः सामभिधीयते ॥ ३१
रुद्रैस्तथैकादशभिर्म्महारुद्रः प्रकीर्त्तितः ।
एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते ॥ ३२
जुहुयाच्च दशांशेन दूर्व्वयायुतसङ्ख्यया ।
एकादश स्वर्णनिष्काः प्रदातव्याः सदक्षिणाः ॥ ३३
पलान्येकादश तथा दद्याद्विज्ञानुसारतः ।
अन्येभ्योऽपि यथाशक्ति द्विजेभ्यो दक्षिणान्दिशेत् ॥ ३
स्नापयेद्दम्पती पश्चान्मन्त्रैर्व्वरुणदैवतैः ।
आचार्य्याय प्रदेयानि वस्त्रालङ्करणानि च ॥ ३५
गोवधा पुरुषः कुष्ठी निर्व्वंशश्चोपजायते ।
स च पापविशुद्ध्यर्थं प्राजापत्यशतञ्चरेत् ॥ ३६
व्रतान्ते मेदिनीं दत्त्वा शृणुयादथ भारतम् ।
स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेद्दश ॥ ३७

दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान् ।
राजहा चयरोगी स्यादेषा तस्य च निष्कृतिः ॥ ३८
गोभूहिरण्यमिष्टान्नजलवस्त्रप्रदानतः ।
घृतधेनुप्रदानेन तिलधेनुप्रदानतः ॥ ३९
इत्यादिना क्रमेणैव चयरोगः प्रशाम्यति ।
रक्तार्बुदी वैश्यहन्ता जायते स च मानवः ॥ ४०
प्राजापत्यानि चत्वारि सप्त धान्यानि चोत्सृजेत् ।
दण्डापतानकयुतः शूद्रहन्ता भवेन्नरः ॥ ४१
प्राजापत्यं सकृच्चैवं दद्याद्धेनुं सदक्षिणाम ।
कारुणाञ्च वधे चैव रूक्षभावः प्रजायते ॥ ४२
तेन तत्पापशुद्ध्यर्थं दातव्यो वृषभः सितः ।
सर्व्वकार्य्येष्वसिद्धार्थो गजघाती भवेन्नरः ॥ ४३
प्रासादं कारयित्वा तु गणेशप्रतिमां न्यसेत् ।
गणनाथस्य मन्त्रन्तु मन्त्री लक्षमितं जपेत् ॥ ४४
कुलत्थशाकैः पूपैश्च गणशान्तिपुरःसरम् ।
उष्ट्रे विनिहते चैव जायते विकृतस्वरः ॥ ४५
स तत्पापविशुद्ध्यर्थं दद्यात् कर्पूरकं पलम् ।
अश्वे विनिहते चैव वक्रतुण्डः प्रजायते ॥ ४६
शतं पलानि दद्याच्च चन्दनान्यघनुत्तये ।
महिषीघातने चैव कृष्णगुल्मः प्रजायते ॥ ४७
खरे विनिहते चैव खररोमा प्रजायते ।
निष्कत्रयस्य प्रकृतिं सम्प्रदद्याद्धिरण्मयीम् ॥ ४८
तरक्षौ निहते चैव जायते काकरेक्षणः ।
दद्याद्रत्नमयीं धेनुं स तत्पातकशान्तये ॥ ४९

शूकरे निहते चैव दन्तुरो जायते नरः ।
स दद्यात्तु विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम् ॥ ५०
हरिणे निहते खञ्जः शृगाले तु विपादकः ।
अश्वस्तेन प्रदातव्यः सौवर्णपलनिर्म्मितः ॥ ५१
अजाभिघातने चैव अधिकाङ्गः प्रजायते ।
अजा तेन प्रदातव्या विचित्रवस्त्रसंयुता ॥ ५२
उरभ्रे निहते चैव पाण्डुरोगः प्रजायते ।
कस्तुरिकापलं दद्याद्ब्राह्मणाय विशुद्धये ॥ ५३
मार्ज्जारे निहते चैव पीतपाणिः प्रजायते ।
पारावतं ससौवर्णं प्रदद्यान्निष्कमात्रकम् ॥ ५४
शुकसारिकयोर्घाते नरः स्खलितवाग्भवेत् ।
सच्छास्त्रपुस्तकं दद्यात् स विप्राय सदक्षिणम् ॥ ५५
वकघाती दीर्घनसो दद्याद्गां धवलप्रभाम् ।
काकघाती कर्णहीनो दद्याद्गामसितप्रभाम् ॥ ५६
हिंसायां निष्कृतिरियं ब्राह्मणे समुदाहृता ।
तदर्द्धार्द्धप्रमाणेन क्षत्रियादिष्वनुक्रमात् ॥ ५७

इति शातातपीये कर्म्मविपाके हिंसाप्रायश्चित्तविधिर्नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

सुरापः श्यावदन्तः स्यात् प्राजापत्यान्तरं तथा ।
शर्करायास्तुलाः सप्त दद्यात् पापविशुद्धये ॥ १

जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलैः ।
ततोऽभिषेकः कर्त्तव्यो मन्त्रैर्व्वरुणदैवतैः ॥ २
मद्यपो रक्तपित्ती स्यात् स दद्यात् सर्पिषो घटम् ।
मधुनोऽर्द्धघटञ्चैव सहिरण्यं विशुद्धये ॥ ३
अभक्ष्यभक्षणे चैव जायते क्रिमिलोदरः ।
यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम् ॥ ४
उदक्या वीक्षितं भुक्त्वा जायते क्रिमिलोदरः ।
गोमूत्रयावकाहारस्त्रिरात्रेणैव शुध्यति ॥ ५
भुक्त्वा चास्पृश्य संस्पृष्टं जायते क्रिमिलोदरः ।
त्रिरात्रं समुपोष्याथ स तत्पापात् प्रमुच्यते ॥ ६
परान्नविघ्नकरणादजीर्णमभिजायते ।
लक्षहोमं स कुर्व्वीत प्रायश्चित्तं यथाविधि ॥ ७
मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः ।
प्राजापत्यत्रयं कुर्य्याद्भोजयेच्च शतं द्विजान् ॥ ८
विषदः स्याच्छर्द्दिरोगी दद्याद्दशपयस्विनीः ।
मार्गहा पादरोगी स्यात् सोऽश्वदानं समाचरेत् ॥ ९
पिशुनो नरकस्यान्ते जायते श्वासकासवान् ।
घृतं तेन प्रदातव्यं सहस्रपलसम्मितम् ॥ १०
धूर्त्तोऽपस्माररोगी स्यात् स तत्पापविशुद्धये ।
ब्रह्मकूर्च्चमयीं धेनुं दद्याद्गाश्च सदक्षिणाम् ॥ ११
शूली परोपतापेन जायते तत्प्रमोचने ।
सोऽन्नदानं प्रकुर्व्वीत तथा रुद्रं जपेन्नरः ॥ १२
दावाग्निदायकश्चैव रक्तातिसारवान् भवेत् ।
तेनोदपानं कर्त्तव्यं रोपणीयस्तथा वटः ॥ १३

सुरालये जले वापि शकृन्मूत्रं करोति यः ।
गुदरोगो भवेत् तस्य पापरूपः सुदारुणः ॥ १४
मासं सुरार्च्चनेनैव गोदानद्वितयेन तु ।
प्राजापत्येन चैकेन शाम्यन्ति गुदजा रुजः ॥ १५
गर्भपातनजा रोगा यकृत्प्लीहजलोदराः ।
तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम् ॥ १६
एतेषु दद्याद्विप्राय जलधेनुं विधानतः ।
सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् ॥ १७
प्रतिमाभङ्गकारी च अप्रतिष्ठः प्रजायते ।
संवत्सरत्रयं सिञ्चेदश्वत्थं प्रतिवासरम् ॥ १८
उद्वाहयेत् तमश्वत्थं स्वगृह्योक्तविधानतः ।
तत्र संस्थापयेद्देवं विघ्नराजं सुपूजितम् ॥ १९
दुष्टवादी खण्डितः स्यात् स वै दद्याद्विजातये ।
रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम् ॥ २०
खल्वाटः परनिन्दावान् धेनुं दद्यात् सकाञ्चनाम् ।
परोपहासकृत्काणः स गां दद्यात् समौक्तिकाम ॥ २१
सभायां पक्षपाती च जायते पक्षघातवान् ।
निष्कत्रयमितं हैम स दद्यात् सत्यवर्त्तिनाम् ॥ २२
इति शातातपीये कर्म्मविपाके प्रकीर्णप्रायश्चित्तं नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

कुलघ्नः नरकस्यान्ते जायते विप्रहेमहृत्।
स तु स्वर्णशतं दद्यात् कृत्वा चान्द्रायणत्रयम्॥ १
औडुम्बरो ताम्रचौरो नरकान्ते प्रजायते।
प्राजापत्यं स कृत्वा तु ताम्रं पलशतं दिशेत्॥ २
कांस्यहारी च भवति पुण्डरीकसमन्वितः।
कांस्यं पलशतं दद्यादलङ्कृत्य द्विजातये॥ ३
रीतिहृत् पिङ्गलाक्षः स्यादुपोष्य हरिवासरम्।
रीतिं पलशतं दद्यादलङ्कृत्य द्विजं शुभम्॥ ४
मुक्ताहारी च पुरुषो जायते पिङ्गमूर्द्धजः।
मुक्ताफलशतं दद्यादुपोष्य स विधानतः॥ ५
त्रपुहारो च पुरुषो जायते नेत्ररोगवान्।
उपोष्य दिवसं सोऽपि दद्यात् पलशतं त्रपु॥ ६
सीसहारी च पुरुषो जायते शीर्षरोगवान्।
उपोष्य दिवसं दद्याद्घृतधेनुं विधानतः॥ ७
दुग्धहारी च पुरुषो जायते बहुमूत्रकः।
स दद्याद्दुग्धधेनुञ्च ब्राह्मणाय यथाविधि॥ ८
दधिचौर्य्येण पुरुषो जायते मदवान् यतः।
दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये॥ ९
मधुचौरस्तु पुरुषो जायते नेत्ररोगवान्।
स दद्यान्मधुधेनुञ्च समुपोष्य द्विजातये॥ १०
इक्षोर्व्विकारहारी च भवेदुदरगुल्मवान्।
गुड़धेनुः प्रदातव्या तेन तद्दोषशान्तये॥ ११

लोहहारी च पुरुषः कर्बुराङ्गः प्रजायते ।
लोहं पलशतं दद्यादुपोष्य स तु वासरम् ॥ १२
तैलचौरस्तु पुरुषो भवेत् कण्ड्वादिपीड़ितः ।
उपोष्य स तु विप्राय दद्यात् तैलघटद्वयम् ॥ १३
आमान्नहरणाच्चैव दन्तहीनः प्रजायते ।
स दद्यादश्विनौ हैमनिष्कद्वयविनिर्म्मितौ ॥ १४
पक्वान्नहरणाच्चैव जिह्वारोगः प्रजायते ।
गायत्र्याः स जपेल्लक्षं दशांशं जुहुयात् तिलैः ॥ १५
फलहारी च पुरुषो जायते व्रणिताङ्गुलिः ।
नानाफलानामयुतं स दद्याच्च द्विजन्मने ॥ १६
ताम्बुलहरणाच्चैव श्वेतौष्ठः सम्प्रजायते ।
सदक्षिणं प्रदद्याच्च विद्रुमस्य द्वयं वरम् ॥ १७
शाकहारी च पुरुषो जायते नीललोचनः ।
ब्राह्मणाय प्रदद्याद्वै महानीलमणिद्वयम् ॥ १८
कन्दमूलस्य हरणात् ह्रस्वपाणिः प्रजायते ।
देवतायतनं कार्य्यमुद्यानं तेन शक्तितः ॥ १९
सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते ।
स लक्षमेकं पद्मानां जुहुयाज्जातवेदसि ॥ २०
दारुहारी च पुरुषः छिन्नपाणिः प्रजायते ।
स दद्याद्विदुषे शुद्धौ काश्मीरजपलद्वयम् ॥ २१
विद्यापुस्तकहारी च किल मूकः प्रजायते ।
न्यायेतिहासं दद्यात् स ब्राह्मणाय सदक्षिणम् ॥ २२
वस्त्रहारी भवेत् कुष्ठी सम्प्रदद्यात् प्रजापतिम् ।
हेमनिष्कमितञ्चैव वस्त्रयुग्मं द्विजातये ॥ २३

ऊर्णाहारी लोमशः स्यात् स दद्यात् कम्बलान्वितम्।
स्वर्णनिष्कमितं हेमवह्निं दद्याद्द्विजातये॥ २४
पट्टसूत्रस्य हरणान्निर्लोमा जायते नरः।
तेन धेनुः प्रदातव्या विशुद्ध्यर्थं द्विजन्मने॥ २५
औषधस्यापहरणे सूर्य्यावर्त्तः प्रजायते।
सूर्य्यायार्घ्यः प्रदातव्यो मासं देयञ्च काञ्चनम्॥ २६
रक्तवस्त्रप्रवालादिहारी स्याद्रक्तवातवान्।
सवस्त्रां महिषीं दद्यान्मणिरागसमन्विताम॥ २७
विप्ररत्नापहारी चाप्यनपत्यः प्रजायते।
तेन कार्य्य विशुद्ध्यर्थं महारुद्रजपादिकम् २८
मृतवत्सोदितः सर्व्वो विधिरत्र विधीयते।
दशांशहोमः कर्त्तव्यः पलाशेन यथाविधि॥ २९
देवस्वहरणाच्चैव जायते विविधो ज्वरः।
ज्वरो महाज्वरश्चैव रौद्रो वैष्णव एव च॥ ३०
ज्वरे रौद्रं जपेत् कर्णे महारुद्रं महाज्वरे।
अतिरौद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत्॥ ३१
नानाविधद्रव्यचौरो जायते ग्रहणीयुतः।
तेनान्नोदकवस्त्राणि हेम देयञ्च शक्तितः॥ ३२
इति शातातपीये कर्म्मविपाके स्तेयप्रायश्चित्तं नाम
चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति।
चाण्डालीगमने चैव हीनकोषः प्रजायते॥ १
तस्य प्रतिक्रियां कर्त्तुं कुम्भमुत्तरतो न्यसेत्।
कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम्॥ २
तस्योपरि न्यसेद्देवं कांस्यपात्रे धनेश्वरम्।
सुवर्णनिष्कषट्केन निर्म्मितं नरवाहनम्॥ ३
यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम्।
अथर्व्ववेदविद्विप्रो ह्याथर्व्वणं समाचरेत्॥ ४
सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन्॥ ५
धनानामधिपो देवः शङ्करस्य प्रियः सखा।
सौम्याशाधिपतिः श्रीमान् मम पापं व्यपोहतु॥ ६
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि।
दद्याद्देवं हीनकोषी लिङ्गनाशी विशुद्धये॥ ७
गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते।
तेनापि निष्कृतिः कार्य्या शास्त्रदृष्टेन कर्म्मणा॥ ८
स्थापयेत् कुम्भमेकन्तु पश्चिमायां शुभे दिने।
नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम्॥ ९
तस्योपरि न्यसेद्देवं ताम्रपात्रे प्रचेतसम्।
सुवर्णनिष्कषट्केन निर्म्मितं यादसाम्पतिम्॥ १०
यजेत् पुरुषसूक्तेन वरुणं विश्वरूपिणम्।
सामविद्ब्राह्मणस्तत्र सामवेदं समाचरेत्॥ ११

सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन्॥ १२
यादसामधिपो देवो विश्वेषामपि पावनः।
संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे॥ १३
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि।
दद्याद्देवमलङ्कृत्य मूत्रकृच्छ्रप्रशान्तये॥ १४
स्वसुतागमने चैव रक्तकुष्ठं प्रजायते।
भगिनीगमने चैव पीतकुष्ठं प्रजायते॥ १५
तस्य प्रतिक्रियां कर्त्तुं पूर्व्वतः कलसं न्यसेत्।
पीतवस्त्रसमाच्छन्नं पीतमाल्यविभूषितम्॥ १६
तस्योपरि न्यसेत् स्वर्णपात्रे देवं सुरेश्वरम्।
सुवर्णनिष्कषट्केन निर्म्मितं वज्रधारिणम्॥ १७
यजेत् पुरुषसूक्तेन वासवं विश्वरूपिणम्।
यजुर्व्वेदं तत्र साम ऋग्वेदञ्च समाचरेत्॥ १८
सुवर्णपुत्रिकां कृत्वा सुवर्णद्वयकेन तु।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन्॥ १९
देवानामधिपो देवो वज्री विष्णुनिकेतनः।
शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु॥ २०
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि।
दद्याद्देवं सहस्राक्षं स पापस्यापनुत्तये॥ २१
भ्रातृभार्य्याभिगमनाद्गलत्कुष्ठं प्रजायते।
स्ववधूगमने चैव कृष्णकुष्ठं प्रजायते॥ २२
तेन कार्य्यं विशुद्ध्यर्थं प्रागुक्तस्यार्द्धमेव हि।
दशांशहोमः सर्व्वत्र घृताक्तैः क्रियते तिलैः॥ २३

यद्गम्याभिगमनाज्जायते भ्रुवमण्डलम् ।
कृत्वा लोहमयीं धेनुं तिलषष्ठिप्रमाणतः ॥ २४
कार्पासभारसंयुक्तां कांस्यदोहां सवत्सिकाम्
दद्याद्विप्राय विधिवदिमं मन्त्रमुदीरयेत् ।
सुरभी वैष्णवी माता मम पापं व्यपोहतु ॥ २५
तपस्विनीसङ्गमने जायते चाश्मरीगदः ।
स तु पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥ २६
दद्याद्विप्राय विदुषे मधुधेनुं यथोदितम् ।
तिलद्रोणशतञ्चैव हिरण्येन समन्वितम् ॥ २७
पितृस्वस्रभिगमनाद्दक्षिणांशव्रणी भवेत् ।
तेनापि निष्कृतिः कार्य्या अजादानेन यत्नतः ॥ २८
मातुलान्यान्तु गमने पृष्ठकुब्जः प्रजायते ।
कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत् ॥ २९
मातृष्वस्रभिगमने वामाङ्गे व्रणवान् भवेत् ।
तेनापि निष्कृतिः कार्य्या सम्यग्दानप्रदानतः ॥ ३०
मृतभार्य्याभिगमने मृतभार्य्यः प्रजायते ।
तत्पातकविशुद्ध्यर्थं द्विजमेकं विवाहयेत् ॥ ३१
सगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरः ।
तेनापि निष्कृतिः कार्य्या महिषीदानयत्नतः ॥ ३२
तपस्विनीप्रसङ्गेन प्रमेही जायते नरः ।
मासं रुद्रजपः कार्य्यो दद्याच्छक्त्या च काञ्चनम् ॥ ३३
दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तदृक् ।
स पातकविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ॥ ३४

स्वजातिजायागमने जायते हृदयव्रणी ।
तत्पापस्य विशुद्ध्यर्थं प्राजापत्यद्वयं चरेत् ॥ ३५
पशुयोनौ च गमने मूत्राघातः प्रजायते ।
तिलपात्रद्वयञ्चैव दद्यादात्मविशुद्धये ॥ ३६
अश्वयोनौ च गमनाद् गुदस्तम्भ प्रजायते ।
सहस्रकमलस्नानं मासं कुर्य्यात् शिवस्य च ॥ ३७
एते दोषा नराणां स्युर्नरकान्ते न संशयः ।
स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसङ्गमात् ॥ ३८

इति शातातपीये कर्म्मविपाकेऽगम्यागमनप्रायश्चित्तं
नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अश्वशूकरशृङ्गि[illegible]शकटेन च ।
भूम्यग्निदारुशस्त्राश्मविषोद्बन्धनजैर्मृताः ॥ १
व्याघ्राहिगजभूपालचौरवैरिवृकाहताः ।
काष्ठशल्यमृता ये च शौचसंस्कारवर्ज्जिताः ॥ २
विसूचिकान्नकवलदवातीसारतो मृताः ।
शाकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥ ३
अस्पृश्या अपवित्राश्च पतिताः पुत्रवर्ज्जिताः ।
पञ्चत्रिंशत् प्रकारैश्च नाप्नुवन्ति गतिं मृताः ॥ ४
पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा ।
ततो नान्दीमुखाः प्रोक्तास्त्रयोऽप्यश्रुमुखास्त्रयः ॥ ५

द्वादशैते पितृगणास्तर्पिताः सन्ततिप्रदाः ।
गतिहीनाः सुतादीनां सन्ततिं नाशयन्ति ते ॥ ६
दश व्याघ्रादिनिहता गर्भं विघ्नन्त्यमी क्रमात् ।
द्वादशाश्वादिनिहता आकर्षन्ति च बालकम् ॥ ७
विषादिनिहता घ्नन्ति दशसु द्वादशष्वपि ।
वर्षेकबालकं कुर्य्यादनपत्योऽनपत्यताम् ॥ ८
व्याघ्रेण हन्यते यस्तु: कुमारीगमनेन च ।
विषदश्चैव सर्पेण गजेन नृपदुष्टकृत् ॥ ९
राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः ।
वैरिणा मित्रभेदी च [illegible] तु ॥ १०
गुरुघाती च शय्यायां मत्सरी [illegible] ।
द्रोही संस्काररहितः शुना निक्षेपहारकः ॥ ११
नरो विहन्यतेऽरण्ये शूकरेण च पाशिकः ।
क्रिमिभिः कृतवासाश्च कृमिणा च निकृन्तनः ॥ १२
शृङ्गिणा शङ्करद्रोही शकटेन च सूचकः ।
भृगुणा मेदिनीचौरो वह्निना यज्ञहानिकृत् ॥ १३
दैवेन दक्षिणाचौरः शस्त्रेण श्रुतिनिन्दकः ।
अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः ॥ १४
उद्बन्धनेन हिंस्रः स्यात् सेतुभेदी जलेन तु ।
क्रिमिणा राजदन्तघ्नदतीसारेण लोहहृत् ॥ १५
शाकिन्याद्यैश्च म्रियते सदर्पकार्य्यकारकः ।
अनध्यायेऽप्यधीयानो म्रियते विद्युता तथा ॥ १६
असच्छास्त्रार्थसङ्गी च वस्तुमाश्रित्य शास्त्रहृत् ।
पतितो मदविक्रेतानपत्यो [illegible] ॥ १७

अथ तेषां क्रमेणैव प्रायश्चित्तं विधयते।
कारयेन्निष्कमात्रन्तु पुरुषं प्रेतरूपिणम्॥ १८
चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम्।
पिष्टैः कृष्णतिलैः कुर्य्यात् पिण्डं प्रस्थप्रमाणतः॥ १९
मध्वाज्यशर्करायुक्तं स्वर्णकुण्डलसंयुतम्।
अकालमूलं कलसं पञ्चपल्लवसंयुतम्॥ २०
कृष्णवस्त्रसमाच्छन्नं सर्व्वौषधिसमन्वितम्।
तस्योपरि न्यसेद्देवं पात्रं धान्यफलैर्युतम्॥ २१
सप्तधान्यन्तु सफलं तत्र तत् सफलं न्यसेत्।
कुम्भोपरि च विन्यस्य पूजयेत् प्रेतरूपिणम्॥ २२
कुर्य्यात् पुरुषसूक्तेन प्रत्यहं दुग्धतर्पणम्।
षडङ्गञ्च जपेद्रुद्रं कलसे तत्र वेदवित्॥ २३
यमसूक्तेन कुर्व्वीत यमपूजादिकं तथा।
गायत्र्याश्चैव कर्त्तव्यो जपः स्वात्मविशुद्धये॥ २४
ग्रहशान्तिकपूर्व्वञ्च दशांशं जुहुयात् तिलैः।
अज्ञातनामगोत्राय प्रेताय सतिलोदकम्॥ २५
प्रदद्यात् पितृतीर्थेन पिण्डं मन्त्रमुदीरयेत्।
इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम्॥ २६
ददामि तस्मै प्रेताय यः पीड़ां कुरुते मम।
सजलान् कृष्णकलसांस्तिलपात्रसमन्वितान्॥ २७
द्वादश प्रेतमुद्दिश्य दद्यादेकञ्च विष्णवे।
ततोऽभिषिञ्चदाचार्य्यो दम्पतीकलसोदकैः॥ २८
शुचिर्व्वरायुधधरो मन्त्रैर्व्वरुणदैवतैः।
यजमानस्ततो दद्यादाचार्य्याय सदक्षिणाम्॥ २९

उद्बन्धनमृते चापि प्रदद्याद्गां पयस्विनीम् ।
मृते जलेन वरुणं हैमं दद्यात्त्रिनिष्ककम् ॥ ४२
वृक्षं वृक्षहते दद्यात् सौवर्णं स्वर्णसंयुतम् ।
अतीसारमृते लक्षं सावित्र्याः संहतो जपेत् । ४३
शाकिन्यादिमृते चैवं जपेद्रुद्रं यथोचितम् ।
विद्युत्पातेन निहते विद्यादानं समाचरेत् ॥ ४४
अस्पृश्ये च मृते कार्य्यं वेदपारायणं तथा ।
सच्छास्त्रपुस्तकं दद्याद्धात्मसान्निध्य संस्थिते ॥ ४५
पातित्येन मृते कुर्य्यात् प्राजापत्यानि षोड़श ।
मृते चापत्यरहिते कृच्छ्राणां नवतिञ्चरेत् । ४६
निष्कत्रयमितस्वर्णं दद्याद्दश्वं हयाहते ।
कपिना निहते दद्यात् कपिं कनकनिर्म्मितम् ॥ ४७
विसूचिकामृते स्वादु भोजयेच्च शतं द्विजाम् ।
तिलधेनुः प्रदातव्या कण्ठेऽन्नकवले मृते ॥ ४८
केशरोगमृते चापि अष्टौ कृच्छ्रान् समाचरेत् ।
एवं कृते विधानेन विदध्याद्दौर्द्धदैहिकम् ॥ ४९
ततः प्रेतत्वनिर्म्मुक्ताः पितरस्तर्पितास्तथा ।
दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसम्पदः ॥ ५०
इति शातातपप्रोक्तो विपाकः कर्म्मणामयम् ।
शिष्याय शरभङ्गाय विनयात् परिपृच्छते ॥ ५१

इति शातातपीये कर्म्मविपाकेऽगतिप्रायश्चित्तं नाम
षष्ठोऽध्यायः ॥ ६ ॥

्र्त्तौतु कर्त्तव्यो ब्राह्मणेन प्रयत्नतः ।
लभते स्वर्गं पूर्त्ते मोक्षमवाप्नुयात् ॥ १
इमपि कर्त्तव्यं भूमिष्ठमुदकं शुभम् ।
नि तारयेत् सप्त यत्र गौर्वितृषा भवेत् ॥ २
दानेन ये लोका गोदानेन च कीर्त्तिताः ।
तान् प्राप्नुयान्मर्त्यः पादपानां प्ररोपणे ॥ ३
कूपतड़ागानि देवतायतनानि च ।
ान्युद्धरेद्यस्तु स पूर्त्तफलमश्नुते ॥ ४
होत्रं तपः सत्यं वेदानाञ्चैव पालनम् ।
र्थ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते ॥ ५
्र्त्तें द्विजातीनां सामान्यो धर्म्म उच्यते ।
कारी भवेच्छूद्रः पूर्त्ते धर्म्मे न वैदिके ॥ ६
ःस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
र्षसहस्राणि स्वर्गलोके महीयते ॥ ७
ानां पितृणाञ्च जले दद्याज्जलाञ्जलिम् ।
ृतसुतानाञ्च स्थले दद्याज्जलाञ्जलिम् ॥ ८
द्श्राद्धे प्रेतस्य यस्य चोत्सृज्यते वृषः ।
प्रेतलोकात्तु पितृलोकं स गच्छति ॥ ९
ा बहवः पुत्रा यद्यप्येको गयां व्रजेत् ।
वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ १०

वाराणस्यां प्रविष्टस्तु कदाचिन्निष्क्रमेद्यदि ।
हसन्ति तस्य भूतानि अन्योऽन्यं करताड़नैः ॥ ११
गयाशिरे तु यत्किञ्चिन्नाम्ना पिण्डन्तु निर्व्वपेत् ।
नरकस्थो दिवं याति स्वर्गस्थो मोक्षमाप्नुयात् ॥ १२
आत्मनो वा परस्यापि गयाक्षेत्रे यतस्ततः ।
यन्नाम्ना पातयेत् पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥ १३
लोहितो यस्तु वर्णेन शङ्खवर्णखुरस्तथा ।
लाङ्गूलशिरसोश्चैव स वै नीलवृषः स्मृतः ॥ १४
नवश्राद्धं त्रिपक्षे च द्वादशश्चैव मासिकम् ।
षण्मासौ चाब्दिकश्चैव श्राद्धान्येतानि षोड़श ॥ १५
यस्यैतानि न कुर्व्वीत एकोद्दिष्टानि षोड़श ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ १६
सपिण्डीकरणादूर्द्धं प्रतिसंवत्सरं द्विजः ।
मातापित्रोः पृथक्कुर्य्यादेकोद्दिष्टं मृतेऽहनि ॥ १७
वर्षे वर्षे तु कर्त्तव्यं मातापित्रोस्तु सन्ततम् ।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकन्तु निर्व्वपेत् ॥ १८
संक्रान्तावुपरागे च पर्व्वण्यपि महालये ।
निर्व्वाप्यास्तु त्रयः पिण्डा एकतस्तु क्षयेऽहनि ॥ १९
एकोद्दिष्टं परित्यज्य पार्व्वणं कुरुते द्विजः ।
अकृतं तद्विजानीयात् स नाम पितृघातकः ॥ २०
अमावस्यां क्षयो यस्य पितृपक्षेऽथवा यदि ।
सपिण्डीकरणादूर्द्धं तस्योक्तः पार्व्वणो विधिः ॥ २१
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ।
अहन्येकादशे प्राप्ते पार्व्वणन्तु विधीयते ॥ २२

यस्य संवत्सरादर्व्वाक् सपिण्डीकरणं स्मृतम्।
प्रत्यहं तत्सोदकुम्भं दद्यात् संवत्सरं द्विजः॥ २३
पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
पितामह्यापि तत्तस्मिन् सत्येवन्तु चयेऽहनि॥ २४
तस्यां सत्यां प्रकर्त्तव्यं तस्या श्वश्रुति निश्चितम्॥ २५
विवाहे चैव निर्व्वृत्ते चतुर्थेऽहनि रात्रिषु।
एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके॥ २६
स्वगोत्राद्भ्रश्यते नारी उद्वाहात् सप्तमे पदे।
भर्त्तृगोत्रेण कर्त्तव्यं दानं पिण्डोदकक्रिया॥ २७
द्विमातुः पिण्डदानन्तु पिण्डे पिण्डे द्विनामतः।
षण्णां देयास्त्रयः पिण्डा एवं दाता न मुह्यति॥ २८
अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः।
अदोषं तत् यमः प्राह पङ्क्तिपावन एव सः॥ २९
अग्नौकरणशेषन्तु पितृपात्रे प्रदापयेत्।
प्रतिपाद्य पितॄणाञ्च न दद्याद्वैश्वदैविके॥ ३०
अनग्निको यदा विप्रः श्राद्धं करोति पार्व्वणम्।
तत्र मातामहानाञ्च कर्त्तव्यमभयं सदा॥ ३१
अपुत्रा ये मृताः केचित् पुरुषा वा स्त्रियोऽपि वा।
तेभ्य एव प्रदातव्यमेकोद्दिष्टं न पार्व्वणम्॥ ३२
यस्मिन् राशिगते सूर्य्ये विपत्तिः स्याद्द्विजन्मनः।
तस्मिन्नहनि कर्त्तव्यं दानं पिण्डोदकक्रिया॥ ३३
वर्षवृद्ध्यभिषेकादि कर्त्तव्यमधिकेन तु।
अधिमासे तु पूर्व्वं स्याच्छ्राद्धं संवत्सरादपि॥ ३४

स एव हैयोद्दिष्टस्य येन केन तु कर्म्मणा।
अभिधानान्तरं कार्य्यं तत्रैवाहः कृतं भवेत्॥ ३५
शालाग्नौ पचते अन्नं लौकिकेनापि नित्यशः।
यस्मिन्नेव पचेदन्नं तस्मिन् होमो विधीयते॥ ३६
वैदिके लौकिके वापि नित्यं हुत्वा ह्यतन्द्रितः।
वैदिके स्वर्गमाप्नोति लौकिके हन्ति किल्बिषम्॥ ३७
अग्नौ व्याहृतिभिः पूर्व्वं हुत्वा मन्त्रैस्तु शाकलैः।
संविभागन्तु भूतेभ्यस्ततोऽश्नीयादनग्निमान्॥ ३८
उच्छेषणन्तु नोत्तिष्ठेद्यावद्विप्रविसर्ज्जनम्।
ततो गृहबलिं कुर्य्यादिति धर्म्मो व्यवस्थितः॥ ३९
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणस्य विशेषतः।
नैते निर्म्माल्यतां यान्ति योक्तव्यास्ते पुनः पुनः॥ ४०
पानमाचमनं कुर्य्यात् कुशपाणिः सदा द्विजः।
भुक्ता नोच्छिष्टतां याति एष एव विधिः सदा॥ ४१
पान आचमने चैव तर्पणे दैविके सदा।
कुशहस्तो न दुष्येत यथा पाणिस्तथा कुशः॥ ४२
वामपाणौ कुशान् कृत्वा दक्षिणेन उपस्पृशेत्।
विनाचमन्ति ये मूढ़ा रुधिरेणाचमन्ति ते॥ ४३
नीवीमध्येषु ये दर्भा ब्रह्मसूत्रेषु ये कृताः।
पवित्रांस्तान् विजानीयाद्यथा कायस्तथा कुशाः॥ ४४
पिण्डे कृतास्तु ये दर्भा यैः कृतं पितृतर्पणम्।
मूत्रोच्छिष्टपुरीषस्य तेषां त्यागो विधीयते॥ ४५
दैवपूर्व्वन्तु यच्छ्राद्धमदैवञ्चापि यद्भवेत्।
ब्रह्मचारी भवेत् तत्र कुर्य्याच्छ्राद्धन्तु पैतृकम्॥ ४६

मातुः श्राद्धन्तु पूर्व्वं पितृणां तदनन्तरम्।
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्॥ ४७
क्रतुर्दक्षो वसुः सत्यः कालकामौ धुरिलोचनौ।
पुरूरवामाद्रवाश्च विश्वेदेवाः प्रकीर्त्तिताः॥ ४८
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते॥ ४८
इष्टिश्राद्धे क्रतुर्दक्षो वसुः सत्यश्च दैविके।
काल: कामोऽग्निकार्य्येषु अम्बरे धुरिलोचनौ।
पुरूरवा माद्रवाश्च पार्व्वणेषु नियोजयेत्॥ ५०
यस्यास्तु न वेदभ्राता न विज्ञायेत वा पिता।
नोपयच्छेत तां प्राज्ञः पुत्रिकाकर्म्मशङ्कया॥ ५१
अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति॥ ५२
मातुः प्रथमतः पिण्डं निर्व्वपेत् पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्यास्तृतीयं तत्पितुः पितुः॥ ५३
मृन्मयेषु च पात्रेषु श्राद्धे यो भोजयेत् पितॄन्।
अन्नदाता पुरोधाश्च भोक्ता च नरकं व्रजेत्॥ ५४
अलाभे मृन्मयं दद्यादनुज्ञातस्तु तैर्द्विजैः।
घृतेन प्रोक्षणं कार्य्यं मृदः पात्रं पवित्रकम्॥ ५५
श्राद्धं कृत्वा परश्राद्धे यस्तु भुञ्जीत विह्वलः।
पतन्ति पितरस्तस्य लुप्तपिण्डोदकक्रियाः॥ ५६
श्राद्धं दत्त्वा च भुक्त्वा च अध्वानं योऽधिगच्छति।
भवन्ति पितरस्तस्य तन्मासं पांशुभोजनाः॥ ५७

पुनर्भोजनमध्वानं भारमध्ययनं मैथुनम् ।
दानं प्रतिग्रहं होमं श्राद्धं क्वत्वाष्ट वर्ज्जयेत् ॥ ५८
अध्वगामी भवेदश्वः पुनर्भोक्ता च वायसः ।
कर्म्मकृज्जायते दासः स्त्रीगमने च शूकरः ॥ ५९
दशकृत्वः पिवेदापः सावित्र्या चाभिमन्त्रिताः ।
ततः सन्ध्यामुपासीत शुध्येत तदनन्तरम् ॥ ६०
आर्द्रवासास्तु यत् कुर्य्याद्बहिर्जानु च यत्कृतम् ।
सर्व्वं तन्निष्फलं कुर्य्याज्जपहोमप्रतिग्रहम् ॥ ६१
चान्द्रायणं नवश्राद्धे पराको मासिके तथा ।
पक्षत्रये तु कृच्छ्रं स्यात् षण्मासे कृच्छ्रमेव च ॥ ६२
ऊनाब्दिके त्रिरात्रं स्यादेकाहः पुनराब्दिके ।
शावे मासन्तु भुक्त्वा वा पादकृच्छ्रं विधीयते ॥ ६३
सर्पविप्रहतानाञ्च शृङ्गिदंष्ट्रिसरीसृपैः ।
आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत् ॥ ६४
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ।
तं स्पृशन्ति च ये विप्रा गोऽजाश्वाश्च भवन्ति ते ॥ ६५
अग्निदाता तथा चान्ये पाशच्छेदकराश्च ये ।
तप्तकृच्छ्रेण शुध्यन्ति मनुराह प्रजापतिः ॥ ६६
त्र्यहमुष्णं पिवेदापस्त्र्यहमुष्णं पयः पिवेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् ॥ ६७
गोभूहिरण्यहरणे स्त्रीणां क्षेत्रगृहस्य च ।
यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकम् ॥ ६८
उद्यताः सह धावन्ते यद्येको धर्म्मघातकः ।
सर्व्वे ते शुद्धिमृच्छन्ति स एको ब्रह्मघातकः ॥ ६९

पतितान्नं यदा भुङ्क्ते भुङ्क्ते चाण्डालवेश्मनि।
स मासार्द्धं चरेद्वारि मासं कामकृतेन तु॥ ७०
योगेन पतितेनैव स्पर्शे स्नानं विधीयते।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत्॥ ७१
ब्रह्महा च सुरापायी स्तेयी च गुरुतल्पगः।
महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः॥ ७२
स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा।
कुर्व्वन्त्यनुग्रहं ये च तत्पापं तेषु गच्छति॥ ६३
उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणस्तु कदाचन।
तत्क्षणात् कुरुते स्नानमाचमेन शुचिर्भवेत्॥ ७४
कुब्जवामनषण्डेषु गद्गदेषु जड़ेषु च।
जात्यन्धे वधिरे मूके न दोषः परिवेदने॥ ७५
क्लीवे देशान्तरस्थे च पतिते व्रजितेऽपि वा।
योगशास्त्राभियुक्ते च न दोषः परिवेदने॥ ७६
पूरणे कूपवापीनां वृक्षच्छेदनपातने।
विक्रीणीत गजञ्चाश्वं गोवधं तस्य निर्द्दिशेत्॥ ७७
पादेऽङ्गरोमवपनं द्विपादे श्मश्रु केवलम्।
तृतीयेतु शिखावर्ज्जं चतुर्थेतु शिखावपः॥ ७८
चाण्डालोदकसंस्पर्शे स्नानं येन विधीयते।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत्॥ ७९
चाण्डालघटभाण्डस्थं यत्तोयं पिवते द्विजः।
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत्॥ ८०
यदि नोत्क्षिप्यते तोयं शरीरे तस्य जीर्य्यति।
प्राजापत्यं न दातव्यं कृच्छ्रं सान्तपनं चरेत्॥ ८१

चरेत् सान्तपनं विप्रः प्राजापत्यन्तु क्षत्रियः।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रे तु दापयेत्॥ ८२
रजस्वला यदा स्पृष्टा शुना शूकरवायसैः।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥ ८३
अज्ञानतः स्नातमात्रमा नाभेस्तु विशेषतः।
अत ऊर्द्धं त्रिरात्रं स्यात्तदीयस्पर्शने मतम्॥ ८४
बालस्यैव दशाहे तु पञ्चत्वं यदि गच्छति।
सद्य एव विशुध्येत नाशौचं नोदकक्रिया॥ ८५
शावसूतक उत्पन्ने सूतकन्तु सदा भवेत्।
शावेन शुध्यते सूतिर्न सूतिः शावशोधिनी॥ ८६
षष्ठेन शुद्ध्यतैकाहं पञ्चमे द्व्यहमेव तु।
चतुर्थे सप्तरात्रं स्यात् त्रिपुरुषे दशमेऽहनि॥ ८७
मरणारब्धमाशौचं संयोगो यस्य नाग्निभिः।
आ दाहात्तस्य विज्ञेयं यस्य वैतानिको विधिः॥ ८८
आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः।
अन्यभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः॥ ८९
मार्ज्जनीरजसासक्तो स्नानवस्त्रघटोदकैः।
नवाम्भसि तथा चैव हन्ति पुण्यं दिवाकृतम्॥ ९०
दिवा कपित्थच्छायायां रात्रौ दधिषु शक्तुषु।
धात्रीफलेषु सर्व्वत्र अलक्ष्मीर्व्वसते सदा॥ ९१
यत्र यत्र च सङ्कीर्णमात्मानं मन्यते द्विजः।
तत्र तत्र तिलैर्होमं गायत्र्यष्टशतं जपेत्॥ ९२

# शङ्खसंहिता।

## प्रथमोऽध्यायः।

स्वयम्भुवे नमस्कृत्य सृष्टिसंहारकारिणे।
चातुर्व्वर्ण्यहितार्थाय शङ्खः शास्त्रमथाकरोत्॥ १
यजनं याजनं दानं तथैवाध्यापनक्रियाम्।
प्रतिग्रहञ्चाध्ययनं विप्रः कर्म्माणि कारयेत्॥ २
दानमध्ययनञ्चैव यजनञ्च यथाविधि।
क्षत्रियस्य तु वैश्यस्य कर्म्मेदं परिकीर्त्तितम्॥ ३
क्षत्रियस्य विशेषेण प्रजानां परिपालनम्।
कृषिगोरक्षवाणिज्यं वैश्यस्य परीकीर्त्तितम्॥ ४
शूद्रस्य द्विजशुश्रूषा सर्व्वशिल्पानि चाप्यथ।
क्षमा सत्यं दमः शौचं सर्व्वेषामविशेषतः॥ ५
ब्राह्मणाः क्षत्रियाः वैश्यास्त्रयो वर्णा द्विजातयः।
तेषां जन्म द्वितीयन्तु विज्ञेयं मौञ्जिवन्धनम्॥ ६
आचार्य्यस्तु पिता प्रोक्तः सावित्री जननी तथा।
ब्रह्मक्षत्रविशाञ्चैव मौञ्जिवन्धनजन्मनि॥ ७
विप्राः शूद्रसमास्तावद्विज्ञेयास्तु विचक्षणैः।
यावद्वेदे न जायन्ते द्विजा ज्ञेयास्तु तत्परम्॥ ८

इति शङ्खीये धर्म्मशास्त्रे प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः ।

गर्भस्य स्फुटताज्ञाने निषेकः परिकीर्त्तितः ।
ततस्तु स्पन्दनात् कार्य्यं सवनन्तु विचक्षणैः ॥ १
अशौचे तु व्यतिक्रान्ते नामकर्म्म विधीयते ।
नामधेयञ्च कर्त्तव्यं वर्णानाञ्च समाचरम् ॥ २
माङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ ३
शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य च ।
धनान्तञ्चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ॥ ४
चतुर्थे मासि कर्त्तव्यमादित्यस्य प्रदर्शनम् ।
षष्ठेऽन्नप्राशनं मासि चुड़ा कार्य्या यथाकुलम् ॥ ५
गर्भाष्टमेऽब्दे कर्त्तव्यं ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ ६
षोड़शाब्दस्तु विप्रस्य द्वाविंशः क्षत्रियस्य तु ।
विंशतिः सचतुष्का च वैश्यस्य परिकीर्त्तिता ॥ ७
नाभिभाषेत सावित्रीमत ऊर्द्धं निवर्त्तयेत् ॥ ८
विज्ञातव्यास्त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्याः सर्व्वधर्म्मबहिष्कृताः ॥ ९
मौञ्जीबन्धो द्विजानान्तु क्रमान्मौञ्जी प्रकीर्त्तिता ।
मार्गं वैयाघ्रवास्तानि चर्म्माणि ब्रह्मचारिणाम् ॥ १०
पर्णपिप्पलविल्वानां क्रमाद्दण्डाः प्रकीर्त्तिताः ।
कर्णकेशललाटैस्तु तुल्याः प्रोक्ताः क्रमेण तु ॥ ११

अवक्राः सत्वचः सर्वे नाग्निदग्धास्तथैव च ।
यज्ञोपवीतं कार्पासक्षौमोर्णानां यथाक्रमम् । १२
आदिमध्यावसानेषु भवच्छब्दोपलक्षितम् ।
भैक्षस्य चरणं प्रोक्तं वर्णानामनुपूर्व्वशः ॥ १३

इति शङ्खीये धर्म्मशास्त्रे द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ।

उपनीय गुरुः शिष्यं वेदमस्मै प्रयच्छति ।
भृतकाध्यापको यस्तु उपाध्यायः स उच्यते ॥ १
प्रयतः काल्यमुत्थाय स्नातो हुतहुताशनः ।
कुर्व्वीत प्रयतो भुत्वा गुरूणामभिवादनम् ॥ २
अनुज्ञातश्च गुरुणा ततोऽध्ययनमाचरेत् ।
कृत्वा ब्रह्माञ्जलिं पश्यन् गुरोर्वदनमानतः ॥ ३
ब्रह्मावसाने प्रारम्भे प्रणवञ्च प्रकीर्त्तयेत् ।
अनध्यायेष्वध्ययनं वर्ज्जयेच्च प्रयत्नतः ॥ ४
चतुर्द्दशीं पञ्चदशीमष्टमीं राहुसूतकम् ।
उल्कापातं महीकम्पमशौचं ग्रामविप्लवम् ॥ ५
इन्द्रप्रयाणं सुरतं घनसङ्घातनिस्वनम् ।
वाद्यकोलाहलं युद्धमनध्यायं विवर्ज्जयेत् ॥ ६
नाधीयीताभियुक्तोऽपि प्रयाणे न च वेगतः ।
देवायतनवल्मीकश्मशानशवसन्निधौ ॥ ७
भैक्षचर्य्यान्तथा कुर्य्याद् ब्राह्मणेषु यथाविधि ।
गुरुणा चाभ्यनुज्ञातः प्राश्नीयात् प्राङ्मुखः शुचिः ॥ ८

हितं प्रियं गुरोः कुर्य्यादहङ्कारविवर्ज्जितः ॥ ९
उपास्य पश्चिमां सन्ध्यां पूजयित्वा हुताशनम् ।
अभिवाद्य गुरुं पश्चाद् गुरोर्व्वचनकृद्भवेत् ॥ १०
गुरोः पूर्व्वं समुत्तिष्ठेच्छयीत चरमं तथा ॥ ११
मधुमांसाञ्जनं श्राद्धं गीतं नृत्यञ्च वर्ज्जयेत् ।
हिंसापवादवादांश्च स्त्रीलीलाश्च विशेषतः ॥ १२
मेखलामजिनं दण्डं धारयेच्च प्रयत्नतः ।
अधःशायी भवेन्नित्यं ब्रह्मचारी समाहितः ॥ १३
एवं कृत्यन्तु कुर्व्वीत वेदस्वीकरणं बुधः ।
गुरवे च धनं दत्त्वा स्नायाच्च तदनन्तरम् ॥ १४

इति शङ्खीये धर्म्मशास्त्रे तृतीयोऽध्याय ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

विन्देत विधिवद्भार्य्यामसमानार्षगोत्रजाम् ।
मातृतः पञ्चमीञ्चापि पितृतस्त्वथ सप्तमीम् ॥ १
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ।
गान्धर्व्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ २
एते धर्म्म्यास्तु चत्वारः पूर्व्वं विप्रे प्रकीर्त्तिताः ।
गान्धर्व्वो राक्षसश्चैव क्षत्रियस्य प्रशस्यते ॥ ३
अप्रार्थितः प्रयत्नेन ब्राह्मस्तु परिकीर्त्तितः ।
यज्ञेषु ऋत्विजे दैवमादायार्षस्तु गोद्वयम् ॥ ४
प्रार्थितापप्रदानेन प्राजपत्यः प्रकीर्त्तितः ।
आसुरो द्रविणादानाद्गान्धर्व्वः समयान्मिथः ॥ ५

राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्।
तिस्रस्तु भार्य्या विप्रस्य द्वे भार्य्ये क्षत्रियस्य तु॥ ६
एकैव भार्य्या वैश्यस्य तथा शूद्रस्य कीर्त्तिता।
ब्राह्मणी क्षत्रिया वैश्या ब्राह्मणस्य प्रकीर्त्तिताः॥ ७
क्षत्रिया चैव वैश्या च क्षत्रियस्य विधीयते।
वैश्यैव भार्य्या वैश्यस्य शूद्रा शूद्रस्य कीर्त्तिता॥ ८
आपद्यपि न कर्त्तव्या शूद्रा भार्य्या द्विजन्मना।
तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते॥ ९
तपस्वी यज्ञशीलश्च सर्व्वधर्म्मभृतां वरः।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे॥ १०
नीयते तु सपिण्डत्वं येषां श्राद्धं कुलोद्गतम्।
सर्व्वे शूद्रत्वमायान्ति यदि स्वर्गजितास्तु ते॥ ११
सपिण्डीकरणं कार्य्यं कुलजस्य तथा ध्रुवम्।
श्राद्धं द्वादशकं कृत्वा श्राद्धे प्राप्ते त्रयोदशे॥ १२
सपिण्डीकरणं नार्हं न च शूद्रस्तथार्हति।
तस्मात् सर्व्वप्रयत्नेन शूद्रभार्य्यां विवर्ज्जयेत्॥ १३
पाणिग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम्।
वैश्या प्रतोदमादद्याद्वेदने तु द्विजन्मनः॥ १४
सा भार्य्या या वहेदग्निं सा भार्य्या या पतिव्रता।
सा भार्य्या या पतिप्राणा सा भार्य्या या प्रजावती॥ १५
लालनीया सदा भार्य्या ताड़नीया तथैव च।
लालिता ताड़िता चैव स्त्री श्रीर्भवति नान्यथा॥ १६

इति शङ्खीये धर्म्मशास्त्रे चतुर्थोऽध्यायः॥ ४॥

---

## पञ्चमोऽध्यायः।

पञ्चसूना गृहस्थस्य चुल्ली पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च तस्य पापस्य शान्तये ॥ १
पञ्चयज्ञविधानञ्च गृही नित्यं न हापयेत्।
पञ्चयज्ञविधानेन तत्पापं तस्य नश्यति ॥ २
देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च।
ब्रह्मयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्त्तिताः ॥ ३
होमो दैवो बलिर्भौतः पित्र्यः पिण्डक्रिया स्मृतः।
स्वाध्यायो ब्रह्मयज्ञश्च नृयज्ञोऽतिथिपूजनम् ॥ ४
वानप्रस्थो ब्रह्मचारी यतिश्चैव तथा द्विजः।
गृहस्थस्य प्रसादेन जीवन्तेते यथाविधि ॥ ५
गृहस्थ एव यजते गृहस्थस्तप्यते तपः।
दाता चैव गृहस्थः स्यात् तस्माच्छ्रेष्ठो गृहाश्रमी ॥ ६
यथा भर्त्ता प्रभुः स्त्रीणां वर्णानां ब्राह्मणो यथा।
अतिथिस्तद्वदेवास्य गृहस्थस्य प्रभुः स्मृतः ॥ ७
न व्रतैर्नोपवासेन कर्म्मणा विविधेन च।
नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥ ८
न स्नानेन न होमेन नैवाग्निपरितर्पणात्।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात् ॥ ९
नाग्निशुश्रूषया चान्या स्नानेन विविधेन च।
वानप्रस्थो दिवं याति यथा भोजनवर्ज्जनात् ॥ १०
न भैक्षैर्न च मौनेन शून्यागाराश्रयेन च।
योगी सिद्धिमवाप्नोति यथा मैथुनवर्ज्जनात् ॥ ११

न यज्ञैर्दक्षिणाभिश्च वह्निशुश्रूषया न च।
गृही स्वर्गमवाप्नोति यथा चातिथिपूजनात्॥ १२
तस्मात् सर्व्वप्रयत्नेन गृहस्थोऽतिथिमागतम्।
आहारशयनार्थेन विधिवत् परिपूजयेत्॥ १३
सायं प्रातश्च जुहुयादग्निहोत्रं यथाविधि।
दर्शञ्च पौर्णमासञ्च जुहुयाच्च तथाविधिः॥ १४
यज्ञैर्व्वा पशुबन्धैश्च चातुर्मास्यैस्तथैव च।
त्रैवार्षिकान्नेन पिवेत् सोममतन्द्रितः॥ १५
इष्टिं वैश्वानरीं कुर्य्यात्तथा चाल्पधनो द्विजः।
न भिक्षेत धनं शूद्रात् सर्व्वं दद्यादभीप्सितम्॥ १६
वृत्तिस्तु न त्यजेद्विद्वान्नृत्विजं पूर्व्वमेव तु।
कर्म्मणा जन्मना शुद्धं विद्यात् पात्रं बलीततम्॥ १७
एतैरेव गुणैर्युक्तं धर्म्मार्ज्जितधनं तथा।
याजयेत्तु सदा विप्रा ग्राह्यस्तस्मात् प्रतिग्रहः॥ १८
इति शङ्खीये धर्म्मशास्त्रे पञ्चमोऽध्यायः॥ ५॥

---

## षष्ठोऽध्यायः।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥ १
पुत्रेषु दारान् निक्षिप्य तया वानुगतो वने।
अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरेत्॥ २
यदाहारो भवेत् तेन पूजयेत् पितृदेवताः।
तेनैव पूजयेन्नित्यमतिथिं समुपागतम्॥ ३

ग्रामादाहृत्य चाश्नीयादष्टौ ग्रासान् समाहितः।
स्वाध्यायञ्च सदा कुर्य्याज्जटाश्च बिभृयात्तथा॥ ४
तपसा शोषयेन्नित्यं स्वकञ्चैव कलेवरम्।
आर्द्रवासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा॥ ५
प्रावृष्याकाशशायी स्यान्नक्ताशी च सदा भवेत्।
चतुर्थकालिको वा स्यात् स्याच्च षष्ठक एव च॥ ६
कृच्छ्रैर्व्वापि नयेत् कालं ब्रह्मचर्य्यञ्च पालयेत्।
एवं नीत्वा वने कालं द्विजो ब्रह्माश्रमी भवेत्॥ ७

इति शङ्खीये धर्म्मशास्त्रे षष्ठोऽध्यायः॥ ६॥

---

## सप्तमोऽध्यायः।

कृत्वेष्टिं विधिवत् पश्चात् सर्व्ववेदसदक्षिणाम्।
आत्मन्यग्नीन् समारोप्य द्विजो ब्राह्मश्रमी भवेत्॥ १
विधूमे न्यस्तमुषले व्यङ्गारे भुक्तवर्ज्जने।
अतीते पादसम्पाते नित्यं भिक्षां यतिश्चरेत्॥ २
न व्यथेत तथालाभे यथालब्धेन वर्त्तयेत्।
न पाचयेत्तथैवान्नं नाश्नीयात् कस्यचिद्गृहे॥ ३
मृन्मयालावुपात्राणि यतीनान्तु विनिर्द्दिशेत्।
तेषां सम्मार्ज्जनाच्छुद्धिरद्भिश्चैव प्रकीर्त्तिता॥ ४
कौपीनाच्छादनं वासो बिभृयादसक्तश्चरन्।
शून्यागारनिकेतः स्याद्यत्र सायंगृहो मुनिः॥ ५
दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत्।
सत्यपूतं वदेद्वाक्यं मनःपूतं समाचरेत्॥ ६

चन्दनैर्लिप्यतेऽङ्गं वा भस्मचूर्णैर्विगर्हितैः।
कल्याणमप्यकल्याणं तयोरेव न संश्रयेत् ॥ ७
सर्व्वभूतहितो मैत्रः समलोष्टाश्मकाञ्चनः।
ध्यानयोगरतो नित्यं भिक्षुर्ध्यायात् परां गतिम् ॥ ८
जन्मना यस्तु निर्व्विस्रो मन्यते च तथैव च।
आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः ॥ ९
अशुचित्वं शरीरस्य प्रियस्य च विपर्य्ययः।
गर्भावासे च वसतिस्तस्मान्मुच्येत नान्यथा ॥ १०
जगदेतन्निराक्रन्दं न तु सारमनर्थकम्।
भोक्तव्यमिति निर्व्विस्रो मुच्यते नात्र संशयः ॥ ११
प्राणायामैर्द्दहेद्दोषान् धारणाभिश्च किल्विषान्।
प्रत्याहारैरसत्सङ्गान ध्यानेनानीश्वरान् गुणान् ॥ १२
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १३
मनसः संयमस्तत्र धारणेति निगद्यते।
संहारश्चेन्द्रियाणाञ्च प्रत्याहारः प्रकीर्त्तितः ॥ १४
हृदयस्थस्य योगेन देवदेवस्य दर्शनम्।
ध्यानं प्रोक्तं प्रवक्ष्यामि सर्व्वस्माद्‌योगतः शुभम् ॥ १५
हृदिस्था देवताः सर्व्वा हृदि प्राणाः प्रतिष्ठिताः।
हृदि ज्योतींषि भूयश्च हृदि सर्व्वं प्रतिष्ठितम् ॥ १६
स्वदेहमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्।
ध्याननिर्म्मथनाभ्यासात्तु विष्णुं पश्येद्धृदि स्थितम् ॥ १७
हृद्यर्कश्चन्द्रमाः सूर्य्यः सोमो मध्ये हुताशनः।
तेजोमध्ये स्थितं तत्त्वं तत्त्वमध्ये स्थितोऽच्युतः ॥ १८

अणोरणीयान् महतो महीया-
नात्मास्य जन्तोर्निहितो गुहायाम् ।
तेजोमयं पश्यति वीतशोको
धातुः प्रसादान्महिमानमात्मनः ॥ १९

वासुदेवस्तमोऽन्धानां प्रत्यक्षो नैव जायते ।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः ॥ २०
एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः ।
एष धाता विधाता च पुराणो निष्कलः शिवः ॥ २१

विदेहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
मन्त्रैर्विदित्वा न बिभेति मृत्यो-
र्नान्यः पन्था विद्यतेऽयनाय ॥ २२

पृथिव्यापस्तथा तेजोवायुराकाशमेव च ।
पञ्चेमानि विजानीयन्महाभूतानि पण्डितः ॥ २३
चक्षुःश्रोत्रे स्पर्शनञ्च रसना घ्राणमेव च ।
बुद्धीन्द्रियाणि जानीयात् पञ्चेमानि शरीरके ॥ २४
शब्दो रूपं तथा स्पर्शो रसो गन्धस्तथैव च ।
इन्द्रियस्थान् विजानीयात् पञ्चैव विषयान् बुधः ॥ २५
हस्तौ पादावुपस्थञ्च जिह्वा पायुस्तथैव च ।
कर्म्मेन्द्रियाणि पञ्चैव नित्यं मति शरीरके ॥ २६
मनो बुद्धिस्तथैवात्मा व्यक्ताव्यक्तं तथैव च ।
इन्द्रियेभ्यः पराणीह चत्वारि प्रवराणि च ॥ २७
तथात्मानं तदग्रतीतं पुरुषं पञ्चविंशकम् ।
तन्तु ज्ञात्वा विमुच्यन्ते ये जनाः साधुवृत्तयः ॥ २८

इदन्तु परमं शुद्धमेतदक्षरमुत्तमम्।
अशब्दमरसस्पर्शमरूपं गन्धवर्ज्जितम्।
निर्दुःखमसुखं शुद्धं तद्विष्णोः परमं पदम्॥ २९
विज्ञानसारथिर्यस्तु मनः प्रग्रहवन्धनः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥ ३०
वालाग्रशतशो भागः कल्पितस्तु सहस्रधा।
तस्यापि शतशो भागाज्जीवः सूक्ष्म उदाहृतः॥ ३१
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥ ३२
एषु सर्व्वेषु भूतेषु तिष्ठत्यविरलः सदा।
दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥ ३३
इति शङ्खीये धर्म्मशास्त्रे सप्तमोऽध्याय॥ ७॥

---

## अष्टमोऽध्यायः।

क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्व्वकम्।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि॥ १
जले निमज्ज्य उन्मज्ज्य उपस्पृश्य यथाविधि।
तीर्थमावाहनं कुर्य्यात् तत् प्रवक्ष्याम्यशेषतः॥ २
प्रपद्ये वरुणं देवमम्भसां पतिमर्च्चितम्।
याचेत देहि मे तीर्थं सर्व्वपापापनुत्तये॥ ३
तीर्थमावाहयिष्यामि सर्व्वाघविनिसूदनम्।
सान्निध्यमस्मिंस्तोये च क्रियतां मदनुग्रहात्॥ ४

रुद्रात् प्रपद्य वरदान् सर्व्वानप्सु सदस्तथा।
सर्व्वानप्सु सदश्चैव प्रपद्ये प्रयतः स्थितः॥ ५
देवमंशुसदं वह्निं प्रपद्याघनिसूदनम्।
आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा॥ ६
रुद्रश्चाग्निश्च सर्पश्च वरुणस्त्वाप एव च।
शमयन्त्वाशु मे पापं माञ्च रक्षन्तु सर्व्वशः॥ ७
हिरण्यवर्णेति तिसृभिर्जगतीति चतसृभिः।
शन्नोदेवीति च तथा शन्न आपस्तथैव च॥ ८
इदमापः प्रवहते ध्रुतञ्च समुदीरयेत्।
एवं सम्मार्ज्जनं कृत्वा च्छन्द आर्षञ्च देवताः॥ ९
अघमर्षणसूक्तञ्च प्रपठेत् प्रयतः सदा॥ १०
छन्दोऽनुष्टुप् च तस्यैव ऋषिश्चैवाघमर्षणः।
देवता भाववृत्तश्च पापक्षये प्रकीर्त्तितः॥ ११
ततोऽम्भसि निमग्नः स्यात्त्रिः पठेदघमर्षणम्।
प्रपद्यान्मूर्द्धनि तथा महाव्याहृतिभिर्ज्जलम्॥ १२
यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः।
तथाघमर्षणं सूक्तं सर्व्वपापप्रणाशनम्॥ १३
अनेन विधिना स्नात्वा स्नातवान् धौत वाससा।
परिवर्ज्जितवासास्तु तीर्थनामानि सञ्जपेत्॥ १४
उदकस्याप्रदानात्तु स्नानशाटीं न पीड़येत्।
अनेन विधिना स्नातस्तीर्थस्य फलमश्नुते॥ १५

इति शङ्खीये धर्म्मशास्त्रे अष्टमोऽध्यायः॥ ८॥

---

# नवमोऽध्यायः।

अतः परं प्रवक्ष्यामि शुभामाचमनक्रियाम्।
कायं कनिष्ठिकामूले तीर्थमुक्तं करस्य तु॥ १
अङ्गुष्ठमूले च तथा प्राजापत्यं प्रकीर्त्तितम्।
अङ्गुल्यग्रे स्मृतं दैवं पित्रं तर्ज्जनिमूलकम्॥ २
प्राजापत्येन तीर्थेन त्रिः प्राश्नीयाज्जलं द्विजः।
द्विः प्रमृज्य मुखं पश्चादद्भिः खं समुपस्पृशेत्॥ ३
हृद्गाभिः पूयते विप्रः कण्ठगाभिश्च भूमिपः।
तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः॥ ४
अन्तर्जानुः शुचौ देशे प्राङ्मुखः सुसमाहितः।
उदङ्मुखोऽपि प्रयतो दिशश्चानवलोकयन्॥ ५
अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः।
वह्निना चाप्यदग्धाभिरङ्गुलीभिरुपस्पृशेत्॥ ६
तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः।
अङ्गुष्ठानामिकाभ्यान्तु श्रवणौ समुपस्पृशेत्॥ ७
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः।
सर्व्वासामेव योगेन नाभिञ्च हृदयं ततः॥ ८
संस्पृशेत् तु तथा मूर्द्धा यथा चाचमने विधिः॥ ९
त्रिः प्राश्नीयाद् यदम्भस्तु पीतास्तेनास्य देवताः।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुमः॥ १०
गङ्गा च यमुना चैव प्रीयेते परिमार्ज्जनात्।
नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये॥ ११

स्पृष्टे लोचनयुग्मे च प्रीयेते शशिभास्करौ।
कर्णयुग्मे यथा स्पृष्टे प्रीयेते अनिलानलौ॥ १२
स्कन्धयोः स्पर्शनादस्य प्रीयन्ते सर्व्वदेवताः।
मूर्द्धस्तु स्पर्शनादस्य प्रीतस्तु पुरुषो भवेत्॥ १३
विना यज्ञोपवीतेन तथा मुक्तशिखोऽपि वा।
अप्रक्षालित पादस्तु आचान्तोऽप्यशुचिर्भवेत्॥ १४
बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः।
समलाभिस्तथाद्भिश्च नैव शुद्धिमवाप्नुयात्॥ १५
आचम्य च पुरा प्रोक्तं तीर्थसम्मार्ज्जनं ततः।
उपस्पृश्य ततः पश्चान्मन्त्रेणानेन धर्म्मतः॥ १६
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम्॥ १७
आचम्य च ततः पश्चादादित्याभिमुखो जलम्।
उदुत्यं जातवेदसं मन्त्रेण प्रक्षिपेत् ततः॥ १८
एष एव विधिः प्रोक्तः सन्ध्यायाश्च द्विजातिषु।
पूर्व्वां सन्ध्यां जपंस्तिष्ठेदासीनः पश्चिमां तथा॥ १९
ततो जपेत् पवित्राणि पवित्रान् वाथ शक्तितः।
ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः॥ २०

इति शङ्खीये धर्म्मशास्त्रे नवमोऽध्यायः॥ ९॥

---

## दशमोऽध्यायः।

सर्व्ववेदपवित्राणि वक्ष्याम्यतः परम्।

अघमर्षणं देवव्रतं शुद्धवत्यस्तु यत् सदा ।
कुश्माण्ड्याः पावमान्यश्च सर्व्वसावित्र्य एव च ॥ २
अभीष्टरूपदा चैव स्तोमानि व्याहृतिस्तथा ।
भारुण्डानि च सामानि गायत्र्या वै व्रतं तथा ॥ ३
पुरुषव्रतञ्च भारञ्च तथा सामव्रतानि च ।
अविघ्नं बार्हस्पत्यञ्च वाक्सूक्तममृतं तथा ॥ ४
शतरुद्रीमथर्व्वशिरास्त्रिसुपर्णां महाव्रतम् ।
गोसूक्तमश्वसूक्तञ्च इन्द्रसूक्तञ्च सामनी ॥ ५
त्रीनि पुष्याङ्गदेहानि रथन्तरञ्चाग्निव्रतं वामदेव्यञ्च ।
एतानि गीतानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते यदीच्छेत् ॥ ६
इति शङ्खीये धर्म्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ।

इति वेदपवित्राण्यभिहितानि एभ्यः सावित्री विशिष्यते ।
नास्त्यघमर्षणात् परमं तज्जलेन व्याहृतिभिः परंहोमः ॥ १
न सावित्र्याः परं जप्यम् । कुशहस्तामासीनः कुशो-
त्तरीयः कुशपाणिः प्राङ्मुखः सूर्य्याभिमुखो वाचमालामादाय
देवताध्यायी तज्जपं कुर्य्यात् । सुवर्ण-मणि-मुक्ता-स्फाटिक-
पद्मपत्र-वीजाद्यानामन्यतमेनाक्षमालां कुर्य्यात् । ध्यायन् वाम-
हस्तोपरि वा गणयेत् । आदौ देवतामार्षं चन्दश्च स्मरेत । ततः
सप्रणवव्याहृतिकामादावन्ते च शिरसा गायत्रीमावर्त्तयेत् ।

...ख्याः सविता ऋषिर्विश्वामित्रो गायत्रीछन्दः। प्रणवाद्या
भूर्भुवः स्वर्महर्जनस्तपः सत्यमिति व्याहृतयः। आपोज्योती-
...मृतं ब्रह्मभूर्भुवःस्वरोम्॥ २

सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥ ३
दशजप्ता तु सा देवी दिनपापप्रणाशिनी।
शतं जप्ता तथा सा तु सर्व्वकल्मषनाशिनी।
सहस्रं जप्ता सा नृणां पातकेभ्यः समुद्धरेत्॥ ४
स्वर्णस्तेयी कृतघ्नश्च ब्रह्महा गुरुतल्पगः।
सुरापश्च विशुध्येत लक्षजप्तेन सर्व्वदा॥ ५
प्राणायामत्रयं कृत्वा स्नानकाले समाहितः।
अहोरात्रकृतात् पापात् तत्क्षणादेव शुध्यति॥ ६
सव्याहृतिकाः सप्रणवाः प्राणायामास्तु षोड़श।
अपि भ्रूणहनं मासात् पुनन्त्यहरहःकृताः॥ ७
हुता देवी विशेषेण सर्व्वकामप्रदायिनी।
सर्व्वपापक्षयकरी वरदा भक्तवत्सला॥ ८
शान्तिकामस्तु जुहुयाद्गायत्रीमयुतैः शुचिः।
हर्त्तुकामोऽपमृत्युञ्च घृतेन जुहुयात् तथा॥ ९
श्रीकामस्तु तथा पद्मैर्विल्वैः काञ्चनकामतः।
ब्रह्मवर्चसकामस्तु जुहुयात् पूर्व्ववत् तथा॥ १०
घृतप्लुतैस्तिलैर्व्वह्नौ हुत्वा तु सुसमाहितः।
गायत्र्ययुतहोमात् तु सर्व्वपापैः प्रमुच्यते॥ ११
पापात्मा लक्षहोमेण पातकेभ्यः प्रमुच्यते।
ब्रह्मलोकमवाप्नोति प्राप्नुयात् काममीप्सितम्॥ १२

यत्री चैव जननी गायत्री पापनाशिनी।
यत्र्यास्तु परं नास्ति दिवि चेह च पावनम्॥ १३
स्तत्राणपदा देवी पततां नरकार्णवे।
स्मात्तामभ्यसेन्नित्यं ब्राह्मणो नियतः शुचिः॥ १४
ायत्रीजप्यनिरतो हव्यकव्येषु भोजयेत्।
स्मिन् न तिष्ठते पापमब्विन्दुरिव भास्करे॥ १५
पेनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः।
र्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते॥ १६
पांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः।
ोच्चैर्जप्यं बुधः कुर्य्यात् सावित्र्यास्तु विशेषतः॥ १७
ाावित्रीजप्यनिरतः स्वर्गमाप्नोति मानवः।
ाावित्रीजप्यनिरतो मोक्षोपायञ्च विन्दति॥ १८
ास्मात् सर्व्वं प्रयत्नेन स्नातः प्रयतमानसः।
ाायत्रीञ्च जपेद्भक्त्या सर्व्वंपापप्रणाशिनीम्॥ १९

इति शङ्खीये धर्म्मशास्त्रे एकादशोऽध्यायः॥ ११॥

---

## द्वादशोऽध्यायः।

स्नातः कृतजपस्तदनु प्राङ्मुखो दिव्येन तीर्थेन देवानुदकेन
ात्। प्रत्यहं पुरुषसूक्तेनोदकाञ्जलीन् दद्यात् पुष्पाञ्जलीन्
ा। अथ कृतापसव्यो दक्षिणामुखोऽन्तर्जानुः पितृभ्य
णां श्राद्धप्रकारमुदकं दद्यात्। पित्रे पितामहाय पिता-
सप्तमात् पुरुषात् पितृपक्षे यावतां नाम जानीयात्।

पितृपत्नीयाणां त्रयाणां दत्त्वा मातृपत्नीयाणां गुरूणां सम्बन्धि-
बान्धवानाञ्च कृत्वा सुहृदां कुर्य्यात्। भवन्ति चात्र श्लोकाः।

विना रौप्यसुवर्णेन विना ताम्रतिलेन च।
विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठते॥ १
सौवर्णराजताभ्याञ्च खड्गेनोडुम्बरेण वा।
दत्तमक्षयतां याति पितृणान्तु तिलोदकम्॥ २
कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्व्वापि पितृणां प्रीतिमावहन्॥ ३
स्नातस्तु तर्पणं कृत्वा पितृणान्तु तिलाम्भसा।
पितृयज्ञमवाप्नोति प्रीणन्ति पितरस्तथा॥ ४

इति शङ्खीये धर्म्मशास्त्रे द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

ब्राह्मणान्न परीक्षेत दैवे कर्म्मणि धर्म्मवित्।
पित्र्ये कर्म्मणि सम्प्राप्ते युक्तमार्गैः परीक्षणम्॥ १
ब्राह्मणा ये विकर्म्माणो वैडालव्रतिकाः शठाः।
हीनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः॥ २
गुरूणां प्रतिकूलाश्च तथाभ्युग्रपातिनश्च ये।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः॥ ३
अनध्यायेष्वधीयानाः शौचाचारविवर्ज्जिताः।
शूद्रान्नरससम्पुष्टा ब्राह्मणाः पङ्क्तिदूषकाः॥ ४
षडङ्गवेदवेत्तारो बह्वृचश्चैव सामगाः।
त्रिणाचिकेतः पञ्चाग्निर्ब्राह्मणाः पङ्क्तिपावनाः॥ ५

ब्रह्मदेयानुसन्ताना ब्रह्मदेयाप्रदायकाः।
ब्रह्मदेयापतिर्यश्च ब्राह्मणाः पङ्क्तिपावनाः॥ ६
ऋग् यजुःपारगो यश्च साम्नां यश्चापि पारगः।
अथर्व्वाङ्गिरसोऽध्येता ब्राह्मणाः पङ्क्तिपावनाः॥ ७
नित्यं योगरतो विद्वान् समलोष्ट्राश्मकाञ्चनः।
ध्यानशीलो यतिर्विद्वान् ब्राह्मणाः पङ्क्तिपावनाः॥ ८
द्वौ दैवे प्राङ्मुखौ त्रींश्च पित्र्ये च चोदङ्मुखांस्तथा।
भोजयेद्विविधान् विप्रानेकैकमुत यत्र वा॥ ९
भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनम्।
दैवे कृत्वा तु नैवेद्यं पश्चाद्वह्नौ तु तत् क्षिपेत्॥ १०
उच्छिष्टसन्निधौ कार्य्यं पिण्डनिर्व्वपणं बुधैः।
अभावे च तथा कार्य्यमग्निकार्य्यं यथाविधि॥ ११
श्राद्धं कृत्वा तु यत्नेन त्वरा क्रोधविवर्ज्जितः।
उष्णमन्नं द्विजातिभ्यः श्रद्धया विनिवेदयेत्॥ १२
भोजयेद्विविधान् विप्रान् गन्धमाल्यानुलेपनैः।
पङ्क्तिविदात्मनो गेहे भोज्यं वा भक्ष्यमेव वा।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन॥ १३
उग्रगन्धान्यगन्धानि चैत्यवृक्षभवानि च।
पुष्पाणि वर्ज्जनीयानि तथा पर्व्वतजानि च॥ १४
तोयोद्भुतानि देयानि रक्तान्यपि विशेषतः।
ऊर्णासूत्रं प्रदातव्यं कार्पासमथवा नवम्॥ १५
दशां विवर्ज्जयेत् प्राज्ञो यद्यनाहतवस्त्रजाः।
घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः॥ १६

धूपार्थं गुग्गुलं दद्यात् घृतयुक्तं मधूत्कटम् ।
चन्दनञ्च तथा दद्यादिष्टं यत् कुङ्कुमं शुभम् ॥ १७
छत्राकं शरशिम्बञ्च पलञ्च सूपकं तथा ।
कुष्माण्डालावुवार्त्ताकुकोविदारांश्च वर्ज्जयेत् ॥ १८
पिप्पलीं मरिचञ्चैव तथा वै पिण्डमूलकम् ।
कृतञ्च लवणञ्चैव वंशाग्रन्तु विवर्ज्जयेत् ॥ १९
राजमासान् मसूरांश्च प्रवालकोरदूषकान् ।
लोहितान् वृक्षनिर्य्यासान् श्राद्धकर्म्मणि वर्ज्जयेत् ॥ २०
आम्रातलवलीमूलमूलकान् दधिदाड़िमान् ।
सकोविदार्य्यसत्कन्दराजेन मधुना सदा ॥ २१
शक्तून् शर्करया सार्द्धं दद्याच्छ्राद्धे प्रयत्नतः ।
पायसादिभिरन्यैश्च भोजयित्वा तथा द्विजान् ॥ २२
भक्त्या प्रणम्य आचान्तान् तथा वै दत्तदक्षिणान् ।
अभिवाद्य प्रसन्नात्मा अनुव्रज्य विसर्ज्जयेत् ॥ २३
निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः ।
श्राद्धं भुक्त्वा च दत्त्वा च युक्तः स्यान्महतैनसा ॥ २४
कालशाकं महाशल्कं मांसं वा शकुनस्य च ।
खड़्गमांसं तथानन्त्यं यमः प्रोवाच धर्म्मवित् ॥ २५

इति शङ्खीये धर्म्मशास्त्रे त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्द्दशोऽध्यायः।

यद्ददाति गयाक्षेत्रे प्रभासे पुष्करेऽपि च।
प्रयागे नैमिषारण्ये सर्व्वमानन्त्यमुच्यते॥ १
गङ्गायमुनयोस्तीरे तीर्थे वामरकण्टके।
नर्म्मदायां गयातीरे सर्व्वमानन्त्यमुच्यते॥ २
वाराणस्यां कुरुक्षेत्रे भृगुतुङ्गे महालये।
सप्तारण्येऽसिकूपे च यत् तदक्षयमुच्यते॥ ३
म्लेच्छदेशे तथारात्रौ सन्ध्ययाश्च विशेषतः।
न श्राद्धमाचरेत् प्राज्ञो म्लेच्छदेशे न च व्रजेत्॥ ४
हस्तिच्छायासूर्य्यसितचन्द्रार्द्धे राहुदर्शने।
विषुवत्ययने चैव सर्व्वमानन्त्यमुच्यते॥ ५
प्रोष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धन्तु कर्त्तव्यं मधुना पायसेन च॥ ६
प्रजां पुष्टिं तथा स्वर्गमारोग्यञ्च धनं तथा।
नृणां प्राप्य सदा प्रीतिं प्रयच्छन्ति पितामहाः॥ ७

इति शङ्खीये धर्म्मशास्त्रे चतुर्द्दशोऽध्यायः॥ १४॥

---

## पञ्चदशोऽध्यायः।

जनने मरणे चैव सपिण्डानां द्विजोत्तमाः।
त्र्यहाच्छुद्धिमवाप्नोति योऽग्निवेदसमन्वितः॥ १
सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।
जनने मरणे विप्रो दशाहेन विशुध्यति॥ २

क्षत्रियो द्वादशाहेन वैश्यः पक्षेण शुध्यति ।
मासेन तु तथा शूद्रः शुद्धिमाप्नोति नान्तरा ॥ ३ ॥
रात्रिभिर्म्मासतुल्याभिर्गर्भस्रावे विशुद्ध्यति ।
अजातदन्तबाले तु सद्यः शौचं विधीयते ॥ ४
अहोरात्रात्तथा शुद्धिर्व्बाले त्वकृतचूड़के ।
तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति मानवाः ॥ ५
मृतानां कन्यकानान्तु तथैव शूद्रजन्मनः ।
अनूढ़भार्य्यः शूद्रस्तु षोड़शाद्वत्सरात् परम् ॥ ६
मृत्युं समवगच्छेत्तु मासं तस्यापि बान्धवाः ।
शुद्धिं समवगच्छन्ति नात्र कार्य्या विचारणा ॥ ७
पितृवेश्मनि कन्या या रजः पश्यत्यसंस्कृता ।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥ ८
हीनवर्णाद् यदा नारी प्रमादात् प्रसवं व्रजेत् ।
प्रसवे मरणे तज्जमशौचं नोपशाम्यति ॥ ९
समानं खल्वशौचन्तु प्रथमे तु समापयेत् ।
असमानं द्वितीयेन धर्म्मराजवचो यथा ॥ १०
देशान्तरगतः श्रुत्वा सत्त्वानां मरणोद्भवौ ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ ११
अतीते दशरात्रे तु तावदेव शुचिर्भवेत् ।
तथा संवत्सरेऽतीते स्नान एव विशुध्यति ॥ १२
अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च ।
परपूर्व्वासु च स्त्रीषु त्र्यहाच्छुद्धिरिहेष्यते ॥ १३
मातामहे व्यतीते तु आचार्य्ये च तथा मृते ।
गृहे मृतासु दत्तासु कन्यासु च त्र्यहं तथा ॥ १४

विनष्टे राजनि तथा जाते दौहित्रके गृहे।
आचार्य्यपत्नीपुत्रेषु दिवसेन च मातुले ॥ १५
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च।
सब्रह्मचारिणि तथा अनचाने तथा मृते ॥ १६
एकरात्रं त्रिरात्रं वा षड्रात्रं मासमेव च।
शूद्राः सपिण्डवर्णानामशौचं क्रमतः स्मृतम् ॥ १७
सपिण्डे क्षत्रिये शुद्धिः षड्रात्रं ब्राह्मणस्य च।
वर्णानां परिशिष्टानां द्वादशेऽह्नि विनिर्द्दिशेत् ॥ १८
सपिण्डे ब्राह्मणा वर्णाः सर्व्वं एवाविशेषतः।
दशरात्रेण शुध्येयुरित्याह भगवान् यमः ॥ १९
भृग्वग्निपतनाम्भोभिर्मृतानामात्मघातिनाम्।
पतितानामशौचञ्च शस्त्रविद्युद्धताश्च ये ॥ २०
यती व्रती ब्रह्मचारी सूपकारश्च दीक्षितः।
नाशौचभाजः कथिता राजाज्ञाकारिणश्च ये ॥ २१
यस्तु भुङ्क्ते पराशौचे वर्णी सोऽप्यशुचिर्भवेत्।
असुथ शुचौ शुद्धिश्च तस्याप्युक्ता मनीषिभिः ॥ २२
पराशौचे नरो भुक्त्वा क्रमियोनौ प्रजायते।
भुक्तान्नं म्रियते यस्य तस्य जातौ प्रजायते ॥ २३
दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च।
प्रेतपिण्डक्रियावर्ज्जमशौचं विनिवर्त्तते ॥ २४

इति शङ्खीये धर्म्मशास्त्रे पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षड़शोऽध्यायः ।

मृन्मयं भाजनं सर्व्वं पुनःपाकेन शुध्यति ।
मलैर्मूत्रैः पुरीषैर्व्वा ष्ठीवनैः पूयशोणितैः ॥ १
संसृष्टं नैव शुध्येत पुनःपाकेन मृन्मयम् ।
एतैरेव यदि स्पृष्टं ताम्रसौवर्णराजतम् ॥ २
शुध्यत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा ।
अम्लोदकेन ताम्रस्य सीसस्य त्रपुषस्तथा ॥ ३
क्षारेण शुद्धिः कांसस्य लौहस्यापि विनिर्द्दिशेत् ।
मुक्तामणिप्रवालानां शुद्धिः प्रक्षालनेन तु ॥ ४
अजानाञ्चैव भाण्डानां सर्व्वस्याश्ममयस्य च ।
शाकमूलफलानाञ्च विदलानां तथैव च ॥ ५
मार्ज्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्म्मणि ।
उष्णाम्भसा तथा शुद्धिः सकेशानां विनिर्द्दिशेत् ॥ ६
शय्यासनापणानान्तु सूर्य्यस्य किरणैस्तथा ।
शुद्धिस्तु प्रोक्षणाद्यज्ञे करकेन्धनयोस्तथा ॥ ७
मार्ज्जनाद्वेश्मनां शुद्धिः क्षितेः शोधस्तु तत्क्षणात् ।
सम्मार्ज्जनेन तोयेन वाससां शुद्धिरिष्यते ॥ ८
बहूनां प्रोक्षणाच्छुद्धिर्धान्यादीनां विनिर्द्दिशेत् ।
प्रोक्षणात् संहतानाञ्च काष्ठानाञ्चैव तत्क्षणात् ॥ ९
सिद्धार्थकानां कल्केन शृङ्गदन्तमयस्य च ।
गोवालैः फलपात्राणामस्थ्नां शृङ्गवतां तथा ॥ १०
निर्य्यासानां गुड़ानाञ्च लवणानां तथैव च ।
कुसुम्भकुसुमानाञ्च ऊर्णाकार्पासयोस्तथा ॥ ११

शौचयात् कथिता शुद्धिरित्याह भगवान् यमः।
भूमिष्ठमुदकं शुद्धं तथा शुचि शिलागतम्॥ १२
वर्णगन्धरसैर्दुष्टैर्वर्ज्जितानां तथा भवेत्।
शुद्धं नदीगतं तोयं सर्व्वदैव सुखाकरम्॥ १३
शुद्धं प्रसारितं पण्यं शुद्धाश्वाश्वादयो मुखे।
मुखवर्ज्जन्तु गौः शुद्धा मार्ज्जारश्चाश्रमे शुचिः॥ १४
शय्या भार्य्या शिशुर्वस्त्रमुपवीतं कमण्डलुः।
आत्मनः कथितं शुद्धं न तच्छुद्धं परस्य च॥ १५
नारीणाञ्चैव वत्सानां शकुनानां शुनां मुखम्।
रात्रौ प्रसरणे वृत्ते मृगयायां सदा शुचिः॥ १६
शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला।
दैवे कर्म्मणि पित्रे च पञ्चमेऽहनि शुध्यति॥ १७
रथ्याकर्द्दमतोयेन ष्ठीवनाद्येन वाप्यथ।
नाभेरूर्द्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति॥ १८
कृत्वा मूत्रपुरीषञ्च लेपगन्धापहं तथा।
उद्धृतेनाभ्यसा स्नानं मृदा चैव समाचरेत्॥ १९
मेहने मृत्तिकाः सप्त लिङ्गे द्वे च प्रकीर्त्तिते।
एकस्मिन् विंशतिर्हस्ते द्वयोर्देयाश्चतुर्दश॥ २०
तिस्रस्तु मृत्तिका देयाः कृत्वा तु नखशोधनम्।
तिस्रस्तु पादयोर्देयाः शौचकामस्य सर्व्वदा॥ २१
शौचमेतद्गृहस्थानां द्विगुणं ब्रह्मचारिणाम्।
द्विगुणञ्च वनस्थानां यतीनां द्विगुणं तथा॥ १२
मृत्तिका च विनिर्द्दिष्टा त्रिपर्व्वं पूर्य्यते यया॥ २३

इति शङ्खीये धर्म्मशास्त्रे षोड़शोऽध्यायः॥ १६

## सप्तदशोऽध्यायः।

नित्यं त्रिषवणस्नायी कृत्वा पर्णकुटीं वने।
अधःशायी जटाधारी पर्णमूलफलाशनः॥ १
ग्रामं विशेत भिक्षार्थं स्वकर्म्म परिकीर्त्तयन्।
एवं कालं समास्थाय वर्षे च द्वादशे गते॥ २
रुक्मस्तेयी सुरापायी ब्रह्महा गुरुतल्पगः।
व्रतेनैकेन शुध्यन्ति महापातकिनश्च ये॥ ३
यागस्थं क्षत्रियं हत्वा वैश्यं हत्वा तु याजकम्।
एतदेव व्रतं कुर्य्यादाश्रमं विनिदूषकः॥ ४
कूटसाक्ष्यं तथैवोक्त्वा निक्षेपञ्च प्रहृत्य च।
एतदेव व्रतं कुर्य्याच्छ्रित्वा च शरणागतम्॥ ५
आहिताग्निः स्त्रियं हत्वा मित्रं हत्वा तथैव च।
हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्॥ ६
व्रतस्थञ्च द्विजं हत्वा पार्थिवञ्चाकृताश्रमम्।
एतदेव व्रतं कुर्य्याद्द्विगुणञ्च विशुद्धये॥ ७
क्षत्रियस्य तु पादोनं तदर्द्धं वैश्यघातने।
अर्द्धमेव सदा कुर्य्यात् स्त्रीवधे पुरुषस्तथा॥ ८
पादन्तु शूद्रहत्यायामुदक्यागमने तथा।
गोवधे च तथा कुर्य्यात् परदारगतस्तथा॥ ९
पशून् हत्वा तथा ग्राम्यान् मासं कुर्य्याद्विचक्षणः।
आरण्यानां वधे चैव तदर्द्धन्तु विधीयते॥ १०
हत्वा द्विजं तथा सर्पं जलेशयाविलेशयौ।
सप्तरात्रं तथा कुर्य्याद्व्रतन्तु ब्राह्मणस्तथा॥ ११

अनध्यान्तु शतं हत्वा साध्वीं दशशतं तथा ।
ब्रह्महत्याव्रतं कुर्य्यात् पूर्णं संवत्सरं तथा ॥ १२
यस्य यस्य च वर्णस्य वृत्तिच्छेदं समाचरेत् ।
तस्य तस्य वधप्रोक्तं प्रायश्चित्तं समाचरेत् ॥ १३
अपहृत्य तु वर्णानां भुवमेव प्रमादतः ।
प्रायश्चित्तमथ प्रोक्तं ब्राह्मणानुमतं चरेत् ॥ १४
गोऽजाश्वस्यापहरणे सौमानां रजतस्य च ।
जलापहरणे चैव कुर्य्यात् संवत्सरं व्रतम् ॥ १५
तिलानां धान्यवस्त्राणां शस्त्राणामामिषस्य च ।
संवत्सरार्द्धं कुर्व्वीत व्रतमेतत् समाहितः ॥ १६
तृणकाष्ठे च तक्राणां रसानामपहारकः ।
मासमेकं व्रतं कुर्य्याद्दन्तानां सर्पिषां तथा ॥ १७
लावणानां गुड़ानाञ्च मूलानां कुसुमस्य च ।
मासार्द्धन्तु व्रतं कुर्य्यादेतदेव समाहितः ॥ १७
लौहानां वैदलानाञ्च सूत्राणां चर्म्मणां तथा ।
एकरात्रं व्रतं कुर्य्यात्तद्वदेव समाहितः ॥ १८
भुक्त्वा पलाण्डुं लशुनं मद्यञ्च कवकानि च ।
नारं मलं तथा मांसं विड़्वराहं खरं तथा ॥ २०
गौधेरकुञ्जरोष्ट्रञ्च सर्व्वं पञ्चनखं तथा ।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्य्यात् संवत्सरं व्रतम् ॥ २१
भक्ष्याः पञ्चनखास्त्वेते गोधाकच्छपशल्लकाः ।
खड्गश्च शशकश्चैव तान् हत्वा तु चरेद्व्रतम् ॥ २२
हंसं मद्गुरकं काकं काकोलं खञ्जरीटकम् ।
मत्स्यादांश्च तथा मत्स्यान् वलाकाशुकसारिकाः ॥ २३

चक्रवाकं प्लवं कोकं मण्डूकं भुजगं तथा ।
मासमेतद्व्रतं कुर्य्यान्नात्र कार्य्या विचारणा ॥ २४
राजीवान् सिंहतुण्डांश्च शकुलांश्च तथैव च ।
पाठीनरोहितौ भक्ष्यौ मत्स्येषु परिकीर्त्तितौ ॥ २५
जलेचरांश्च जलजान् मुखपादान् सुविष्किरान् ।
रक्तपादान् जालपादान् सप्ताहं व्रतमाचरेत् ॥ २६
तित्तिरिश्च मयूरश्च लावकश्च कपिञ्जलम् ।
वार्द्ध्रीणसं वर्त्तकश्च भक्ष्यानाह यमः सदा ॥ २७
भुक्त्वा चैवोभयदतं तथैकशफदंष्ट्रिणः ।
तथा भुक्त्वा तु मांसं वै मासार्द्धं व्रतमाचरेत् ॥ २८
स्वयं मृतं वृथामांसं माहिषं वाजमेव च ।
गोश्च क्षीरं विवत्साया महिष्याश्च तथा पयः ॥ २९
सन्धिन्यमेध्यं भक्षित्वा पक्षन्तु व्रतमाचरेत् ।
क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः ॥ ३०
सप्तरात्रं व्रतं कुर्य्याद् यदेतत् परिकीर्त्तितम् ।
लोहितान् वृक्षनिर्य्यासान् व्रश्चनां प्रभवांस्तथा ॥ ३१
केवलानि तथान्नानि तथा पर्य्युषितञ्च यत् ।
गुड़पक्कं तथा भुक्त्वा त्रिरात्रन्तु व्रती भवेत् ॥ ३२
दधिभक्तञ्च शुक्तेषु यच्चान्यद्दारुसम्भवम् ॥
गुड़युक्तं भक्षयित्वा तक्रं निन्द्यमिति श्रुतिः ॥ ३३
यवगोधूमजं सर्व्वं विकाराः पयसश्च ये ।
राजवाड़्श्च कुल्यश्च भैक्ष्यं पर्य्युषितं भवेत् ॥ ३४
अजीवपक्वमांसञ्च सर्व्वं यत्नेन वर्ज्जयेत् ।
संवत्सरं व्रतं कुर्य्यात् प्राश्येतान् ज्ञानतस्तथा ॥ ३५

शूद्रान्नं ब्राह्मणो भुक्ता तथा रङ्गावतारिणः।
बद्धस्य चैव चौरस्यावीराया‍श्च तथा स्त्रियः॥ ३६
कर्म्मकारस्य वेणस्य क्लीवस्य पतितस्य च।
रुक्मकारस्य तक्ष्णश्च तथा वार्द्धुषिकस्य च॥ ३७
कदर्य्यस्य नृशंसस्य वेश्यायाः कितवस्य च।
गणान्नं भूमिपालान्नमन्नञ्चैवास्त्रजीविनः॥ ३८
सौनकान्नं सूतिकान्नं भुक्ता मासं व्रतं चरेत्।
शूद्रस्य सततं भुक्ता षण्मासान् व्रतमाचरेत्॥ ३९
वैश्यस्य च तथा स्त्रीणां मासमेकं व्रतं चरेत्।
क्षत्रियस्य तथा भुक्ता द्वौ मासौ च व्रतं चरेत्॥ ४०
ब्राह्मणस्य तथा भुक्ता मासमेकं समाचरेत्।
अपः सुराभाजनस्थाः पीत्वा पक्षं व्रती भवेत्॥ ४१
शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः।
क्षत्रियस्य तु सप्ताहं ब्राह्मणस्य तथा दिनम्॥ ४२
अथाश्राद्धाशने विद्वान् मासमेकं व्रती भवेत्।
परिवित्तिः परिवेत्ता यया च परिविद्यते॥ ४३
व्रतं संवत्सरं कुर्य्याद्दातृयाजकपञ्चमः।
शुनोच्छिष्टं तथा भुक्ता मासमेकं व्रती भवेत्॥ ४४
दूषितं केशकीटैश्च मूषिकानकुलेन च।
मक्षिकामशकेनापि त्रिरात्रन्तु व्रती भवेत्॥ ४५
वृथाकृशरसंयावपायसापूपशष्कुलीः।
भुक्ता त्रिरात्रं कुर्व्वीत व्रतमेतत् समाहितः॥ ४६
नील्या चैव क्षतो विप्रः शुना दष्टस्तथैव च।
त्रिरात्रन्तु व्रतं कुर्य्यात् पंशलीदशनक्षतः॥ ४७

पादप्रतापनं वह्नौ चिप्त्वा वह्नौ तथाप्यधः।
कुशैः प्रमृज्य पादौ च दिनमेकं व्रतं चरेत्॥ ४८
क्षत्रियस्तु रणे हत्वा पृष्ठं प्राणपरायणम्।
संवत्सरव्रतं कुर्य्याच्छित्त्वा पिप्पलपादपम्॥ ४९
दिवा च मैथुनं कृत्वा स्नात्वा दुष्टजले तथा।
नग्नां परस्त्रियं दृष्ट्वा दिनमेकं व्रती भवेत्॥ ५०
चिप्त्वाग्नावशुचि द्रव्यं तद्वदम्भसि मानवः।
मासमेकं व्रतं कुर्य्यादपक्रुश्य तथा गुरुम्॥ ५१
तथा विषौषजं पीत्वा पानीयं ब्राह्मणस्तथा।
त्रिरात्रन्तु व्रतं कुर्य्याद्वामहस्तेन वा पुनः॥ ५२
एकपङ्क्त्युपविष्टेषु विषमं यः प्रयच्छति।
स च तावदसौ पक्षं प्रकुर्य्याद् ब्राह्मणो व्रतम्॥ ५३
धारयित्वा तुलाञ्चैव विषमं वनिजस्तथा।
सुरालवणपात्रेषु भुक्त्वा चोरं व्रतं चरेत्॥ ५४
विक्रीय प्राणिना सर्पिस्तिलानि च तथाचरेत्॥ ५५
हुङ्कारं ब्राह्मणस्योक्त्वा हुङ्कारञ्च गरीयसः।
दिनमेकं व्रतं कुर्य्यात् प्रयतः सुसमाहितः॥ ५६
प्रेतश्च प्रेतकार्य्याणि कृत्वा वै धनहारकः।
वर्णानां यद्व्रतं प्रोक्तं तद्व्रतं प्रयतश्चरेत्॥ ५७
कृत्वा पापं न गूहेत गुह्यमानं हि वर्द्धते।
कृत्वा पापं बुधः कुर्य्यात् पर्षदानुमतं व्रतम्॥ ५८
स्थित्वा च श्वापदाकीर्णे बहुव्याधमृगे वने।
न ब्राह्मणो व्रतं कुर्य्यात् प्राणबाधभयात् सदा॥ ५९

सतो हि जीवतो जीवं सर्व्वपापमपोहति।
अतः कृच्छ्रैस्तथा दानैरित्याह भगवान् यमः॥ ६०
शरीरं धर्म्मसर्व्वस्वं रक्षणीयं प्रयत्नतः।
शरीरात्स्रवते धर्म्मः पर्व्वतात् सलिलं यथा॥ ६१
आलोक्य सर्व्वशास्त्राणि समेत्य ब्राह्मणैः सह।
प्रायश्चित्तं द्विजो दद्यात् स्वेच्छया न कदाचन॥ ६२
इति शङ्खीये धर्म्मशास्त्रे सप्तदशोऽध्यायः॥ १७॥

---

## अष्टादशोऽध्यायः।

त्र्यहं त्रिषवणस्नाने प्रकुर्य्यादघमर्षणम्।
निमज्य नक्तं सरिति न भुञ्जीत दिनत्रयम्॥ १
वीरासनं सदा तिष्ठेद्गाञ्च दद्यात् पयस्विनीम्।
अघमर्षणमित्येतद् कृतं सर्व्वाघनाशनम्॥ २
त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम्।
परं त्र्यहञ्च नाश्नीयात् प्राजापत्यं चरन् व्रतम्॥ ३
त्र्यहमुष्णं पिवेदापस्त्र्यहमुष्णं घृतं पिवेत्।
त्र्यहमुष्णं पयः पीत्वा वायुभक्षो दिनत्रयम्॥ ४
तप्तकृच्छ्रं विजानीयादेतदुक्तं सदा व्रतम्।
द्वादशेनोपवासेन पराकः परिकीर्त्तितः॥ ५
बिधिनोदकसिद्धानि समश्नीयात् प्रयत्नतः।
शक्तून् हि सोदकान् मासं कृच्छ्रं वारुणमुच्यते॥ ६
विल्वैरामलकैर्वापि कपित्थैरथवा शुभैः।
मासेन लोकेऽतिकृच्छ्रः कथ्यते द्विजसत्तमैः॥ ७

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्।
एकरात्रोपवासस्तु कृच्छ्रं सान्तपनं स्मृतम्॥ ८
व्रतैस्तु त्र्यहमध्यस्तैर्महासान्तपनं स्मृतम्।
पादद्वयं तथा त्यक्त्वा शक्तूनां परिवासनात्।
उपवासान्तराभ्यासात् तुलापुरुष उच्यते॥ ९
गोपुरीषाशनो भूत्वा मासं नित्यं समाहितः।
व्रतन्तु वार्षिकं कुर्य्यात् सर्व्वपापापनुत्तये॥ १०
ग्रासं चन्द्रकलावृद्ध्या प्राश्नीयाद्वर्द्धयन् सदा।
ह्रासयंस्तु कलाहानौ व्रतं चान्द्रायणं स्मृतम्॥ ११
मन्त्रं विद्वान् जपेद्धत्वा जुहुयाच्चैव शक्तितः।
अयं विधिस्तु विज्ञेयः सुधीभिर्विमलात्मभिः।
पापात्मनस्तु पापिभ्यो नात्र कार्य्या विचारणा॥ १२
शङ्खप्रोक्तमिदं शास्त्रं योऽधीते प्रयतः सुधीः।
सर्वपापविनिर्म्मुक्तः स्वर्गलोके महीयते॥ १३
इति शङ्खीये धर्म्मशास्त्रेऽष्टादशोऽध्यायः॥ १८

---

# गौतमसंहिता ।

## प्रथमोऽध्यायः ।

वेदो धर्म्ममूलं तद्विदाञ्च स्मृतिशीले, दृष्टो धर्म्मव्यतिक्रमः साहसञ्च महतां, न तु दृष्टोऽर्थो वरदौर्ब्बल्यात, तुल्यबलविरोधे विकल्पः। उपनयनं ब्राह्मणस्याष्टमे नवमे, पञ्चमे वा काम्यं, गर्भादिः सङ्ख्या वर्णाणां, तद्द्वितीयं जन्म। तद्यस्मात् स आचार्य्यो वेदानुवचनाच्च। एकादश द्वादशयोः क्षत्रिय-वैश्ययोः। आषोड़शाद्‌ब्राह्मणस्यापतिता सावित्री, द्वाविंशते राजन्यस्य, द्व्यधिकाया वैश्यस्य। मौञ्जीज्यामौर्व्वीसौत्री मेखलाः, क्रमेण कृष्णरुरुवस्ताजिनानि वासांसि, शाणक्षौम-चीरकुतपाः, सर्व्वेषां कार्पासञ्चाविकृतम्। काषायमप्येके। वार्क्षं ब्राह्मणस्य, माञ्जिष्ठहारिद्रे इतरयोः। वैल्वपालशौ ब्राह्मणस्य दण्डावश्वत्थपैलवौ शेषे, यज्ञिया वा सर्व्वेषामपीरिता यूपचक्राः सवल्कला (सशल्कला) मूर्द्धललाटनासाग्रप्रमाणाः। मुण्डजटिलशिखाजटाश्च। द्रव्यहस्त उच्छिष्टोऽनिधायाचामेद्-द्रव्यशुद्धिः, परिमार्ज्जनप्रदाहतक्षणनिर्णेजनानि तैजसमार्त्तिक-दारवतान्तवानां, तैजसवदुपलमणिशंखशुक्तीनां, दारुवदास्थि-भूम्यारावपनञ्च, भूमिश्चेलवद्रज्जुविदलचर्म्मणामुत्सर्गो वात्यन्तो-पहतानाम्। प्राङ्मुख उदङ्मुखो वा शौचमारभेत्। शुचौ देशे आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्या मणिबन्धनात् पाणी प्रक्षाल्य वाग्यतः हृदयस्पृशस्त्रिश्चतुर्व्वापि

आचामेद्भिः प्रमृज्यात् पादौ, चाभ्युक्षेत् खानि, चोपस्पृशे-च्छीर्षण्यानि मूर्द्धनि च दद्यात्। सुप्त्वा भुक्त्वा क्षुत्वा च पुनः। दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्षणात्। प्राक्-च्युतेरित्येके। च्युतेष्वास्रावविद्यान्निगिरन्नेव तच्छुचिः। न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति ताश्चेदङ्गे निपतन्ति। लेपगन्धापकर्षणे शौच-ममेध्यस्य। तदद्भिः पूर्वं मृदा च मूत्रपुरीषरेतोविस्रंसनाभ्य-वहारसंयोगेषु च यत्र चाम्नायो विदध्यात्। पाणिना सव्यमुप-संगृह्याङ्गुष्ठमधीहि भो इत्यामन्त्रयेत गुरुः। तत्र चक्षुर्मनः-प्राणोपस्पर्शनं दर्भैः; प्राणायामास्त्रयः पञ्चदशमात्राः। प्राक्कूले-ष्वासनञ्च ओँपूर्वा व्याहृतयः पञ्चसत्यान्ताः। गुरोः पादोपसंग्रहणं प्रातर्ब्रह्मानुवचने चाद्यन्तयोरनुज्ञात उपविशेत्। प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा सावित्रीञ्चनुवचनमादितो ब्रह्मण आदाने ओँकारस्याऽन्यत्रापि। अन्तरागमने पुनरुपसदनं श्वनकुलसर्पमण्डूकमार्ज्जाराणां त्र्यहमुपवासो विप्रवासश्च; प्राणायाम् घृतप्राशनञ्चेतरेषाम्। श्मशानाध्ययने चैवं चैवम्।

इति गौतमीये धर्म्मशास्त्रे प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः।

प्रागुपनयनात् कामचारवादभक्षोऽहुतोऽब्रह्मचारी यथोप-पादमूत्रपुरीषो भवति; नास्याचमनकल्पो विद्यतेऽन्यत्रापो-मार्ज्जनप्रधावनावोक्षणेभ्यो। न तदुपस्पर्शनाशौचं न त्वेवैनमग्नि-हवनबलिहरणयोर्नियुञ्ज्यान्न ब्रह्माभिव्याहारयेदन्यत्र स्वधानि-नयनात्। उपनयनादिर्नियमः। उक्तं ब्रह्मचर्य्यमग्नीन्धन-

भैक्षचरणे सत्यवचनमपामुपस्पर्शनम्। एके गोदानादि। बहि
सन्ध्यायाँस्तिष्ठेत् पूर्व्वामासीतोत्तरां सज्योतिष्या ज्योतिषो
दर्शनाद्वाग्यतः। नादित्यमीक्षेत, वर्ज्जयेन्मधुमांसगन्धमाल्य
दिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोध-लोभमोहवाद्य
वादनस्नानदन्तधावनहर्षनृत्यगीतपरिवादभयानि गुरुदर्शने
कर्णप्रावृतावसक्थिकायाश्रयणपादप्रसारणानि निष्ठीवितहसि
तविजृम्भितास्फोटनानि स्त्रीप्रेक्षणालम्भने मैथुनशङ्कायां द्यूतं
हीनवर्णसेवामदत्तादानं हिंसाम् आचार्य्यतत्पुत्रस्त्रीदीक्षित
नामानि शुक्लां वाच मद्यं नित्यं ब्राह्मणः। अधःशय्याशायी
पूर्व्वोत्थायी जघन्यसंवेशी वाग्बाहूदरसंयतः। नामगोत्रे गुरोः
समानतो निर्द्दिशेत्। अर्च्चिते श्रेयसि चैवम्। शय्यासन-
स्थानानि विहाय प्रतिश्रवणमभिक्रमणं वचनाद्दृष्टेनाधःस्थाना-
सनस्तिर्य्यग्वा तत्सेवायाम्। गुरुदर्शने चोत्तिष्ठेत, गच्छन्त
मनुव्रजेत्, कर्म्म विज्ञाप्याख्यायाहूताध्यायी युक्तः प्रियहितयो-
स्तद्भार्य्यापुत्रेषु चैवम्। नोच्छिष्टाशनस्नपनप्रसाधनपादप्रक्षाल-
नोन्मर्द्दनोपसंग्रहणानि। विप्रोष्योपसंग्रहणं गुरुभार्य्याणां तत्
पुत्रस्य च। नैके युवतीनाम्। व्यवहारप्राप्तेन सार्व्ववर्णिकं
भैक्षचरणमभिशस्तपतितवर्ज्जम्। आदिमध्यान्तेषु भवच्छब्दः
प्रयोज्यो वर्णानुपूर्व्येण। आचार्य्यज्ञातिगुरुस्वेष्वलाभेऽन्यत्र
तेषां पूर्व्वं परिहरन् निवेद्य गुरवेऽनुज्ञातो भुञ्जीत। असन्निधौ
तद्भार्य्यापुत्रसब्रह्मचारिसद्भ्यः। वाग्यतस्तृप्यन्नलोलुप्यमान
सन्निधायोदकं स्पृशेत्। शिष्यशिष्टिरवधेनाशक्तौ रज्जुवेणुविद
लाभ्यां तनुभ्यामन्येन घ्नन् राज्ञा शास्यः। द्वादशवर्षाण्येकैक
वेदे ब्रह्मचर्य्यं चरेत् प्रतिद्वादशवर्षेषु ग्रहणान्तं वा। विद्यान्ते

गुरुरर्थे निमन्त्रः ततः कृतानुज्ञानस्य स्नानम्। आचार्य्यः श्रेष्ठो गुरूणां मातेत्येके मातेत्येके।

इति गौतमीये धर्म्मशास्त्रे द्वितीयोऽध्यायः॥ २॥

---

## तृतीयोऽध्यायः।

तस्याश्रमविकल्पमेके ब्रुवते ब्रह्मचारी गृहस्थो भिक्षुर्व्वैखानस इति तेषां गृहस्था योनिरप्रजनत्वादितरेषाम्। तत्रोक्तं ब्रह्मचारिण आचार्य्याधीनत्वमान्तं गुरोः कर्म्मशेषेण जपेत्। गुर्व्वभावे तदपत्यवृत्तिस्तदवृत्ते सब्रह्मचारिण्यग्नौ वा। एवंवृत्तो ब्रह्मलोकमवाप्नोति जितेन्द्रियः। उत्तरेषाञ्चैतदविरोधी। अनिचयो भिक्षुरूर्द्ध्वरेता ध्रुवशीलो वर्षासु भिक्षार्थी ग्राममियात्। जघन्यमनिवृत्तं चरेत्। निवृत्ताशीर्व्वाक्चक्षुःकर्म्मसंयतः। कौपीनाच्छादनार्थं वासो बिभृयात्। प्रहीणमेके निर्णेजनाविप्रयुक्तम्। ओषधिवनस्पतीनामङ्गमुपाददीत। न द्वितीयामुपहर्त्तुं रात्रिं ग्रामे वसेत्। मुण्डः शिखी वा वर्ज्जयेज्जीववधम्। समो भूतेषु हिंसानुग्रहयोरनारम्भी। वैखानसो वने मूलफलाशी तपःशीलः श्रावणकेनाग्निमाधायाग्राम्यभोजी देवपितृमनुष्यभूतर्षिपूजकः सर्व्वातिथिः प्रतिसिद्धवर्ज्जं भैक्षमप्युपयुञ्जीत, न फालकृष्टमधितिष्ठेद्, ग्रामञ्च न प्रविशेज्जटिलचीराजिनवासा नातिशयं भुञ्जीत। एकाश्रमं त्वाचार्य्याः प्रत्यक्षविधानाद्गार्हस्थस्य गार्हस्थस्य।

इति गौतमीये धर्म्मशास्त्रे तृतीयोऽध्यायः॥ ३॥

# चतुर्थोऽध्यायः ।

गृहस्थः सदृशीं भार्य्यां विन्देतानन्यपूर्वां यवीयसीम । असमानप्रवरैर्विवाह ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्य बीजिनश्च मातृबन्धुभ्यः पञ्चमात् । ब्राह्मो विद्याचारित्रबन्धुशीलसम्पन्नाय दद्यादाच्छाद्यालङ्कृताम् [१] । संयोगमन्त्रः प्रजापत्ये सह धर्म्मं चरतामिति [२] । आर्षे गोमिथुनं कन्यावते दद्यात [३] । अन्तर्वेद्यृत्विजे दानं दैवः [४] । अलङ्कृत्येच्छन्त्या स्वयं संयोगो गान्धर्वः [५] । वित्तेनानतिस्त्रीमतामासुरः [६] । प्रसह्यादाना-द्राक्षसः [७] । असंविज्ञानोपसङ्गमनां पैशाचः [८] । चत्वारो धर्म्मया प्रथमाः षड़ित्येके । अनुलोमानन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्मन्तपारशवाः । प्रतिलोमासु सुतमागधायोगवचत्तृवैदेहकचाण्डालाः । ब्राह्मण्यजीजनत् पुत्राम् वर्णेभ्य आनुपुर्व्याद् ब्राह्मणसुतमागधचण्डालान् तेभ्य एव क्षत्रिया मूर्द्धावसिक्तक्षत्रियधीवरपुक्काशान्, तेभ्य एव वैश्या भृज्यकण्ठकमाहिष्यवैश्यवैदेहान तेभ्य एव पारशवयवनकरण-शूद्रान् शूद्रेत्येके । वर्णान्तरगमनमुत्कर्षाभ्यां सप्तमेन पञ्चमेन चाचार्य्याः । सृष्टान्तरजातानाञ्च प्रतिलोमस्तु धर्म्महीनाः शूद्रायाञ्च असमानायाञ्च शूद्रात् प्रतितद्वृत्तिरन्त्यः पापिष्ठः । पुनन्ति साधवः पुत्रास्त्रिपौरुषानार्षाद्दश, दैवाद्दशैव, प्राजा-पत्याद्दश, पूर्वान दश वरानात्मानञ्च ब्राह्मीपुत्राः ब्राह्मीपुत्राः ।

इति गौतमीये धर्म्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्ज्जम्। देवपितृमनुष्यभूतर्षिपूजको नित्यस्वाध्यायः। पितृभ्यश्चोदकदानं यथोत्साहमन्यद्भार्यादिरग्निर्दायादिर्वा। तस्मिन् गृह्याणि देवपितृमनुष्ययज्ञाः स्वाध्यायश्च। बलिकर्म्माग्नावग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदितिहोमः। दिग्देवताभ्यश्च यथास्वं द्वारेषु मरुद्भ्यो गृहदेवताभ्यो प्रविश्य ब्रह्मणे मध्ये अद्भ्य उदकुम्भे आकाशायेत्यन्तरिक्षे नक्तञ्चरेभ्यश्च सायम्। स्वस्तिवाच्य भिक्षादानमप्पूर्वन्तु ददातिषु चैवं धर्म्मेषु समद्विगुणसाहस्रानन्त्यानि फलान्यब्राह्मणब्राह्मणश्रोत्रियवेदपारगेभ्यः। गुर्वर्थनिवेशौषधार्थवृत्तिक्षीणयक्ष्यमाणाध्ययनाध्वसंयोगवैश्वजितेषु द्रव्यसंविभागो बहिर्वेदि भिक्षमाणेषु कृतान्नमितरेषु। प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यात्। क्रुद्धहृष्टभीतार्त्तलुब्धबालस्थविरमूढमत्तोन्मत्तवाक्यान्यनृतान्यपातकानि। भोजयेत् पूर्वमतिथिकुमारव्याधितगर्भिणीसुवासिनीस्थविरान् जघन्यांश्च। आचार्य्यपितृसखीनान्तु निवेद्य वचनक्रिया ऋत्विगाचार्य्यश्वशुरपितृव्यमातुलानामुपस्थाने मधुपर्कः संवत्सरे पुनः पूजिता यज्ञविवाहयोरर्वाक् राज्ञश्च श्रोत्रियस्य। अश्रोत्रियस्यासनोदके श्रोत्रियस्य तु पाद्यमार्घ्यमन्नविशेषांश्च प्रकारयेन्नित्यं वा संस्कारविशिष्टं मध्यतोऽन्नदानमवैद्यसाधुवृत्ते विपरीते तु तृणोदकभूमिः स्वागतमन्ततः पूज्यानत्याशश्च शय्यासनावसथानुव्रज्योपासनानि सदृक्श्रेयसोः समान्यल्पशोऽपि हीने असमानग्रामीऽतिथिरैकरात्रिकोऽधिवृक्षसूर्य्योपस्थायी कुशलानामयारोग्या-

थामनुप्रश्नोत्यं शूद्रस्याब्राह्मणस्यानतिथिरब्राह्मणो यज्ञे संवृत स्येत् भोजनन्तु क्षत्रियस्योर्द्धं ब्राह्मणेभ्योऽन्यान् भृत्यैः सहानृशंसार्थमानृशंसार्थम्।

इति गौतमीये धर्म्मशास्त्रे पञ्चमोऽध्यायः॥ ५॥

## षष्ठोऽध्यायः।

पादोपसंग्रहणं गुरुसमवायेऽन्वहम्। अभिगम्य तु विप्रोष्य मातृपितृतद्बन्धुनां पूर्वजानां विद्यागुरूणां तत्तद्गुरूणाञ्च सन्निपाते परस्य। नाम प्रोच्याहमयमित्यभिवादोऽज्ञसमवाये स्त्रीपुंयोगेऽभिवादतोऽनियममेके नाविप्रोष्य स्त्रीणाममातृपितृव्यभार्य्याभगिनीनां नोपसंग्रहणं भ्रातृभार्य्याणां श्वश्र्वाश्च ऋत्विक्श्वशुरपितृव्यमातुलानान्तु यवीयसां प्रत्युत्थानमनभिवाद्यास्तथान्यः पूर्वः पौरोऽशीतिकावरः शूद्रोऽप्यपत्यसमेनावरोऽप्यार्य्यः शूद्रेण नाम चास्य वर्ज्जयेद्राज्ञश्चाजपः प्रेष्यो भो भवन्निति वयस्यः समानेऽहनि जातो दशवर्षवृद्धः पौरः पञ्चभिः कलाभरः श्रोत्रियश्चारणस्त्रिभिः राजन्यो वैश्यकर्म्मविद्याहीनं दीक्षितस्य प्राक् क्रयात्। वित्तबन्धुकर्म्मजातिविद्यावयांसि मान्यानि परबलीयांसि श्रुतस्तु सर्व्वेभ्यो गरीयस्तन्मूलत्वाद्धर्म्मस्य श्रुतेश्च। चक्रिदशमीस्थानुग्राह्मवधूस्नातकराजभ्यः पथो दानं राज्ञो तु श्रोत्रियाय श्रोत्रियाय।

इति गौतमीये धर्म्मशास्त्रे षष्ठोऽध्यायः॥ ६॥

यं, सवनसोमन्तोन्नयनजातकर्म्म नामकरणान्नप्राशनचौड़ोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्म्मचारिणीसंयोगः पञ्चानां यज्ञानामानुष्ठानं देव-पितृ मनुष्य भूत ब्रह्मणामितेषाञ्चाष्टका-पार्वणश्राद्धश्रावण्याग्रहायणीचैत्राश्वयुजीति सप्त पाकयज्ञसंस्था अग्न्याधेयमग्निहोत्रदर्शपौर्णमासावाग्रहणं चातुर्म्मास्यनिरूढ़पशु-बन्धसौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोड़शि वाजपेयोऽतिरात्रोऽप्तोर्य्याम इति सप्त सोम-संस्था इत्येते चत्वारिंशत् संस्काराः। अथाष्टावात्मगुणाः दया सर्व्वभूतेषु क्षान्तिरनसूया। शौचमनायासो मङ्गलमकार्पण्यम-स्पृहेति यस्यैते न चत्वारिंशत् संस्कारा न वाष्टावात्मगुणा न स ब्राह्मणः सायुज्यं सालोक्यञ्च गच्छति। यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणा अथ स ब्राह्मणः सायुज्यं सालोक्यञ्च गच्छति गच्छति।

इति गौतमीये धर्म्मशास्त्रे अष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

स विधिपूर्व्वं स्नात्वा भार्य्यामभिगम्य यथोक्तान् गृहस्थ-धर्म्मान् प्रयुञ्जान इमानि व्रतान्यनुकर्षेत्। स्नातको नित्यं शुचिः सुगन्धः स्नानशीलः सति विभवे न जीर्णमलवद्वासाः स्यान्न रक्तमलवदन्यधृतं वा वासो बिभृयान्न स्रगुपानहौ निर्णिक्तम-शक्तौ न रूढ़श्मश्रुरकस्मान्नाग्निमपश्च युगपद्धारयेन्नाञ्जलिना पिबेन्न तिष्ठन्नुद्धृतोदकेनाचामेन्न शूद्राशुच्येकपाण्यावर्ज्जितेन न वाय्वग्निविप्रादित्यापो देवता गाश्च प्रतिपश्यन् वा मूत्रपुरीषा-

मेध्यान्युदक्येनैव देवताः प्रति पादौ प्रसारयेन्न पर्णलोष्टाश्मभि-र्मूत्रपुरीषापाकर्षणं कुर्य्यान्न भस्मकेशतुषकपालान्याधितिष्ठेन्न म्लेच्छाशुच्यधार्म्मिकैः सह सम्भाषेत सम्भाष्य पुण्यकृतो मनसा ध्यायेद्‌ब्राह्मणेन वा सह सम्भाषेतः। अधेनुं धेनुभव्येति ब्रूयादभद्रं भद्रमिति कपालं भगालमिति मणिधनुरितीन्द्र-धनुः। गां धयन्तीं परस्मै नाचक्षीत न चैनां वारयेन्न मिथुनी-भूत्वा शौचं प्रति विलम्बेत न च तस्मिन् शयने स्वाध्यायम-धीयीत नचापररात्रमधीत्य पुनः प्रतिसंविशेन्नाकल्पां नारी-मभिरमयेन्न रजस्वलां न चैनां श्लिष्येन्न कन्यामग्निमुखोपधमन-विगृह्यवाद--बहिर्गन्धमाल्य--धारण पापीयसावलेखनभार्य्यासह-भोजनाञ्जन्त्यवेक्षणकुद्वारप्रवेशनपादधावनासन्दिस्थस्थभोजन-न-दीबाहुतरण वृक्षविषमारोहणावरोहणप्राणव्यवस्थानानि च वर्ज्जयेन्न सन्दिग्धां नावमधिरोहेत्। सर्वत एवात्मानं गोपायेन्न प्रावृत्य शिरोऽहनि पर्य्यटेत् प्रावृत्य तु रात्रौ। मूत्रोच्चारे च न भूमावनन्तर्द्धाय नाराच्चावसथान्न भस्मकरीषकृष्टच्छायापथि-काम्येषु उभे मूत्रपुरीषे दिवा कुर्य्यादुदङ्मुखः सन्ध्ययोश्च रात्रौ तु दक्षिणामुखः पालाशवासनं पादुके दन्तधावनमिति वर्ज्जयेत्। सोपानत्कश्चाशनासनशयनाभिवादननमस्कारान् वर्ज्जयेत्। न पूर्वाह्नमध्यन्दिनापराह्नानफलान् कुर्य्यार्थद्‌यथाशक्ति धर्म्मार्थ-कामेभ्यस्तेषु च धर्म्मोत्तरः स्यान्न नग्नां परयोषितमीक्षेत न पदा-सनमाकर्षेन्न शिश्नोदरपानिपाटवाक्‌चक्षुश्चापलानि कुर्य्याच्छेदन भेदनविलिखनविमर्द्दनावस्फोटनानि नाकस्मात् कुर्य्यान्नापरि वत्मतन्त्रीं गच्छेन कुलस्कुलः स्यान्न यज्ञमवृतो गच्छेद्दर्शनाय तु कामं न भक्ष्यानुत्सङ्गे भक्षयेन्न रात्रौ प्रेष्याहृतमुद्धृतस्नेह-

पनपिण्याकमथितप्रभृतीनि चातुर्वर्ण्याणि नाश्नीयात् । प्रातस्त्वन्नमभिपूजितमनिन्दन् भुञ्जीत न कदाचिद्रात्रौ नग्नः स्नायाद्वा । यच्चात्मवन्तो वृद्धाः सम्यग्विनीता दम्भलोभविमुक्ता वेदविद आचक्षते तत् समाचरेद्योगक्षेमार्थमीशमधिगच्छेन्नान्यमन्यत्र देवगुरुधार्म्मिकेभ्यः प्रभूतैधोदकयवसमाल्यापनिष्क्रमणमार्य्यजनभूयिष्ठमनलसमृद्धं धार्म्मिकाधिष्ठितं निकेतनमावसितुं यतेत । प्रशस्तमङ्गल्यदेवतायतनचतुष्पथान् प्रदक्षिणमावर्त्तेत । मनसा वा तत्समग्रमाचारमनुपालयेदापत्कल्पः । सत्यधर्म्मा आर्य्यवृत्तः शिष्टाध्यापकशौचशिष्टः श्रुतिनिरतः स्यान्नित्यमहिंस्रो मृदुः दृढकारी दमदानशील एवमाचारो मातापितरौ पूर्वापरान् सम्बन्धान् दुरितेभ्यो मोक्षयिष्यन् स्नातकः शश्वद्ब्रह्मलोकान्न च्यवते न च्यवते ।

इति गौतमीये धर्म्मशास्त्रे नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

द्विजातीनामध्ययनमिज्या दानं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमस्त्वाचार्य्यज्ञातिप्रियगुरुधनविद्यानिमयेषु ब्राह्मणः सम्प्रदानमन्यत्र यथोक्तात् कृषिवाणिज्ये स्वयंकृते कुसीदञ्च । राज्ञोऽधिकं रक्षणं सर्वभूतानां न्याय्यदण्डत्वं बिभृयाद् ब्राह्मणान् श्रोत्रियान् निरुत्साहांश्चाब्राह्मणानकरांश्चोपकुर्वाणांश्च योगश्च विजये भये विशेषेण चर्य्या च धनुर्य्यां संग्रामे संस्थानमनिवृत्तिश्च न दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेश-पराङ्मुखोपविष्ट-

स्थल-वृथारूढ़-दूतगोन्ना-ब्राह्मण-वाटिभ्यः क्षत्रियश्चदन्यस्तमुपजीवेत् तद्वृत्तिः स्यात् जेता लभेत सांग्रामिकं वित्तं वाहनन्तु राज्ञ उद्धारश्चापृथग्जयेऽन्यत् तु यथार्हं भाजयेद्राजा राज्ञे बलिदानं कर्षकैर्दशममष्टमं षष्ठं वा पशुहिरण्ययोरप्येके पञ्चाशद्भागात् विंशतिभागः शुल्कः पण्ये मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षष्ठं तद्रक्षणधर्म्मित्वात् तेषु तु नित्ययुक्तः स्यादधिकेन वृत्तिः शिल्पिनो मासि मास्येकैकं कर्म्म कुर्य्युरेतेनात्मोपजीविनो व्याख्याता नौचक्रीवन्तश्च भक्तं तेभ्यो दद्यात् पण्यं वणिग्भिर-र्थापचये न देयं प्रनष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य संवत्सरं राज्ञो रक्ष्यमूर्द्धमधिगन्तुश्चतुर्थं राज्ञः शेषः स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजीतं निर्विष्टं वैश्यशूद्रयोर्निध्यधिगमो राजधनं न ब्राह्मणस्याभिरूपस्याब्राह्मणो व्याख्यातः षष्ठं लभेतेत्येके चौरहृ-तमुपजित्य यथास्थानं गमयेत् कोशाद्वा दद्याद्रक्ष्यं बालधनमा-व्यवहारप्रापणात् समावृत्तेर्वा । वैश्यस्याधिकं कृषिवणिक्पाशु-पाल्यकुसीदम् । शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यम-क्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके श्राद्धकर्म्म भृत्यभरणं स्वदारवृत्तिः परिचर्य्या चोत्तरेषां तेभ्यो वृत्तिं लिप्सेत जीर्णान्युपानच्छत्रवासःकूर्चान्युच्छिष्टाशनं शिल्पवृत्तिश्च यञ्चाया-श्रितो भर्त्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निचयः स्यादनुज्ञातोऽस्य नमस्कारो मन्त्रः पाकयज्ञैः स्वयं यजेतेत्येके । सर्वे चोत्तरोत्तरं परिचरेयुरार्य्यानार्य्ययोर्व्यतिक्षेपे कर्म्मणः साम्यं साम्यम् ।

इति गौतमीये धर्म्मशास्त्रे दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

राजा सर्वस्येष्टे ब्राह्मणवर्ज्जं, साधुकारी स्यात् साधुवादी त्रय्यामान्वीक्षिक्याञ्चाभिविनीतः शुचिर्जितेन्द्रियो गुणवत्सहायोऽपायसम्पन्नः समः प्रजासु स्याद्धितमासां कुर्वीत । तमुपर्य्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यस्तेऽप्येनं मन्येरन् । वर्णानाश्रमांश्च न्यायतोऽभिरक्षेच्चलतश्चैनान् स्वधर्म्मे स्थापयेद्धर्म्मस्य ह्यंशभागभवतीति विज्ञायते । ब्राह्मणञ्च पुरो दधीत विद्याभिजन-वाग्रूपवयःशीलसम्पन्नं न्यायवृत्तं तपस्विनं, तत्प्रसूतः कर्म्माणि कुर्वीत । ब्रह्मप्रसूतं हि क्षत्रमृध्यते न व्यथत इति च विज्ञायते । यानि च दैवोत्पातचिन्तकाः प्रब्रूयुस्तान्याद्रियेत, तदधीनमपि ह्येके योगक्षेमं प्रतिजानते । शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषिणां सम्वननमभिचारद्विषद्व्याधिसंयुक्तानि च शालाग्नौ कुर्य्याद्यथोक्तमृत्विजोऽन्यानि तस्य व्यवहारो वेदो धर्म्मशास्त्राण्यङ्गान्युपवेदाः पुराणं देशजातिकुलधर्म्माश्चाम्नायैरविरुद्धाः प्रमाणं । कृषिवणिक्पाशुपाल्य-कुसीदकारवः स्वे स्वे वर्गे । तेभ्यो यथाधिकारमर्थान् प्रत्यवहृत्य धर्म्मव्यवस्थान्यायाधिगमे तर्कोऽभ्युपायस्तेनाभ्यूह्य यथास्थानं गमयेद्विप्रतिपत्तौ त्रयीविद्यावृद्धेभ्यः प्रत्यवहृत्य निष्ठां गमयेद्यथा ह्यस्य निःश्रेयसं भवति । ब्रह्मक्षत्रेण सम्पृक्तं देवपितृमनुष्यान् धारयतीति विज्ञायते । दण्डो दमनादित्याहुस्तेनादान्तान् दमयेद्वर्णाश्रमाश्च स्वकर्म्मनिष्ठाः प्रेत्य कर्म्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो

जन्म प्रतिपद्यन्ते विद्याश्च। विपरीता नश्यन्ति। तानाचार्य्योप-
देशोदण्डश्च पालयते तस्माद्राजाचार्य्यावनिन्द्यावनिन्द्यौ।

इति गौतमीये धर्म्मशास्त्रे एकादशोऽध्यायः॥ ११

---

## द्वादशोऽध्यायः।

शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्या-
भ्यामङ्गं मोच्यो येनोपहन्यादार्य्यस्त्र्यभिगमने लिङ्गोद्धारः
स्वहरणञ्च गोप्ता चेद्वधोऽधिकोऽयाहास्य। वेदमुपशृण्वतस्त्र-
पुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीर-
भेद आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः शतम्। क्षत्रियो
ब्राह्मणाक्रोशे दण्डपारुष्ये द्विगुणमध्यर्द्धं, वैश्यो ब्राह्मणस्तु
क्षत्रिये पञ्चाशत्तदर्द्धं, वैश्ये न शूद्रे किञ्चित् ब्राह्मणराजन्यवत्
क्षत्रियवैश्यावष्टापाद्यं। स्तेयकिल्बिषं शूद्रस्य द्विगुणोत्तराणी-
तरेषां प्रतिवर्णं विदुषोऽतिक्रमे दण्डभूयस्त्वं। फलहरितधान्य-
शाकादाने पञ्चकृष्णलमल्पे। पशुपीड़िते स्वामिदोष, पालसं-
युक्ते तु तस्मिन्। पथि क्षेत्रेऽनावृते पालक्षेत्रिकयोः। पञ्च माषा
गवि षड़ुष्ट्रखरेऽश्वमहिष्योर्दशाजाविषु द्वौ द्वौ सर्व्वविनाशे शतं,
शिष्टाकरणे प्रतिषिद्धसेवायाञ्च, नित्यं चैलपिण्डादूर्द्धं स्वहरणञ्च।
गोऽग्न्यर्थे तृणमेधान् वीरुद्वनस्पतीनाञ्च पुष्पाणि स्ववदाददीत
फलानि चापरिवृतानाम्। कुसीदवृद्धिर्धर्म्म्या विंशतिः, पञ्च-
माषको मासं नातिसांवत्सरीमेके, चिरस्थाने द्वैगुण्यं प्रयोगस्य।
भुक्ताधिर्न वर्द्धते दित्सतोऽवरुद्धस्य च। चक्रकालवृद्धिः कारिता-
कायिकाशिखाधिभोगाश्च कुसीदं। पशूपजलोमक्षेत्रशतवाह्येषु

नातिपञ्चगुणम। जड़ापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तु-श्श्रोत्रियप्रव्रजितराजन्यधर्म्मपुरुषैः। पशुभूमिस्त्रीणामनतिभोग ऋक्थभाजि ऋणं प्रतिकुर्य्युः, प्रातिभाव्यवणिक्शुल्कमद्ययुत-दण्डान् पुत्रानध्याभवेयुर्निध्यन्वाधियाचितावक्रीताधेया नष्टाः सर्वे न निन्दिता न पुरुषापराधेन। स्तेनः प्रकीर्णकेशो मुषली राजानमियात् कर्म्माचचाणः पूतो वधमोक्षाभ्यामघ्नन्नेनस्वी राजा। न शारीरो ब्राह्मणदण्डः कर्म्मवियोगविख्यापनविवा-सनाङ्ककरणान्यप्रवृत्तौ प्रायश्चित्ती स चौरसमः सचिवो मति-पूर्व्वं प्रतिगृहीताप्यधर्म्मसंयुक्ते। पुरुषशक्त्यपराधानुबन्धविज्ञा-नाद्दण्डनियोगोऽनुज्ञानं वा वेदवित् समवायवचनाद् वेदवित् समवायवचनात्।

इति गौतमीये धर्म्मशास्त्रे द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः।

विप्रतिपत्तौ साक्षिषि मिथ्यासत्यव्यवस्था बहवः स्युर-निन्दिताः स्वकर्म्मसु प्रात्ययिका राज्ञाञ्च निष्प्रीत्यनभिता-पाश्चान्यतरस्मिन्नपि शूद्रा। ब्राह्मणस्त्वब्राह्मणवचनादनुरोध्यो-ऽनिबन्धश्चेन्नासमवेताः पृष्टाः प्रब्रूयुरवचने च दोषिणः स्युः स्वर्गः सत्यवचने विपर्य्यये नरकः। अनिबन्धैरपि वक्तव्यं पीड़ाकृते निबन्धः प्रमत्तोक्ते च साक्षिसभ्यराजकर्त्तृषु दोषो धर्म्मतन्त्र-पीड़ायां। शपथेनैके सत्यकर्म्मणा तद्देवराजब्राह्मणसंसदि स्याद-ब्राह्मणानां। क्षुद्रपश्वनृते साक्षी दश हन्ति, गोऽश्वपुरुषभूमिषु दशगुणोत्तरान्, सर्वं वा भूमौ हरणे नरको, भूमिवदप्सु, मैथुन-

संयोगे च पशुवन्मधुसर्पिषो, गोवद्वस्त्रहिरण्यधान्यब्रह्मसु, यानेष्वश्ववन्मिथ्यावचने। याप्यो दण्ड्यश्च साक्षी, नानृतवचने दोषो जीवनश्चेत्तदधीनं, न तु पापीयसो जीवनं। राजा प्राड्विवाको ब्राह्मणो वा शास्त्रवित्, प्राड्विवाको मध्यो भवेत्। संवत्सरं प्रतीक्षेत प्रतिभायां धेन्वनडुह्स्त्रीप्रजनसंयुक्तेषु। शीघ्रमात्ययिके च। सर्वधर्मेभ्यो गरीयः प्राड्विवाके सत्यवचनं सत्यवचनम्।

इति गौतमीये धर्मशास्त्रे त्रयोदशोऽध्यायः॥ १०॥

---

## चतुर्दशोऽध्यायः।

शावमाशौचं दशरात्रमृत्विग्दीक्षितब्रह्मचारिणां सपिण्डानामेकादशरात्रं। क्षत्रियस्य द्वादशरात्रं, वैश्यस्यार्द्धमासमेकं मासं शूद्रस्य। तच्चेदन्तःपुनरापतेत् तच्छेषेण शुध्येरम्, रात्रिशेषे द्वाभ्यां, प्रभाते तिसृभिर्गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्च युद्धे प्रायोनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छतां। पिण्डनिवृत्तिः सप्तमे पञ्चमे वा जननेऽप्येवं। मातापित्रोस्तन्मातुर्वा गर्भमाससमा रात्रिः स्रंसने गर्भस्य। त्र्यहंवा श्रुत्वा चोर्द्धं दशम्याः पक्षिण्यसपिण्डयोनिसम्बन्धे सहाध्यायिनि च सब्रह्मचारिण्येकाहं श्रोत्रिये चोपसम्पन्ने प्रेतोपस्पर्शने। दशरात्रमाशौचमभिसन्धाय चेदुक्तं वैश्यशूद्रयोरार्त्तवीर्वापूर्वयोश्च। त्र्यहं वाचार्य्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवमवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत् पूर्वो वावरं तत्र शावोक्तमाशौचं। पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकोपस्पर्शनाच्छुध्येच्छ्वानुगमे च। शुनश्च यदुपहन्यादित्येके उदकदानं सपिण्डैः

कृतचूड़स्य तत्स्त्रीणाञ्चानतिभोग एकेऽप्रदत्तानामधःशय्यासनिनो ब्रह्मचारिणः सर्वे न मार्जयेरन्न मांसं भक्षयेयुराप्रदानात्। प्रथमतृतीयसप्तमनवमेषूदकक्रिया वाससाञ्च त्यागः अन्ते त्वन्त्यानां दन्तजन्मादि मातापितृभ्यां तूष्णीं माता बालदेशान्तरितप्रव्रजितासपिण्डानां सद्यःशौचं। राज्ञाञ्च कार्य्यविरोधाद्ब्राह्मणस्य च स्वाध्यायानिवृत्त्यर्थं स्वाध्यायानिवृत्त्यर्थम्।

इति गौतमीये धर्म्मशास्त्रे चतुर्द्दशोऽध्यायः॥ १४॥

---

## पञ्चदशोऽध्यायः।

अथ श्राद्धममावस्यायां पितृभ्यो दद्यात्। पञ्चमीप्रभृति वापरपक्षस्य यथाश्राद्धं सर्वस्मिन् वा द्रव्यदेशब्राह्मणसन्निधाने वा कालनियमः; शक्तितः प्रकर्षेद्गुणसंस्कारविधिरन्नस्य। नवावरान् भोजयेदयुजो यथोत्साहं वा ब्राह्मणान् श्रोत्रियान् वाग्रूप वयःशीलसम्पन्नान्। युवभ्यो दानं प्रथममेके पितृवच्च च तेन मित्रकर्म्म कुर्य्यात्। पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्य्यौ। तिलमाषव्रीहियवोदकदानैर्मासं पितरः प्रीणन्ति, मत्स्यहरिणरुरुशशकूर्म्मवराहमेषमांसैः संवत्सराणि, गव्यपयःपायसैर्द्वादशवर्षाणि, वार्द्ध्रीणसेन मांसेन कालशाकच्छागलौहखड्गमांसैर्मधुमिश्रैश्चानन्त्यम्। न भोजयेत् स्तेनक्लीवपतितनास्तिकतद्वृत्तिवीरहाग्रेदिधिषुपतिषुपतिस्त्री-ग्रामयाजकाजपालोत्सृष्टाग्निमद्यप कुचरकूटसाक्षिप्रतिहारिकानुपपत्तिर्यस्य च कुण्डाशी सोमविक्रय्य-

असूयकः पिशुनश्चैव कृतघ्नो दीर्घरोषकः।
चत्वारः कर्म्मचाण्डाला जन्मतश्चापि पञ्चमः॥
दीर्घवैरमसूयाञ्च असत्यं ब्रह्मदूषणम्।
पैशुन्यं निर्द्दयत्वञ्च जानीयाच्छूद्रलक्षणम्
किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम्।
पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे।
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः।
जुह्वित्वापि यजित्वापि गतिमूर्द्ध्वां न विन्दति॥
शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः।
स भवेच्छूकरो ग्राम्यस्तस्य वा जायते कुले॥
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।
यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत्॥
स्वाध्यायाढ्यं योनिमित्रं प्रशान्तं
चैतन्यस्थं पापभीरुं बहुज्ञम्।
स्त्रीयुक्तान्तं धार्म्मिकं गोशरण्य
व्रतैः क्षान्तं तादृशं पात्रमाहुः॥
आमपात्रे यथा न्यस्तं क्षीरं दधि घृतं मधु।
विनश्येत् पात्रदौर्बल्यात्तच्च पात्रं रसाश्च ते॥
एवं गाश्च हिरण्यञ्च वस्त्रमश्वं महीं तिलान्।
अविद्वान् प्रतिगृह्णानो भस्मीभवति दारुवत्॥

नाङ्गं नखञ्च वादित्रं कुर्य्यात्। न वापोऽञ्जलिना पिबेत्। न पादेन पाणिना वा राजानमपि हन्यात्, न जलेन जलम्। नेष्टकाभिः फलानि पातयेत्, न फलेन फलम्। न कल्कपुटको भवेत्। न म्लेच्छभाषां शिक्षेत।

अथाप्युदाहरन्ति ।

न पाणिपादचपलो न नेत्रचपलो भवेत् ।
न चाङ्गचपलो विप्र इति शिष्टस्य गोचरः ॥
पारम्पर्य्यागतो येषां वेदः सपरिबृंहणः ।
ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥
यन्न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मण इति ॥

इति वासिष्ठे धर्म्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ।

चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाः । तेषां वेदमधीत्य वेदौ वा वेदान् वा अविशीर्णब्रह्मचर्य्योऽपनिच्छेत्तमावसेत् । ब्रह्मचर्य्याचार्य्यं परिचरेदा शरीर-विमोक्षात् । आचार्य्यं प्रमीतेऽग्निं परिचरेत् विज्ञायते हि चाहवाग्निराचार्य्य इति । संयतवाक् चतुर्थषष्ठाष्टमकालभोजी भैक्षमाचरेत् । गुर्वधीनो जटिलः शिखाजटो वा गुरुं गच्छन्तमनुगच्छेदासीनश्चानुतिष्ठेत् शयानश्चासीन उपवसेदाहूताध्यायी सर्वभैक्षं निवेद्य तदनुज्ञया भुञ्जीत । खट्टाशयनदन्तप्रक्षालनाभ्यञ्जनवर्जी तिष्ठेदहनि रात्रावासीत । त्रिः कृत्वोऽभ्युपेयादपः ।

इति वासिष्ठे धर्म्मशास्त्रे सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः।

गृहस्थो विनीतक्रोधहर्षो गुरुणानुज्ञातः स्नात्वा असमानार्षीमस्पृष्टमैथुनां यवीयसीं सदृशीं भार्य्यां विन्देत्। पञ्चमीं मातृबन्धुभ्यः सप्तमीं पितृबन्धुभ्यः। वैवाह्यमग्निमिन्ध्यात्। सायमागतमतिथिं नावरुन्ध्यात्। नास्यानश्नन् गृहे वसेत्।

यस्य नाश्नाति वासार्थी ब्राह्मणो गृहमागतः।
सुकृतं तस्य यत् किञ्चित् सर्वमादाय गच्छति॥
एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्यं हि स्थितिर्यस्मात् तस्मादतिथिरुच्यते॥
नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा।
काले प्राप्ते अकाले वा नास्यानश्नन् गृहे वसेत्॥

श्रद्धाशीलोऽस्पृहयालुः अलमग्न्याधेयाय नानाहिताग्निः स्यादलञ्च सोमपानाय नासोमयाजी स्यात्। युक्तः स्वाध्याये प्रजनने यज्ञे च गृहेष्वभ्यागतं प्रत्युत्थानासनशयनवाक्सूनृता-भिर्मानयेत्। यथाशक्ति चान्नेन सर्वभूतानि।

गृहस्थ एव यजते गृहस्थस्तप्यते तपः।
चतुर्णामाश्रमाणान्तु गृहस्थस्तु विशिष्यते॥
यथा नदीनदाः सर्वे समुद्रे यान्ति संस्थितिम्।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति भिक्षुकाः॥

नित्योदको नित्ययज्ञोपवीती नित्यस्वाध्यायी पतितान्नवर्जी ।
ऋतौ गच्छन् विधिवच्च जुह्वन्
न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ इति ॥

इति वासिष्ठ धर्म्मशास्त्रेऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ।

वानप्रस्थो जटिलश्चीराजिनवासा ग्रामञ्च न प्रविशेत् । न फालकृष्टमधितिष्ठेत् । अकृष्टं मूलफलं सञ्चिन्वीत । ऊर्द्ध्वरेताः क्षमाशयः । मूलफलभैक्षेणाश्रमागतमतिथिमर्च्चयेत् । दद्यादेव न प्रतिगृह्णीयात् । त्रिषवणमुदकमुपस्पृशेत् । श्रावणकेनाग्निमाधायाहिताग्निः स्याद् वृक्षमूलिकः ऊर्द्ध्वं षड्भ्यो मासेभ्योऽनग्निरनिकेतः । दद्याद्देवपितृमनुष्येभ्यः । स गच्छेत् स्वर्गमानन्त्यम् ।

इति वासिष्ठे धर्म्मशास्त्रे नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

परिव्राजकः सर्वभूताभयदक्षिणां दत्त्वा प्रतिष्ठेत् ।

अथाप्युदाहरन्ति ।

अभयं सर्वभूतेभ्यो दत्त्वा चरति यो द्विजः ।
तस्यापि सर्वभूतेभ्यो न भयं जातु विद्यते ॥
अभयं सर्वभूतेभ्यो दत्त्वा यस्तु विवर्त्तते ।
हन्ति जातानजातांश्च प्रतिगृह्णाति यस्य च ॥

सन्न्यसेत् सर्वकर्माणि वेदमेकं न सन्न्यसेत्।
वेदसंन्यासतः शूद्रस्तस्माद्वेदं न संन्यसेत्॥
एकाक्षरं परं ब्रह्म प्राणायामः परन्तपः।
उपवासात् परं भैक्षं दया दानाद्विशिष्यते॥

मुण्डोऽममत्वपरिग्रहः सप्तागाराण्यसङ्कल्पितानि चरेद्भैक्षं विधूमे सन्नमुषले एकशाटीपरिवृतोऽजिनेन वा गोप्रलूनैस्तृणैर्वेष्टितशरीरः स्थण्डिलशाय्यनित्यांवसतिं वसेत् ग्रामान्ते देवगृहे शून्यागारे वृक्षमूले वा मनसा ज्ञानमधीयानः। अरण्यनित्यो न ग्राम्यपशूनां सन्दर्शने विहरेत्।

अथाप्युदाहरन्ति।

अरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिनिवर्त्तकस्य।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरुपेक्षकस्य॥
अव्यक्तलिङ्गोऽव्यक्ताचारोऽनुन्मत्त उन्मत्तवेशः।

अथाप्युदाहरन्ति।

न शब्दशास्त्राभिरतस्य मोक्षो
न चापि लोके ग्रहणे रतस्य।
न भोजनाच्छादनतत्परस्य
न चापि रम्यावसथप्रियस्य॥

नचोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया।
अनुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत्।
प्राणमात्रिकमात्रः स्यान्मात्रासङ्गाद्विनिर्गतः॥
न कुट्यां नोदके सङ्गे न चैले न त्रिपुष्करे।
नागारे नासने नान्ने यस्य वै मोक्षवित्तमः॥

ब्राह्मणकुले वा यल्लभेन् तद्भुञ्जीत सायं मधुमांससर्पिर्वर्जम्। यतीन् साधून् वा गृहस्थान् सायं प्रातश्च तर्प्येत्। ग्रामे वसेदजिह्मोऽशरणोऽसङ्कसुकः। न चेन्द्रियसंयोगं कुर्वीत केनचित्, उपेक्षकः सर्वभूतानां हिंसानुग्रहपरिहारेण। पैशुन्य-मत्सराभिमानाहङ्काराश्रद्धानार्जवात्मस्तव-परगर्हादम्भ-लोभ-मोहक्रोधासूयाविवर्जनं सर्वाश्रमिणां, धर्मिष्ठो यज्ञोपवीत्युदककमण्डलुहस्तः शुचिर्ब्राह्मणो वृषलान्नपानवर्जी न हीयते ब्रह्मलोकात्॥

इति वासिष्ठे धर्मशास्त्रे दशमोऽध्यायः॥ १०॥

## एकादशोऽध्यायः।

षट्कर्मा गृहदेवताभ्यो बलिं हरेत्। श्रोत्रियायाग्रं दत्त्वा ब्रह्मचारिणे वानन्तरं पितृभ्यो दद्यात्, ततोऽतिथिं भोजयेत् श्रेष्ठासमानुपूर्व्येण स्वगृह्याणां कुमारीबालवृद्धतरुण-प्रभृतींस्ततोऽपरान् गृह्यान्, श्वचाण्डालपतितवायसेभ्यो भूमौ निर्वपेत्। शूद्रेभ्य उच्छिष्टं वा दद्याच्छेषं यती भुञ्जीत, सर्वोपयोगेन पुनःपाको यदि निवृत्ते वैश्वदेवेऽतिथिरागच्छेद्विशेषेणास्मा अन्नं कारयेद्विजायतेऽग्निर्वैश्वानरः प्रविशत्यतिथि-र्ब्राह्मणो गृहम्। तस्मादपयानमन्यत्र वर्षाभ्यस्तां हि शान्ति-जनाविद्विरिति तं भोजयित्वोपासीत सीमान्तादनुव्रजेदनु-ज्ञाताद्वा। परपक्ष ऊर्द्ध्वं चतुर्थ्यां पितृभ्यो दद्यात्, पूर्वेद्यु-र्ब्राह्मणान् सन्निपात्य यतीन् गृहस्थान् साधून् वा परिणत-वयसोऽविकर्मस्थान् श्रोत्रियान् शिष्यानन्तेवासिनः शिष्यानपि गुणवतो भोजयेद्विलक्षयुक्तविग्नधिश्यावदन्तकुष्ठिकुनखिवर्जम्।

अथाप्युदाहरन्ति।

अथ चेन्मन्त्रविद्युक्तः शारीरैः पंक्तिदूषणैः।
अदूष्यन्तं यमः प्राह पंक्तिपावन एव सः॥
श्राद्धे नोद्वासनीयानि उच्छिष्टान्या दिनक्षयात्।
खे पतन्ति हि या धारास्ताः पिबन्त्यकृतोदकाः॥
उच्छिष्टेन प्रपुष्टास्ते यावन्नास्तमितो रविः।
क्षीरधारास्ततो यान्त्यक्षयाः सञ्चरभागिनः॥
प्राक्संस्कारप्रमीतानां प्रवेशनमिति श्रुतिः।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे॥
उच्छेषणं भूमिगतं विकिरेल्लेपसोदकम्।
अनुप्रेतेषु विसृजेदप्रजानामनायुषाम्॥
उभयोः शाखयोर्युक्तं पितृभ्योऽन्नं निवेदितम्।
तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः॥
तस्मादशून्यहस्तेन कुर्य्यादन्नमुपागतम्।
भोजनं वा समालभ्य तिष्ठतोच्छेषणे उभे॥
द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे॥
सत्क्रियां देशकालौ च शौचं ब्राह्मण-सम्पदः।
पञ्चैतान् विस्तरो हन्ति तस्मात् तं परिवर्जयेत्॥
अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम्।
शुभशीलोपसम्पन्नं सर्वालक्षण वर्जितम्॥
यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत्।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु॥

देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तते।
प्राश्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे॥
यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः।
तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः॥
हविर्गुणा न वक्तव्याः पितरो भावतर्पिताः।
पितृभिस्तर्पिते पश्चाद्वक्तव्यं शोभनं हविः॥
नियुक्तस्तु यदा श्राद्धे दैवे तन्तु समुत्सृजेत्।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम्॥
दिवसस्याष्टमे भागे मन्दीभवति भास्करः।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम्॥
श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं योऽधिगच्छति।
भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः॥
यतस्ततो जायते च दत्त्वा भुक्त्वा च पैतृकम्।
न स विद्यामवाप्नोति क्षीणायुश्चैव जायते॥
पिता पितामहश्चैव तथैव प्रपितामह।
उपासते सुतं जातं शकुन्ता इव पिप्पलम्॥
मधुमांसैश्च शाकैश्च पयसा पायसेन वा।
अधनो दास्यति श्राद्धं वर्षासु च मघासु च॥
सन्तानवर्द्धनं पुत्रं तृप्यन्तं पितृकर्मणि।
देवब्राह्मणसम्पन्नमभिनन्दन्ति पूर्वजाः॥
नन्दन्ति पितरस्तस्य सुवृष्टैरिव कर्षकाः।
यद्गयास्थो ददात्यन्नं पितरस्तेन पुत्रिणः॥

श्रावण्याग्रहायण्योश्चान्वष्टकायाञ्च पितृभ्यो दद्याद्द्रव्यदेशब्राह्मणसन्निधाने वा कालनियमोऽवश्यम्। यो ब्राह्मणोऽग्निमादधीत, दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्च यजते। नैयमिकं ह्येतदृणं संस्तुतञ्च विज्ञायते हि त्रिभिरृणैरृणवान् ब्राह्मणो जायते; यज्ञेन देवेभ्यः, प्रजाया पितृभ्यो, ब्रह्मचर्य्येण ऋषिभ्यः इत्येष वा अनृणो यज्वा यः पुत्री ब्रह्मचर्य्यवानिति। गर्भाष्टमेषु ब्राह्मणमुपनयीत, गर्भैकादशेषु राजन्यं, गर्भद्वादशेषु वैश्यन्। पालाशो दण्डो बैल्वो वा ब्राह्मणस्य, नैयग्रोधः क्षत्रियस्य वा, औड़ुम्बरो वा वैश्यस्य। कृष्णाजिनमुत्तरीयं ब्राह्मणस्य, रौरवं क्षत्रियस्य, गव्यं वस्ताजिनं वैश्यस्य। शुक्लमाहतं वासो ब्राह्मणस्य, माञ्जिष्ठं क्षत्रियस्य, हारिद्रं कौशेयं वैश्यस्य, सर्व्वेषां वा तान्तवमरक्तम्। भवत्पूर्व्वां ब्राह्मणो भिक्षां याचेत, भवन्मध्यां राजन्यो, भवदन्त्यां वैश्यश्च। आ षोड़शाद्ब्राह्मणस्यानतीतः कालः, आ द्वाविंशात् क्षत्रियस्य आ चतुर्विंशाद्वैश्यस्यात ऊर्द्ध्वं पतितसावित्रीका भवन्ति। नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्विवाहयेयुः। पतितसावित्रीक उद्दालकव्रतं चरेत्।

द्वौ मासौ यावकेन वर्त्तयेन्मासं माक्षिकेणाष्टरात्रं घृतेन षड़्रात्रमयाचितं त्रिरात्रमब्भक्षोऽहोरात्रमेवोपवसेत्। अश्वमेधावभृथं गच्छेद्व्रात्यस्तोमेन वा यजेत्।

इति वासिष्ठे धर्म्मशास्त्रे एकादशोऽध्यायः ॥ ११ ॥

# द्वादशोऽध्यायः।

अथातः स्नातकव्रतानि। स न कञ्चिद्याचेतान्यत्र राजान्तेवासिभ्यः क्षुधापरीतस्तु किञ्चिदेव याचेत कृतमकृतं वा क्षेत्रं गामजाविकमन्ततं हिरण्यं धान्यमन्नं वा, न तु स्नातकः क्षुधावसीदेदित्युपदेशः। न नद्यायाम् सहसा संविशेत् रजस्वलायामयोग्यायाम्। न कुलं-कुलं स्यादसन्तीं वितनां नातिक्रमेन्नोद्यन्तमादित्यं पश्येन्नादित्यं तपन्तं नास्तं, मूत्रपुरीषे कुर्यान्न निष्ठीवेत्, परिवेष्टितशिरा भूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषे कुर्य्यादुदङ्मुखश्चाहनि नक्तं दक्षिणामुखः सन्ध्यामासीतोत्तरामुदाहरन्ति।

स्नातकानान्तु नित्यं स्यादन्तर्वासस्तथोत्तरम्।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः॥
अप्सु पाणौ च काष्ठे च कथितं पावकं शुचि।
तस्मादुदकपाणिभ्यां परिमृज्यात् कमण्डलुम्॥
पर्य्यग्निकरणं ह्येतन्मनुराह प्रजापतिः।
कृत्वा चावश्यकार्य्याणि आचामेच्छौचवित्तमः॥ इति

प्राङ्मुखोऽन्नानि भुञ्जीत, तूष्णीं साङ्गुष्ठं कृत्स्नग्रासं ग्रसेत, न च मुखशब्दं कुर्य्यादृतुकालाभिगामी स्यात् पर्ववर्जं स्वदारे वा। तीर्थमुपेयात्।

अथाप्युदाहरन्ति।

यस्तु पाणिगृहीताया आस्ये कुर्वीत मैथुनम्।
भवन्ति पितरस्तस्य तन्मासं रेतसो भुजः॥
या स्यादनतिचारेण रतिसाधर्म्यसंश्रिता॥

ऽपिच पावकोऽपि न्नायते। अथ स्त्रो वा विजनियमाणाः पतिभिः सह शयन्त इति स्त्रोणामिन्द्रदत्तो वरः। उद्वनदृश्यमारोहेन्न कूपमवरोहेन्नाग्निं मुखेनोपधमेन्नाग्निं ब्राह्मणश्चान्तरेण व्यपेयान्नान्योर्ब्राह्मणयोरनुज्ञाप्य वा। भार्य्यया सह नाश्नीयादवीर्य्यवदपत्यं भवतीति वाजसनेयके विज्ञायते। नेन्द्रधनुर्नाम्ना निर्द्दिशेन्मणिधनुरिति ब्रूयात्। पालाशमासनं पादुके दन्तधावनमिति वर्जयेत्। नोत्सङ्गे भक्षयेत्क्वी न भुञ्जीत वैणवं दण्डं धारयेद्रुक्मकुण्डले च। न बहिर्माला धारयेदन्यत्र रुक्ममय्याः सभासमवायांश्च वर्जयेत्।

अथाप्युदाहरन्ति।

अप्रामाण्यञ्च वेदानामार्षाणाञ्चैव दर्शनम्।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः॥ इति

नानाहूतो यज्ञं गच्छेत्, यदि व्रजेदध्वनमुर्व्वीमश्वानं न प्रतिपद्येत, नावञ्च सांशयिकीम्। बाहुभ्यां न नदीन्तरेदुत्थाया-पररात्रमधीत्य न पुनः प्रतिसंविशेत्। प्राजापत्ये मुहूर्त्ते ब्राह्मणः स्वनियमाननुतिष्ठेदिति।

इति वासिष्ठे धर्मशास्त्रे द्वादशोऽध्यायः। १२।

---

## त्रयोदशोऽध्यायः।

अथातः स्वाध्यायोपाकर्म श्रावण्यां पौर्णमास्यां प्रौष्ठपद्यां वाग्निमुपसमाधाय कृताधानो जुहोति देवेभ्यश्छन्दोभ्यश्चेति। ब्राह्मणान् स्वस्तिवाच्य दधि प्राश्य तत उपांशु कुर्वीत अर्द्धपञ्चमासानर्द्धषष्ठानत ऊर्द्ध्वं शुक्लपक्षेष्वधीयीत। कामन्तु

वेदाङ्गानि। तस्यानध्यायाः सन्ध्यास्तमिते स्युस्तत्र सर्वे दिवाकीर्त्त्यं नगरेषु कामं गोमयपर्य्युषिते परिलिखिते वा श्मशानान्ते शयानस्य श्राद्धिकस्य।

मानवञ्चात्र श्लोकमुदाहरन्ति।

फलान्यापस्तिलान् भक्ष्यमथान्यच्छ्राद्धिकं भवेत्।
प्रतिगृह्याप्यनध्यायः पाण्यास्या ब्राह्मणाः स्मृता इति॥

धावतः, पूतिगन्धिप्रसृतेरितवृक्षमारूढस्य, नावि, सेनायाञ्च, भुक्त्वा, चार्द्रपाणि, वाणशब्दे, चतुर्द्दश्याममावास्यायामष्टम्याम्-अष्टकासु, प्रसारितपादोपस्थस्योपाश्रितस्य गुरुसमीपे, मिथुनव्यपेतया वाससा, मिथुनव्यपेतेनानिर्मुक्ते। न ग्रामान्ते, च्छर्द्दितस्य, मूत्रितस्योच्चरितस्य यजुषाञ्च, सामशब्दे, वाजीर्णे, निर्वातभूमौ च। न चन्द्र-सूर्य्योपरागेषु, दिङ्नादपर्वतनाद-कम्पप्रपातेषूपलरुधिर-पांशुवर्षेष्वाकालिकम्। उल्काविद्युत्-सज्योतिषमपर्त्वाकालिकं वा। आचार्य्ये च प्रेते त्रिरात्र-माचार्य्य पुत्रशिष्यभार्य्यास्वहोरात्रम्। ऋत्विग्योनिसम्बन्धेषु च। गुरोः पादोपसंग्रहणं कार्य्यं, ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवदेद्, ये चैव पादग्राह्यास्तेषां भार्य्या गुरोश्च मातापितरौ। यो विद्यादभिवन्दितुमहमयम्भो इतिब्रूयाद्, यश्च न विद्यात् प्रत्यभिवादं नाभिवदेत्। पतितः पिता परित्याज्यो, माता तु पुत्रे न पतति।

अथाप्युदाहरन्ति।

उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता।
पितुर्द्दशशतं माता गौरवेणातिरिच्यते॥

भार्य्याः पुत्राश्च शिष्याश्च संसृष्टाः पापकर्मभिः।
परिभाष्य परित्याज्याः पतितो योऽन्यथा भवेत्॥

ऋत्विगाचार्य्यावयाजकानध्यापकौ हेयावन्यत्र हानात पतितौ नान्यत्र पतितौ भवतोत्याहुरन्यत्र स्त्रियाः. सा हि परगामिना, तद्भिन्नामन्तुस्तामुपेयात्।

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिरिष्यते।
गुरुवद्गुरुपुत्रस्य वर्त्तितव्यमिति श्रुतिः।

शाखं वस्त्रं तथान्नानि प्रतिग्राह्याणि ब्राह्मणस्य। विद्या वित्तं वयः सम्बन्धः कर्म्म च मान्यं पूर्वं पूर्वो गरीयान्। स्थविरबालातुरभारिकचक्रवतां पन्थाः समागमे परस्मै देयो, राजस्नातकयो समागमे राज्ञा स्नातकाय देय, सर्वैरेव वा वधूतमाय। तृणभूम्यग्न्युदकवाक्सूनृतानसूयाः सतां गृहे नोच्छिद्यन्ते कदाचनेति॥

इति वासिष्ठे धर्म्मशास्त्रे त्रयोदशोऽध्यायः॥ १३॥

---

## चतुर्द्दशोऽध्यायः।

अथातो भोज्याभोज्यञ्च वर्णयिष्यामः। चिकित्सकमृगयु-पुंश्चलीदण्डिकस्तेनाभिशस्तषण्ढपतितानामभोज्य, कदर्य्यदीक्षित-बद्धातुर-सोमविक्रयि-तक्षक-रजकशौण्डिक-सूचकवार्द्धुषिकचर्म्मावकृन्तानां, शूद्रस्य, चायज्ञस्योपपत्ते, यश्चोपपतिं मन्यते यश्च गृहीतनहेतुर्यश्च वधार्हं नापहन्यात, को वध्यमानो द्वौ अभिक्रुश्येत्, गणान्नं गणिकान्नमथाप्युदाहरन्ति।

नाश्नन्ति श्वपतेर्देवा नाश्नन्ति वृषलीपतेः।
भार्य्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे॥ इति

एवं वन्मकाष्ठतृणकुशलाजाभ्युद्यतपानावसथशफरीप्रियङ्गु-स्रग्जनमधुमांसानि नैतेषां प्रतिगृह्णीयादथाप्युदाहरन्ति।
गुर्व्वर्थंदारमुज्जिहीर्षन्नर्च्चिष्यन् देवतातिथीन्।
सर्व्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः॥ इति

न मृगयोरिषुचारिणः परिवर्जमन्नं विज्ञायते ह्यगस्त्यो वर्षसाहस्रिके सत्रे मृगयां चकार, तस्यासंस्तु रसमयाः पुरोडाशा मृगपक्षिणां प्रशस्तानामपि ह्यन्नम्। प्राजापत्यान् श्लोकानुदाहरन्ति।

उद्यतामाहृतां भिक्षां पुरस्तादप्रचोदिताम्।
भोज्यां प्रजापतिर्मेने अपि दुष्कृतकारिणः॥
श्रद्दधानेन भोक्तव्यं चौरस्यापि विशेषतः।
न त्वेव बहुधा तस्य या वानपहृता भवेत्॥
न तस्य पितरोऽश्नन्ति दश वर्षाणि पञ्च च।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते॥
चिकित्सकस्य मृगयोः शल्यहस्तस्य पाशिनः।
षण्ढस्य कुलटायाश्च उद्यतापि न गृह्यते॥ इति

उच्छिष्टमगुरोरभोज्यं, स्वमुच्छिष्टमुच्छिष्टोपहतञ्च। यदन्नं केशकीटोपहतञ्च, कामन्तु केशकीटानुद्धृत्याद्भिः प्रोक्ष्य भस्मनावकीर्य्य वाचा च प्रशस्तमुपयुञ्जीतापि ह्यन्नम्।

प्राजापत्यान् श्लोकानुदाहरन्ति।
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥

देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विसर्जयेत् ॥
तस्मात् तदन्नमुद्धृत्य शेषं संस्कारमर्हति।
द्रवाणां प्लावनेनैव घनानां चरणेन तु ॥
पाकेन शुष्कसंस्पृष्टं शुचिरेव हि तद्भवेत् ॥

अन्नं पर्य्युषितं भावदुष्टं हृल्लेखं पुनःसिद्धमाममृजीषपक्कञ्च। काममन्तु दध्याद्घृतेन चाभिघारितमुपयुञ्जीतापि ह्यन्नम्।

प्राजापत्यान् श्लोकानुदाहरन्ति।

हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च।
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्बिषम् ॥ इति

लशुनपलाण्डुकेमूकगृञ्जनश्लेष्मातकवृक्षनिर्यासलोहितव्रश्चनाश्वकाकावलीढशूद्रोच्छिष्टभोजनेषु कृच्छ्रातिकृच्छ्रः इतरेष्वन्यत्र मधुमांसफलविकारेष्वग्राम्यपशुविषयः सन्धिनीक्षीरमवत्साक्षीरं गोमहिष्यजानामनिर्दशाहानाममेध्यं नाव्युदकमपूप-धाना करम्भसक्तुवटकतैलपायसशाकानि शुक्तानि वर्जयेदन्यांश्च क्षीरयवपिष्टविकारान्। श्वाविच्छल्लकशशकच्छपगोधाः पञ्चनखा नाभक्ष्याः, अनुष्ट्राः पशूनामन्यतोदतश्च मत्स्यानां वा वेहगवयशिशुमारनक्रकुलीरा विकृतरूपाः सर्पशीर्षाश्च, गौरगवयशरभाश्चानुदिष्टास्तथा धेन्वनडुहौ मेध्यौ वाजसनेयके। खड्गे तु विवदन्त्यग्राम्यशूकरे च, शकुनानाञ्च विघ्नविविष्किरजालपादाः कलविङ्कप्लवहंसचक्रवाकभासमद्गुटिट्टिभमाटवाश्वनक्तञ्चरा दावघाटाचटकरैलातकहारितखञ्जरीटग्रामकुक्कुटशुकसारिकाकोकिलक्रव्यादा ग्रामचारिणश्च।

इति वासिष्ठे धर्मशास्त्रे चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ।

शोणितशुक्रसम्भवः पुरुषो मातापितृनिमित्तकः । तस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्वेषाम् । न स्त्री दद्यात् प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुः । पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतीर्हुत्वा दूरेबान्धवसन्निकृष्टमेव । सन्देहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेत् । विज्ञायते ह्येकेन बहु जायत इति । तस्मिंश्चेत् प्रतिगृहीते औरसः पुत्र उत्पद्यते, चतुर्थभागभागी स्यात् । यदि नाभ्युदयिके युक्तः स्याद्वेदविप्लाविनः सव्येन पादेन प्रवृत्ताग्रान् दर्भान् लोहितान् वोपस्तीर्य्य पूर्णं पात्रमस्मै निनयेन्निनेतारश्चास्य प्रकीर्य्य केशान् ज्ञातयोऽन्वारभेरन्नपसव्यं कृत्वा गृहेषु स्वैरमापाद्येरन्नत ऊर्द्धं तेन सह धर्म्ममीयुस्तद्धर्म्मापन्नाः । पतितानान्तु चरितव्रतानां प्रत्युद्धारः ।

अथाप्युदाहरन्ति ।

अग्न्यभ्युद्धरतां गच्छेत् क्रीड़न्ति च हसन्ति च । यश्चोत् पातयतां गच्छेच्छोचन्नित्याचार्य्य-मातृपितृहन्तारस्तत्प्रमादाद्बाह्या एषां प्रत्यापत्तिः पूर्णाद्ध्रदात् प्रवृत्ताद्वा काञ्चनं पात्रं माहेयं वा पुरयित्वापो हिरण्यैरिव षड़ङ्गभिः सर्वत्र व्यतिक्रिकस्य प्रत्युद्धारपुत्रजन्मना व्याख्यातः ।

इति वासिष्ठे धर्म्मशास्त्रे पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोड़शोऽध्यायः।

अथ व्यवहाराः। राजमन्त्री सदाकार्य्याणि कुर्य्यात् द्वयो-र्विवदमानयोरेक पक्षान्तरं न गच्छेत्। यथामनमपराधी श्रान्ते नापराधः। समः सर्वेषु भूतेषु यथामनमपराधी श्राद्धवर्ण-श्रोत्रियविधानतः सम्यक्तामाचरेत्। राजा बालानामप्राप्तव्यव-हाराणां प्राप्तकाले तु तद्वत्।

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्।

धनस्वीकरणं पूर्वं धनी धनमवाप्नुयात्॥ इति

मार्गक्षेत्रयोर्विसर्गे तथा परिवर्त्तनेन ऋणग्रहेष्वर्थान्तरेषु त्रिपादमात्रम्। गृहक्षेत्रविरोधे सामन्तविरोधेऽपि लेख्य-प्रत्ययः, प्रत्यभिलेख्यविरोधे ग्रामनगरवृद्धश्रेणिप्रत्ययः।

अथाप्युदाहरन्ति।

य एकं श्रौतम धेयमन्वाधेयं प्रतिग्रहम्।

यज्ञादुपगमोवोगैस्तथा धूमशिखा ह्यमी। इति

तत्र भुक्ते दशवर्षमेवोदाहरन्ति।

आधिः सीमाधिकञ्चैव निक्षेपोपनिधिः स्त्रियः।

राजस्वं श्रोत्रियद्रव्यं न राजा दातुमर्हतीति॥

तच्च सम्भोगे न ग्रहीतव्यम्। स्त्रहिणां द्रव्याणि राज-गामीनि भवन्ति, तथा राजा मन्त्रिभिः सह नागरैश्च कार्य्याणि कुर्य्यादसौ वा राजा श्रेयान् वसुपरिवारः स्यादश्रेष्ठं परिवारं वा राजा श्रेयानश्रेष्ठपरिवारः स्यान्न श्रेष्ठो श्रेष्ठपरिवारः स्यान्न, परिवारादोषाः प्रादुर्भवन्ति स्तेयहारविनाशनं, तस्मात् पूर्वमेव परिवारं पृच्छेत्।

अथ साक्षिणः।

आत्रियो रूपवान् शीलवान् पुण्यवान् सत्यवान् साक्षिणः सर्वे एव वा, स्त्रीणान्तु साक्षिणः स्त्रियः कुर्य्यात, द्विजानां सदृशाः द्विजाः, शूद्राणां सन्तः शूद्राश्च, अन्त्यानामन्त्याः।

अथाप्युदाहरन्ति।

प्रातिभाव्यं हृथादानमाक्षिकं सौरिकञ्च यत्।
दण्डशुल्कावशिष्टञ्च न पुत्रो दातुमर्हतीति॥
ब्रूहि साक्षिन् यथातत्त्वं लम्बन्ते पितरस्तव।
तव वाक्यमुदीर्य्यन्तमुत्पतन्ति पतन्ति च॥
नग्नो मुण्डः कपाली च भिक्षार्थं क्षुत्पिपासितः।
अन्धः शत्रुकुले गच्छेद्यस्तु साक्ष्यनृतं वदेत्॥
पञ्च कन्यानृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥
उद्वाहकाले रतिसम्प्रयोगे प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थे अनृतं वदेयुः पञ्चानृतान्याहुरपातकानि॥
स्वजनस्य अर्थे यदिवार्थहेतोः
पक्षाश्रयेणैव वदन्ति कार्य्यम्।
वैशब्दवादं स्वकुलानपूर्वान्
स्वर्गस्थितांस्तानपि पातयन्ति॥

इति वासिष्ठे धर्म्मशास्त्रे षोड़शोऽध्यायः॥ १६॥

---

## सप्तदशोऽध्यायः।

ऋणमस्मिन् सन्नयति अमृतत्वञ्च गच्छति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥

अनन्ताः पुत्रिणां लोका, नापुत्रस्य लोकोऽस्तीति श्रूयते, प्रजाः सन्त्वपुत्रिण इत्यपि शापः। प्रजाभिरग्नेऽमृतत्व-मश्यामित्यपि नियमो भवति।

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपमिति ?

क्षेत्रिणः पुत्रो जनयितुः पुत्र इति विवदन्ते।
तत्रोभयथाप्युदाहरन्ति।

यद्यन्यो गोषु वृषभो वत्सानां जनयते सुतान्।
गोमिनामेव ते वत्सा मोघं स्कन्दनमोक्षणमिति॥

अप्रमत्ता रक्षन्तु वैनं मा च क्षेत्रे परे बोजानि वाप्सीः जनयितुः पुत्रो भवति। सम्परायो मोघं रेतोऽकुरुत तन्तु-मेतमिति।

बह्वनामेकजातानामेकश्चेत् पुत्रवान् नरः।
सर्वे ते तेन पुत्रेण पुत्रवन्त इति श्रुतिः॥

बह्वीनां द्वादश ह्येव पुत्राः पुराणदृष्टाः स्वयमुत्पादितः स्वक्षेत्रे संस्कृतायां प्रथमः, तदलाभे नियुक्तायां क्षेत्रजोः द्वितीयः, तृतीयः पुत्रिका विज्ञायते, अभ्रातृका पुंसः पितॄनभ्येति प्रतिचीनं गच्छति पुत्रत्वम्। श्लोकः।

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति॥

पौनर्भवश्चतुर्थः पुनर्भूः कौमारं भर्त्तारमुत्सृज्यान्यैः सह चरित्वा तस्यैव कुटुम्बमाश्रयति सा पुनर्भूर्भवति या च क्लीव पतितमुन्मत्तं वा भर्त्तारमुत्सृज्यान्यं पतिं विन्दते मृते

वा सा पुनर्भूर्भवति। कानीनः पञ्चमो, या पितृगृहेऽसंस्कृता कामादुत्पादयेन्मातामहस्य पुत्रो भवतीत्याहुः।

अथाप्युदाहरन्ति।

अप्रत्ता दुहिता यस्य पुत्रं विन्दति तुल्यतः।
पुत्रो मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति॥

गूढ़े च गूढ़ोत्पन्नः षष्ठ इत्येते दायादा बान्धवास्त्रातारो महतो भयादित्याहुः। अथादायादास्तत्र सहोढ़ एव प्रथमो या गर्भिणी संस्क्रियते तस्यां जातः सहोढ़ः पुत्रो भवति। दत्तको द्वितीयो यं मातापितरौ दद्याताम्। क्रीतस्तृतीयस्तच्छुनःशेफेन व्याख्यातं हरिश्चन्द्रो ह वै राजा सोऽजीगर्त्तस्य सौयवसेः पुत्रं विक्राय्य स्वयं क्रीतवान्। स्वयमुपागतश्चतुर्थस्तच्छुनःशेफेन व्याख्यातं शुनःशेफो ह वै यूपे नियुक्तो देवतास्तुष्टाव तस्येह देवताः पाशं विमुमुचुस्तमृत्विज ऊचुर्ममैवायं पुत्रोऽस्त्विति तानाह न सम्पेदे ते सम्पादयामासुरेष एव यं कामयेत तस्य पुत्रोऽस्त्विति तस्येह विश्वामित्रो होतासीत् तस्य पुत्रत्वमियाय। अपविद्धः पञ्चमो यं मातापितृभ्यामपास्तं प्रतिगृह्णीयात्। शूद्रापुत्र एव षष्ठो भवतीत्याहुरित्येतेऽदायादा बान्धवाः।

अथाप्युदाहरन्ति।

यस्य पूर्वेषां वर्णानां न कश्चिद्दायादः स्यादेते तस्यापहरन्ति। अथ भ्रातॄणां दायविभागो द्व्यंशं जेष्ठो हरेद्गवाश्वस्य चानुसहृशमजावयो गृहञ्च कनिष्ठस्य काष्ठं गां यवसं गृहोपकरणानि च मध्यमस्य मातुः पारिणेयं स्त्रियो विभजेरन्। यदि ब्राह्मणस्य ब्राह्मणीक्षत्रियावैश्यासु पुत्राः स्युस्त्र्यंशं ब्राह्मण्याः पुत्रो

हरेद् द्व्यंशं राजन्यायाः पुत्रः समम् इतरे विभजेरन्नन्येन चैषां स्वयमुत्पादितः स्यात् द्व्यंशमेव हरेदन्येषान्त्वाश्रमान्तरगताः क्लीवोन्मत्तपतिताश्च भरणम्। क्लीवोन्मत्तानां प्रेतपत्नी षण्मासं व्रतचारिण्यक्षारलवणं भुञ्जाना गयीतोर्ध्वं षड्भ्यो मासेभ्यः स्नात्वा श्राद्धञ्च पत्ये दत्त्वा विद्याकर्मगुरुयोनिसम्बन्धान् सन्निपात्य पिता भ्राता वा नियोगं कारयेत् तपसे वोन्मत्ताम-वशां व्याधितां वा नियुञ्ज्यात् ज्यायसीमपि षोड़शवर्षां नचेदामयाविनी स्यात् प्राजापत्ये मुहूर्त्ते पाणिग्रहणवदु-पचारोऽन्यत्र संस्थाप्य वाक्पारुष्याद्दण्डपारुष्याच्च ग्रासाच्छाद-नस्नानलेपनेषु प्राग्गामिनी स्यादनियुक्तायामुत्पन्न उत्पाद-यितुः पुत्रो भवतीत्याहुः स्याच्चेन्नियोगिनो दृष्टा लोभन्नास्ति नियोगः। प्रायश्चित्तं वाप्युपनियुञ्ज्यादित्येके। कुमार्य्यृतुमती त्रिवर्षाण्युपासीतोर्द्ध्वं त्रिभ्यो वर्षेभ्यः पतिं विन्देत् तुल्यम्।

अथाप्युदाहरन्ति।

पितुः प्रदानात् तु यदा हि पूर्वं
कन्यावयो यः समतीत्य दीयते।
सा हन्ति दातारमपीक्षमाणा
कालातिरिक्ता गुरुदक्षिणेव च॥
प्रयच्छेन्नग्निकां कन्यामृतुकालभयात् पिता।
ऋतुमत्यां हि तिष्ठन्त्यां दोषः पितरमृच्छति॥
यावच्च कन्यामृतवः स्पृशन्ति
तुल्यैः सकामामभियाच्यमानाम्।
भ्रूणानि तावन्ति हतानि ताभ्याम्
मातापितृभ्यामिति धर्मवादः॥

अद्भिर्वाचा च दत्तायां म्रियेताथो वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥
यावच्चेदाहृता कन्या मन्त्रैर्यदि नसंस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥
पाणिग्रहे मृते बाला केवलं मन्त्रसंस्कृता ।
सा च त्वक्षतयोनिः स्यात् पुनः संस्कारमर्हतीति ॥

प्रोषितपत्नी पञ्चवर्षा प्रवसेदुपद्यकामा यथा प्रेतस्य एवञ्च वर्त्तितव्यं स्यात्, एवं पञ्च ब्राह्मणी प्रजाता, चत्वारि राजन्या प्रजाता, त्रीणि वैश्या प्रजाता, द्वे शूद्रा प्रजाता, अत ऊर्द्ध्वं समानोदकपिण्डजन्मर्षिगोत्राणां पूर्वः पूर्वो गरीयान् नखलु कुलीने विद्यमाने परगामिनी स्यात्। यस्य पूर्वेषां षण्णां न कश्चिद्दायदः स्यात् सपिण्डाः पुत्रस्थानीया वा तस्य धनं विभेजे-रंस्तेषामलाभे आचार्य्यान्तेवासिनौ हरेयातां, तयोरलाभे राजा हरेत्, न तु ब्राह्मणस्य राजा हरेद् ब्रह्मस्वन्तु विषं घोरम्।

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकमिति ॥
त्रैविद्यसाधुभ्यः संप्रयच्छेदिति।

इति वासिष्ठे धर्मशास्त्रे सप्तदशोऽध्यायः ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

शूद्रेण ब्राह्मण्यामुत्पन्नश्चाण्डालो भवतीत्याहुः, राजन्यायां वैश्यायामन्त्यावसायी। वैश्येन ब्राह्मण्यामुत्पन्नो रामको भवति इत्याहुः, राजन्यायां पुल्कसः, राजन्येन ब्राह्मन्यामुत्पन्न सूतो भवतीत्याहुः ।

अथाप्युदाहरन्ति।

छिन्नोत्पन्नास्तु ये केचित् प्रातिलोम्यगुणाश्रिताः।
गुणाचारपरिभ्रंशात् कर्मभिस्तान् विजानीयुरिति॥

एकान्तरद्व्यन्तरत्र्यन्तरानुजाता ब्राह्मणक्षत्रियवैश्यैरवच्छिन्ना निषादा भवन्ति। शूद्रायां पारशवः पारयन्नेव जीवन्नेव शवो भवतीत्याहुः शव इति श्मशानम्। एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे तु नाध्येतव्यम्।

अथापि यमगीतान् श्लोकानुदाहरन्ति।

श्मशानमेतत् प्रत्यक्षं ये शूद्राः पापचारिणः।
तस्माच्छूद्रसमीपे च नाध्येतव्यं कदाचन॥
न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्॥
यश्चास्योपदिशेद्धर्मं यश्चास्य व्रतमादिशेत्।
सोऽसंवृतं तमो घोरं सह तेन प्रपद्यत इति॥
व्रणद्वारे कृमिर्यस्य सम्भवेत कदाचन।
प्राजापत्येन शुध्येत हिरण्यं गौर्वासो दक्षिणेति॥

नाग्निचित् शूद्रामुपेयात्, कृष्णवर्णा सा सरमा इव, न धर्मायेति।

इति वासिष्ठे धर्मशास्त्रेऽष्टादशोऽध्यायः॥ १८॥

---

## एकोनविंशोऽध्यायः।

धर्मो राज्ञः पालनं भूतानां तस्यानुष्ठानात् सिद्धिः। भयकारणं ह्यपालनं वै एतत् सूत्रमाहुर्विद्वांसस्तस्माद्गार्हस्थ्य-

नैयमिकेषु। पुरोहिते दद्याद विज्ञायते ब्राह्मणः पुरोहितो राष्ट्रं दधातीति। तस्य भयमपालनादसामर्थ्याच्च। देशधर्मजातिधर्मंकुलधर्मान् सर्व्वान् वैताननुप्रविश्य राजा चतुरो वर्णान् स्वधर्मे स्थापयेत् तेष्वधर्मपरेषु दण्डन्तु देशकालधर्माधर्मंवयोविद्यास्थानविशेषैर्दिशेत्। आगमादुष्टाभावात् पुष्पफलोपगान्यदेयानि हिंस्यात्, कर्षणकरणार्थञ्चोपहत्या गार्हस्थ्यं गाश्च मानोन्माने रक्षिते स्यातां, अधिष्ठानान्नो नीहारसार्थानामस्मान्न मूल्यमात्रं नैहारिकं स्यान्महामहस्थः स्यात्, सम्मानयेदवाहवाहनीयद्विगुणकारिणी स्यात् प्रत्येकं प्रयास्यः पुमान्। शतं वा राद्धं वा तद्देतप्यर्थाः स्त्रियः कराष्टौ मानधारमध्यमाः पादः कार्षापणस्य निरक्षोऽन्तरो मानाकरः श्रोत्रियो राजपुमानथ प्रव्रजितवालवृद्धतरुणप्रदाता प्रागामिकाः कुमार्य्यो मृतापत्यश्च वाहुभ्यामुत्तरं शतगुणं दद्यान्नदीकच्चवन शैलोपमाङ्गा निष्कराः स्युस्तदुपजीविनो वा दद्युः प्रतिमासमुद्वाहकरैस्त्वागमयेद्राजनि च प्रेते दद्यात्। प्रासङ्गिकं तेन मातृवृत्तिर्व्याख्याता राजमहिष्याः पितृव्यमातुलांशजा पितृव्यान् राजा विभृयात् तद्बन्धुंश्चान्यांश्च राजपत्नी ग्रासाच्छादनं लभेरन्। अनिच्छन्तो वा प्रव्रजेरन् क्लीवोन्मत्तांश्च वापि। मानवं श्लोकमुदाहरन्ति।

न रिक्तकार्षापणमस्ति शुल्कं
न शिल्पवृत्तौ न शिशौ न धर्म्मे।
न भैक्षवृत्तौध न हृतावशे
न श्रोत्रिये प्रव्रजिते न यज्ञे॥ इति

स्तेनाभिशस्तदुष्टशस्त्रधारिसह्योढव्रणसम्पन्नव्यपदेष्टेष्वे केषां

दण्डोत्सर्गे राजैकरात्रमुपवसेत् त्रिरात्रं पुरोहितः कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं वा।

अथाप्युदाहरन्ति।

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी।
गुरौ शिष्यस्तु याज्यश्च स्तेनो राजनि किल्बिषम॥
राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥
एनो राजानमृच्छत्यप्युत्सृजन्तं सकिल्बिषम्।
तच्चेन्न घातयेद्राजा राजधर्म्मेण दुष्यतीति॥
राज्ञामन्येषु कार्य्येषु सद्यःशौचं विधीयते।
तथा तान्यपि नित्यानि काल एवात्र कारणमिति॥

यमगीतञ्चात्र श्लोकमुदाहरन्ति।

नात्र दोषोऽस्ति राज्ञां वै व्रतिनां न च मन्त्रिणाम्।
ऐन्द्रस्थानमुपासीना ब्रह्मभूता हि ते सदेति॥

इति वासिष्ठे धर्म्मशास्त्रे एकोनविंशोऽध्यायः॥ १९॥

---

## विंशोऽध्यायः।

अनभिसन्धिकृते प्रायश्चित्तमपराधे सविकृतेऽप्येके।

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम्।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यम॥ इति

तत्र च सूर्य्याभ्युदयिकः सन्नहस्तिष्ठेत् सावित्रीञ्च जपेदेवं सूर्य्याभ्यिनिर्मुक्तो रात्रीवासीत। कुनखी श्यावदन्तस्तु कृच्छ्रं द्वादशरात्रं चरित्वा पुनर्निर्विशेत्। अथ दिधिषुपतिः कृच्छ्रं

द्वादशरात्रं चरित्वा निर्विशेत । तान्चैवोपयच्छेद्दिधिषूपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा निर्विशेत् । चरणम इरहस्त वक्ष्यामो ब्रह्मघ्नः कृच्छ्रं द्वादशरात्रं चरित्वा पुनरुपनीतो वेदमाचार्य्यात् । गुरुतल्पगः सवृषणं शिश्नमुत्कृत्याञ्जलावाधाय दक्षिणामुखो गच्छेद् यत्रैव प्रतिहन्यात् तत्र तिष्ठेदा प्रलयान्निष्कालको वा घृताक्तस्तप्तां सूर्मिं परिष्वजेन्मरणान्मुक्तो भवतीति विज्ञायते । आचार्य्यपुत्रशिष्यभार्य्यासु चैवं योनिषु च गुर्वीं सखीं गुरुसखीञ्च गत्वा कृच्छ्राब्दं चरेत् । एतदेव चाण्डालपतितान्नभोजनेषु ततः पुनरुपनयनं वपनादीनान्तु निवृत्तिः ।

मानवञ्चात्र श्लोकानुदाहरन्ति ।

वपनं मेखला दण्डो भैक्षचर्य्या व्रतानि च ।
निवर्त्तन्ते द्विजातीनां पुनसंस्कारकर्मणीति ॥

मद्यपाने क्लीवव्यवहारेषु चैवम् । मद्यभाण्डे स्थिता आपो यदि कश्चिद् द्विजोऽर्थवित् । पद्मोडुम्वरविल्वपलाशानामुदकं पीत्वा त्रिरात्रेणैव शुध्यति । अभ्यासे सुराया अग्निवर्णां तां द्विजः पिवेत् । भ्रूणहनञ्च वक्ष्यामो ब्राह्मणं हत्वा भ्रूणहा भवत्यविज्ञातञ्च गर्भम । अविज्ञाता हि गर्भाः पुमांसो भवन्ति तस्मात् पुंस्कृत्य जुहुयात् लोमानि मृत्योर्जुहोमि लोमभिर्मृत्युं वासय इति प्रथमां त्वचं मृत्योर्जुहोमि त्वचा मृत्युं वासय इति द्वितीयां लोहितं मृत्योर्जुहोमि लोहितेन वासय इति तृतीयां त्वचं मृत्योर्जुहोमि तावति मृत्युं वासय इति चतेर्थीं मांसानि मृत्योर्जुहोमि मांसैर्मृत्युं वासय इति पञ्चमीं मेदेन मृत्योर्जुहोमि मेदसा मृत्युं वासय इति षष्ठीम् अस्थीनि

मृत्योर्जुहोमि अस्थिभिर्मृत्युं वासय इति नवमी मज्जानं मृत्योर्जुहोमि मज्जभिर्मृत्युं वासय इति अष्टमीं राजार्थे ब्राह्मणार्थे वा संग्रामेऽभिमुखमात्मानं घातयेत् विरच्छिन्नो वापराद्धः पूतो भवतीति विज्ञायते। छिद्रं व्रतः कनीयो भवतीति।

तदप्युदाहरन्ति।

पतितं पतितं त्यक्त्वा चौरं चौरेति वा पुनः।
वचसा तुल्यदोषः स्यान्मिथ्याद्विदोषतां व्रजेदिति॥

एवं राजन्यं हत्वाष्टौ वर्षाणि चरेत् षड्वैश्यं त्रीणि शूद्रं ब्राह्मणोच्चात्रेयीं हत्वा सवनगतौ च राजन्यवैश्यौ चात्रेयीं वक्ष्यामो रजस्वलामृतुस्नातामात्रेय्याहुः। अत्रैतो यामपत्यं भवतीति चात्रेयी। राजन्यहिंसायां वैश्यहिंसायां शूद्रं हत्वा संवत्सरम्। ब्राह्मणसुवर्णहरात् प्रकीर्य्य केशान् राजानमभिधावेत् स्तेनोऽस्मि भोः शास्तु भवानिति तस्मै राजौदुम्बरं शस्त्रं दद्यात् तेनात्मानं प्रमापयेन्मरणात् पूतो भवतीति विज्ञायते। निष्कालको वा घृताक्तो गोमयाग्निना पादप्रभृत्यात्मानमतिदाहयेन्मरणात् पूतो भवतीति विज्ञायते।

अथाप्युदाहरन्ति।

पुराकालात् प्रमीतानामात्मनाकविधिकर्मणाम्।
पुनरापन्नदेहानामङ्गं भवति तच्छृणु॥
स्तेनः कुनखी भवति श्वित्री भवति ब्रह्महा।
सुरापः श्यावदन्तस्तु दुश्चर्मा गुरुतल्पगः॥ इति

पतितैः सम्प्रयोगे च ब्राह्मेण यौनेन वा तेभ्यो सकाशा-

स्त्रा उपलब्धास्तासां परित्यागस्तैश्च न संवसेदुदीचीं दिशं गत्वानश्नन् संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते।

अथाप्युदाहरन्ति।

शरीरपातनाच्चैव तपसाध्ययनेन च। मुच्यते पापकृत् पापाद्दानाच्चापि प्रमुच्यते॥ इति विज्ञायते।

इति वासिष्ठे धर्मशास्त्रे विंशोऽध्यायः॥ २०॥

---

## एकविंशोऽध्यायः।

शूद्रश्चेद् ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते। वैश्यश्चेद् ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरखमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते। राजन्यश्चेद् ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरोवापनं कारयित्वा सर्पिषाभ्यज्य नग्नां रक्तखरमारोप्य महापथमनुव्राजयेत्। एवं वैश्यो राजन्यायां शूद्रश्च राजन्यावैश्ययोर्मनसा भर्त्तुरतिचारे त्रिरात्रं यावकं क्षीरौदनं वा भुञ्जानाधःशयाना त्रिरात्रमप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्जुहुयात् पूता भवतीति विज्ञायते।

इति वासिष्ठे धर्मशास्त्रे एकविंशोऽध्यायः॥ २१॥

वसिष्ठसंहिता समाप्ता।

# व्याससंहिता ।

## प्रथमोऽध्यायः ।

वाराणस्यां सुखासीनं वेदव्यासं तपोनिधिम् ।
पप्रच्छुर्मुनयोऽभ्येत्य धर्म्मान् वर्णव्यवस्थितान् ॥ १
स पृष्टः स्मृतिमान् स्मृत्वा स्मृतिं वेदार्थगर्भिताम् ।
उवाचाथ प्रसन्नात्मा मुनयः श्रूयतामिति ॥ २
यत्र यत्र स्वभावेन कृष्णसारो मृगः सदा ।
चरते तत्र वेदोक्तो धर्म्मो भवितुमर्हति ॥ ३
श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते ।
तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा ॥ ४
ब्राह्मणक्षत्रियविशस्त्रयो वर्णा द्विजातयः ।
श्रुतिस्मृतिपुराणोक्तधर्म्मयोग्यास्तु नेतरे ॥ ५
शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्म्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥ ६
विप्रवद्विप्रविन्नासु क्षत्रविन्नासु विप्रवत् ।
जातकर्म्माणि कुर्व्वीत ततः शूद्रासु शूद्रवत् ॥ ७
वैश्यासु विप्रक्षत्राभ्यां ततः शूद्रासु शूद्रवत् ।
अधमादुत्तमायान्तु जातः शूद्राधमः स्मृतः ॥ ८
ब्राह्मण्यां शूद्रजनितश्चाण्डालो धर्म्मवर्ज्जितः ।
कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः ॥ ९

ब्राह्मण्यां शूद्रजनितश्चाण्डालस्त्रिविधः स्मृतः।
वर्द्धकी नापितो गोप आशापः कुम्भकारकः॥ १०
वणिक्किरातकायस्थमालाकारकुटुम्बिनः।
वरटो मेदचण्डालौदासश्वपचकोलकाः॥ ११
एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः।
एषां सम्भाषणात् स्नानं दर्शनादर्कवीक्षणम्॥ १२
गर्भाधानं पुंसवनं सीमन्तो जातकर्म्म च।
नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया॥ १३
कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः।
केशान्तःस्नानमुद्वाहो विवाहाग्निपरिग्रहः॥ १४
त्रेताग्निसंग्रहश्चेति संस्काराः षोड़श स्मृताः।
नवैताः कर्णवेधान्ता मन्त्रवर्ज्जं क्रियाः स्त्रियाः॥ १५
विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश।
गर्भाधानं प्रथमतस्तृतीये मासि पुंसवः॥ १६
सीमन्तश्चाष्टमे मासि जाते जातक्रिया भवेत्।
एकादशेऽह्नि नामार्कस्येक्षा मासि चतुर्थके॥ १७
षष्ठे मास्यन्नमश्नीयाच्चूड़ाकर्म्म कुलोचितम्।
कृतचूड़े च बाले च कर्णवेधो विधीयते॥ १८
विप्रो गर्भाष्टमे वर्षे क्षत्र एकादशे तथा।
द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हति॥ १९
तस्य प्राप्तव्रतस्यायं कालः स्याद्द्विगुणाधिकः।
वेदव्रतच्युतो व्रात्यः स व्रात्यः स्तोममर्हति॥ २०
द्वे जन्मनी द्विजातीनां मातुः स्यात् प्रथमं तयोः।
द्वितीयं छन्दसां मातुर्ग्रहणाद्विधिवद्गुरोः॥ २१

एवं द्विजातिमापन्नो विमुक्तो वान्यदोषत: ।
श्रुतिस्मृतिपुराणानां भवेदध्ययनक्षम: ॥ २२
उपनीतो गुरुकुले वसेन्नित्यं समाहित: ।
बिभृयाद्दण्डकौपीनोपवीताजिनमेखला: ॥ २३
पुण्येऽह्नि गुर्व्वनुज्ञात: कृतमन्त्राहुतिक्रिय: ।
स्मृत्वोङ्कारञ्च गायत्रीमारभेद्वेदमादित: ॥ २४
शौचाचारविचारार्थं धर्म्मशास्त्रमपि द्विज: ।
पठेत गुरुत: सम्यक् कर्म्म तद्दिष्टमाचरेत् ॥ २५
ततोऽभिवाद्य स्थविरान् गुरुञ्चैव समाश्रयेत् ।
स्वाध्यायार्थं तदा यत्नं सर्व्वदा हितमाचरेत् ॥ २६
नापक्षिप्तोऽपि भाषेत न व्रजेत ताड़ितोऽपि वा ।
विद्वेषमथ पैशुन्यं हिंसनञ्चार्कवीक्षणम् ॥ २७
नोर्ध्वत्रिकावृतोन्मादपरिवादानलङ्क्रियाम् ।
अञ्जनोद्वर्त्तनादर्शस्रग्विलेपनयोषित: ॥ १८
वृथाटनमसन्तोषं ब्रह्मचारी विवर्ज्जयेत् ।
ईषच्चलितमध्याह्नेऽनुज्ञातो गुरुणा स्वयम् ॥ २८
अलोलुपश्चरेद्भैक्ष्यं व्रतिपूतमवृत्तिषु ।
सद्योभिक्षान्नमादाय वित्तवत्तदुपस्पृशेत् ॥ ३०
कृतमाध्याह्निकोऽश्नीयादनुज्ञातो यथाविधि ।
नाद्यादेकान्नमुच्छिष्टं भुक्त्वा चाचामितामियात् ॥ ३१
नान्यद्भक्षितमादद्यादापन्नो द्रविणादिकम् ।
अनिन्द्यामन्त्रित: श्राद्धे पैत्रेऽद्यादगुरुचोदित: ॥ ३२
एकान्नमप्यविरोधि व्रतानां प्रथमाश्रमी ।
भुक्त्वा गुरुमुपासीत कृत्वा सन्धुक्षणादिकम् ॥ ३३

समिधोऽग्नावादधीत ततः पर्य्येदिग्गुरुम्।
ध्यायीत गुर्व्वनुज्ञातः प्रह्वश्च प्रथमं गुरोः॥ ३४
एवमन्वहमभ्यासी ब्रह्मचारी व्रतं चरेत्।
हितोपवादः प्रियवाक् सम्यग्गुर्व्वर्थसाधकः॥ ३५
नित्यमाराधयेदेनमा समाप्तेः श्रुतिग्रहात्।
अनेन विधिनाधीतवेदमन्त्रो द्विजो नयेत्॥ ३६
शापानुग्रहसामर्थ्यमृषीणाञ्च सलोकताम्।
पयोऽमृताभ्यां मधुभिः साज्यैः प्रीणन्ति देवताः॥ ३७
तस्मादहरहर्व्वेदमनध्यायमृते पठेत।
यदङ्गं तदनध्याये गुरोर्व्वचनमाचरन्॥ ३८
अतिक्रमादसम्पूर्णमनहङ्कृतिराचरेत्।
परवेह च तद्ब्रह्म अनधीतमपि द्विजम्।
यस्तूपनयनादेतदा मृत्योर्व्रतमाचरेत॥ ३९
स नैष्ठिको ब्रह्मचारी ब्रह्मसायुज्यमाप्नुयात्।
उपकुर्व्वाणको यस्तु द्विजः षड्विंशवार्षिकः॥ ४०
केशान्तकर्म्मणा तत्र यथोक्तचरितव्रतः।
समाप्यवेदान् वेदौ वा वेदं वा प्रसभं द्विजः।
स्नायीत गुर्व्वनुज्ञातः प्रवृत्तोदितदक्षिणः॥ ४१
इति श्रीवेदव्यासीये धर्म्मशास्त्रे प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः।

एवं स्नातकतां प्राप्तो द्वितीयाश्रमकाङ्क्षया।
प्रतीक्षेत विवाहार्थमनिन्द्यान्वयसम्भवाम्॥ १

अरोगादुष्टवंशोत्थामशुल्कादानदूषिताम्।
सवर्णामसमानार्षाममातृपितृगोत्रजाम्॥ २
अनन्यपूर्विकां लघ्वीं शुभलक्षणसंयुताम्।
धृताधोवसनां गौरीं विख्यातदशपूरुषाम्॥ ३
ख्यातनाम्नः पुत्रवतः सदाचारवतः सतः।
दातुमिच्छोर्दुहितरं प्राप्य धर्म्मेण चोद्वहेत्॥ ४
ब्रह्मोद्वाहविधानेन तदभावे परो विधिः।
दातव्यैषा सदृक्षाय वयोविद्यान्वयादिभिः॥ ५
पितृवत् पितृभ्रातृषु पितृव्यज्ञातिमातृषु।
पूर्व्वाभावे परो दद्यात् सर्व्वाभावे स्वयं व्रजेत्॥ ६
यदि सा दातृवैकल्याद्रजः पश्येत् कुमारिका।
भ्रूणहत्याश्च यावत्यः पतितः स्यात् तदप्रदः॥ ७
तुभ्यं दास्याम्यहमिति ग्रहीष्यामीति यस्तयोः।
कृत्वा समयमन्योन्यं भजते न स दण्डभाक्॥ ८
त्यजन्नदुष्टां दण्ड्यः स्याद्दूषयंश्चाप्यदूषिताम्॥ ९
ऊढ़ायां हि सवर्णायामन्यां वा काममुद्वहेत्।
तस्यामुत्पादितः पुत्रो न सवर्णात् प्रहीयते॥ १०
उद्वहेत् क्षत्रियां विप्रो वैश्याञ्च क्षत्रियो विशाम्।
स तु शूद्रां द्विजः कश्चिन्नाधमः पूर्व्ववर्णजाम्॥ ११
नानावर्णासु भार्य्यासु सवर्णा सहचारिणी।
धर्म्म्या धर्म्मेषु धर्म्मिष्ठा ज्येष्ठा तस्य स्वजातिषु॥ १२
पाटितोऽयं द्विजाः पूर्व्वमेकदेहः स्वयम्भुवा।
पतयोऽर्द्धेन चार्द्धेन पत्न्योऽभूवन्निति श्रुतिः॥ १३

यावन्न विन्दते जायां तावदर्द्धो भवेत् पुमान्।
नार्द्धं प्रजायते सर्व्वं प्रजायतेत्यपि श्रुतिः॥ १४
गुर्व्वीता भूस्त्रिवर्गस्य वोढ़ुं नान्येन शक्यते।
यतस्ततोऽन्वहं भूत्वा स्ववशो विभृयाच्च ताम्॥ १५
कृतदारोऽग्निपत्नीभ्यां कृतवेश्मा गृहं वसेत्।
स्वकृत्यं वित्तमासाद्य वैतानाग्निं न हापयेत्॥ १६
स्मार्त्तं वैवाहिके वह्नौ श्रौतं वैतानिकाग्निषु।
कर्म्म कुर्य्यात् प्रतिदिनं विधिवत् प्रीतिपूर्व्वतः॥ १७
सम्यग्धर्म्मार्थकामेषु दम्पतिभ्यामहर्निशम्।
एकचित्ततया भाव्यं समानव्रतवृत्तितः॥ १८
न पृथग्विद्यते स्त्रीणां त्रिवर्गविधिसाधनम्।
भावतो ह्यतिदेशाद्वा इति शास्त्रविधिः परः॥ १९
पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च।
उत्थाप्य शयनाद्यानि कृत्वा वेश्मविशोधनम्॥ २०
मार्ज्जनैर्लेपनैः प्राप्य साग्निशालं स्वमङ्गनम्।
शोधयेदग्निकार्य्याणि स्निग्धान्युष्णेन वारिणा॥ २१
प्रोक्षणैरिति तान्येव यथास्थानं प्रकल्पयेत्।
द्वन्द्वपात्राणि सर्वाणि न कदाचिद्वियोजयेत्॥ २२
शोधयित्वा तु पात्राणि पूरयित्वा तु धारयेत्।
महानसस्य पात्राणि वहिः प्रक्षाल्य सर्व्वथा॥ २३
मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं विन्यसेत्ततः।
स्मृत्वा नियोगपात्राणि रसांश्च द्रविणानि च॥ २४
कृतपूर्वाह्णकार्य्या च स्वगुरूनभिवादयेत्।
ताभ्यां भर्त्तृपितृभ्यां वा भ्रातृमातुलबान्धवैः॥ २५

वस्त्रालङ्काररत्नानि प्रदत्तान्येव धारयेत् ।
मनोवाक्कर्म्मभिः शुद्धा पतिदेशानुवर्त्तिनी ॥ २६
छायेवानुगता स्वच्छा सखीव हितकर्म्मसु ।
दासीवादिष्टकार्य्येषु भार्य्या भर्त्तुः सदा भवेत् ॥२१
ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत् ।
वैश्वदेवकृतैरन्नैर्भोजनीयांश्च भोजयेत् ॥ २८
पतिञ्चैतदनुज्ञातः शिष्टमन्नाद्यमात्मना ।
भुक्ता नयेदहःशेषमायव्ययविचिन्तया ॥ २९
पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च ।
कृतान्नसाधना साध्वी सुभृशं भोजयेत् पतिम् ॥ ३०
नातितृप्त्या स्वयं भुक्ता गृहनीतिं विधाय च ।
आस्तीर्य्य साधु शयनं ततः परिचरेत् पतिम् ॥ ३१
सुप्ते पत्नौ तदभ्यासे स्वपेत्तद्गतमानसा ।
अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया ॥ ३२
नोच्चैर्वदेन्न परुषं न बहून् पत्युरप्रियम् ।
न केनचिन्न विवदेच्च अप्रलापविलापिनी ॥ ३३
न चातिव्ययशीला स्यान्न धर्म्मार्थविरोधिनी ।
प्रमादोन्मादरोषेर्षावञ्चनञ्चाभिमानिताम् ॥ ३४
पैशुन्यहिंसाविद्वेषमहाहङ्कारधूर्त्तताः ।
नास्तिक्यसाहसस्तेयदम्भान् साध्वी विवर्ज्जयेत् ॥ ३५
एवं परिचरन्ती सा पतिं परमदैवतम् ।
यशः शमिह यात्येव परत्र च सलोकताम् ॥ ३६
योषितो नित्यकर्म्मोक्तं नैमित्तिकमथोच्यते ।
रजोदर्शनतो दोषात् सर्व्वमेव परित्यजेत् ॥ ३७

सर्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत् ।
एकाम्बरावृता दीना स्नानालङ्कारवर्ज्जिता ॥ ३८
मौनिन्यधोमुखी चक्षुःपाणिपद्भिरचञ्चला ।
अश्नीयात् केवलं भक्तं नक्तं मृन्मयभाजने ॥ ३९
स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम् ।
स्नायीत च त्रिरात्रान्ते सचैलमुदिते रवौ ॥ ४०
विलोक्य भर्त्तुर्वदनं शुद्धा भवति धर्म्मतः ।
कृतशौचा पुनः कर्म्म पूर्ववच्च समाचरेत् ॥ ४१
रजोदर्शनतो याः स्यू रात्रयः षोड़शर्त्तवः ।
ततः पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति ॥ ४२
चतस्रश्चादिमा रात्रीः पर्ववच्च विवर्ज्जयेत् ।
गच्छेद्युग्मासु रात्रीषु पौष्णपित्र्यर्क्षराक्षसान् ॥ ४३
प्रच्छादितादित्यपथे पुमान् गच्छेत् सुयोषितः ।
क्षौमालङ्कृदवाप्नोति पुत्रं पूजितलक्षणम् ॥ ४४
ऋतुकालेऽभिगम्यैवं ब्रह्मचर्य्ये व्यवस्थितः ।
गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यकृत् ॥ ४५
भ्रूणहत्यामवाप्नोति ऋतौ भार्य्यापराङ्मुखः ।
सा त्ववाप्याऽन्यतो गर्भं त्याज्या भवति पापिनी ॥ ४६
महापातकदुष्टा च पतिगर्भविनाशिनी ।
सद्वृत्तचारिणीं पत्नीं त्यक्त्वा पतति धर्म्मतः ॥ ४७
महापातक दुष्टोऽपि नाप्रतीक्ष्यस्तया पतिः ।
अशुद्धे क्षयमादूरं स्थितायामनु चिन्तया ॥ ४८
व्यभिचारेण दुष्टानां पतीनां दर्शनादृते ।
धिक्कृतायामवाच्यायामन्यत्र वासयेत् पतिः ॥ ४९

दुष्टां त्वामार्त्तवस्नातां पूर्ववद्व्यवहारयेत्।
मूतांश्च धर्मकामघ्नीमपुत्रां दीर्घरोगिणीम्॥ ५०
सुदुष्टां व्यसनासक्तामहितामधिवासयेत्।
अधिविन्नामपि विभुः स्त्रीणान्तु समतामियात्॥ ५१
विवर्णा दीनवदना देहसंस्कारवर्ज्जिता।
पतिव्रता निराहारा शोच्यते प्रोषिते पतौ॥ ५२
मृतं भर्त्तारमादाय ब्राह्मणी वह्निमाविशेत्।
जीवन्ती चेत्त्यक्तकेशा तपसा शोधयेद्वपुः॥ ५३
सर्वावस्थासु नारीणां न युक्तः स्यादरक्षणम्।
तदेवानुक्रमात् कार्य्यं पितृभर्त्तृसुतादिभिः॥ ५४
जाताः सुरक्षिता या ये पुत्रपौत्रप्रपौत्रकाः।
ये यजन्ति पितॄन् यज्ञैर्मोक्षप्राप्तिमहोदयैः॥ ५५
दाहयेदविलम्बेन भार्य्याश्चात्र व्रजेत सा॥ ५६
इति श्रीवेदव्यासीये धर्म्मशास्त्रे द्वितीयोऽध्यायः॥ २॥

---

## तृतीयोऽध्यायः।

नित्यं नैमित्तिकं काम्यमिति कर्म्म त्रिधा मतम्।
त्रिविधं तच्च वक्ष्यामि गृहस्थस्यावधार्य्यताम्॥ १
यामिन्याः पश्चिमे यामे त्यक्तनिद्रो हरिं स्मरेत्।
आलोक्य मङ्गलद्रव्यं कर्म्मावश्यकमाचरेत्॥ २
कृतशौचो निषेव्याग्निं दन्तान् प्रक्षाल्य वारिणा।
स्नात्वोपास्य द्विजः सन्ध्यां देवादींश्चैव तर्पयेत्॥ ३

वेदवेदाङ्गशास्त्राणि इतिहासानि चाभ्यसेत् ।
अध्यापयेच्च सच्छिष्यान् सद्विप्रांश्च द्विजोत्तमः ॥ ४
अलब्धं प्रापयेल्लब्धां क्षणमात्रे समापयेत् ।
समर्थो हि समर्थेन नाविज्ञातः क्वचिद्वसेत् ॥ ५
सरित्सरसि वापीषु गर्त्तप्रस्रवणादिषु ।
स्नायीत यावदुद्धृत्य पञ्च पिण्डानि वारिणा ॥ ६
तीर्थाभावेऽप्यशक्त्या वा स्नायात् तोयैः समाहृतैः ।
गृहाङ्गणगतस्तत्र यावदम्बरपीड़नम् ॥ ७
स्नानमब्दैवतैः कुर्य्यात् पावनैश्चापि मार्ज्जनम् ।
मन्त्रैः प्राणांस्त्रिरायम्य सौरैश्चार्कं विलोकयेत् ॥ ८
तिष्ठन् स्थित्वा तु गायत्रीं ततः स्वाध्यायमारभेत् ।
ऋचाञ्च यजुषां साम्नामथर्वाङ्गिरसामपि ॥ ९
इतिहासपुराणानां वेदोपनिषदां द्विजः ।
शक्त्या सम्यक् पठेन्नित्यमल्पमप्या समापनात् ॥ १०
स यज्ञदानतपसामखिलं फलमाप्नुयात् ।
तस्मादहरहर्वेदं द्विजोऽधीयीत वाग्यतः ॥ ११
धर्मशास्त्रेतिहासादि सर्वेषां शक्तितः पठेत् ।
कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः ॥ १२
जान्वा च दक्षिणं दर्भैः प्रागग्रैः सयवैस्तिलैः ।
एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतकः ॥ १३
समजानुद्वयो ब्रह्मसूत्रहार उदङ्मुखः ।
तिर्य्यग्दर्भेश्च वामाग्रैर्यवैस्तिलविमिश्रितैः ॥ १४
अम्भोभिरुत्तरक्षिप्तैः कनिष्ठामूलनिर्गतैः ।

दक्षिणाभिमुखः सव्यं जान्वा च द्विगुणैः कुशैः ।
तिलैर्जलैश्च दक्षिण्या मूलदर्भाद्विनिःसृतैः ॥ १६
दक्षिणांशोपवीतः स्यात् क्रमेणाञ्जलिभिस्त्रिभिः ।
सन्तर्पयेद्दिव्यपितॄंस्तत्परांश्च पितॄन् स्वकान् ॥ १७
मातृमातामहांस्तद्वत्त्रीनेवं हि त्रिभिस्त्रिभिः ।
मातामहाश्च येऽप्यन्ये गोत्रिणो दाहवर्जिताः ॥ १८
तनेकाञ्जलिदानेन तर्पयेच्च पृथक् पृथक् ।
असंस्कृतप्रमीता ये प्रेतसंस्कारवर्जिताः ॥ १९
वस्त्रनिष्पीड़नाम्भोभिस्तेषामाप्यायनं भवेत् ।
अतर्पितेषु पितृषु वस्त्रं निष्पीड़येच्च यः ॥ २०
निराशा पितरस्तस्य भवन्ति सुरमानुषैः ।
पयोदर्भस्वधाकारगोत्रनामतिलैर्भवेत् ॥ २१
सुदत्तं तत् पुनस्तेषामेकेनापि वृथा विना ।
अन्यचित्तेन यद्दत्तं यद्दत्तं विधिवर्जितम् ॥ २२
अनासनस्थितेनापि तज्जलं रुधिरायते ।
एवं सन्तर्पिताः कामैस्तर्पकास्तर्पयन्ति च ॥ २३
ब्रह्मविष्णुशिवादित्यमित्रावरुणनामभिः ।
पूजयेल्लक्षितैर्मन्त्रैर्जलमन्त्रोक्तदेवताः ॥ २४
उपस्थाय रवेः काष्ठां पूजयित्वा च देवताः ।
ब्रह्माग्नीन्द्रौषधीजीवविष्णुनाऽऽदृतांश्वसाम् ॥ २५
अपां यतेति सत्कार्यं नमस्कारैः स्वनामभिः ।
कृत्वा मुखं समालभ्य स्नानमेवं समाचरेत् ॥ २६
ततः प्रविश्य भवनमावसथे हुताशने ।
पाकयज्ञांश्च चतुरो विदध्याद्विधिवद्द्विजः ॥ २७

अनाहिताग्निरादायान्नं घृतप्लुतम् ।
शाकलेन विधानेन जुहुयाल्लौकिकेऽनले ॥ २८
व्यस्ताभिर्व्याहृतीभिश्च समस्ताभिस्ततः परम् ।
षड्भिर्देवकृतस्येति मन्त्रवद्भिर्यथाक्रमम् ॥ २९
प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः ।
ओङ्कारपूर्वः स्वाहान्तस्त्यागः स्विष्टविधानतः ॥ ३०
भुवि दर्भान् समास्तीर्य्य वलिकर्म्म समाचरेत् ।
विश्वेभ्यो देवेभ्य इति सर्व्वेभ्यो भूतेभ्य एव च ॥ ३१
भूतानां पतये चेति नमस्कारेण शास्त्रवित् ।
दद्याद्बलित्रयञ्चाग्रे पितृभ्यश्च स्वधा नमः ॥ ३२
पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत् ।
उद्धृत्य षोड़शग्रासमात्रमन्नं घृतोक्षितम् ॥ ३३
इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत ।
गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः ॥ ३४
षड्भ्योऽन्नमन्वहं दद्यात् पितृयज्ञविधानतः ।
वेदादीनां पठेत किञ्चिदल्पं ब्रह्ममखाप्तये ॥ ३५
ततोऽन्यदन्नमादाय निर्गत्य भवनाद्बहिः ।
काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च ॥ ३६
उपविश्य गृहद्वारि तिष्ठेद्यावन्मुहूर्त्तकम् ।
अप्रभुक्तोऽतिथिं लिप्सुर्भावशुद्धः प्रतीक्षकः ॥ ३७
आगतं दूरतः शान्तं भोक्तुकाममकिञ्चनम् ।
दृष्ट्वा सम्मुखमभ्येत्य सत्कृत्य प्रश्रयार्च्चनैः ॥ ३८
पादधावनसम्मानाभ्यञ्जनादिभिरर्च्चितः ।
त्रिदिवं प्रापयेत् सद्यो यज्ञस्याभ्यधिकोऽतिथिः ॥ ३९

शूद्राणामप्यमीषान्तु भुक्तान्नं नैव दुष्यति।
धर्म्मेणान्योन्यभोज्यान्ना द्विजास्तु विदितान्वयाः॥ ५२
स्ववृत्तोपार्ज्जितं मेध्यमाकरशुद्धमाह्निकम्।
अखलीढमगोघ्रातमस्पृष्टं शूद्रवायसैः॥ ५३
अनुच्छिष्टमसन्दुष्टमपर्य्युषितमेव च।
अम्लानवाह्यमन्नाद्यमाद्यं नित्यं सुसंस्कृतम्॥ ५४
कृशरापूपसंयावपायसं शष्कुलीति च।
नाश्नीयाद्ब्राह्मणो मांसमनियुक्तः कथञ्चन॥ ५५
क्रतौ श्राद्धे नियुक्तो वा अनश्नन् पतति द्विजः।
मृगयोपार्ज्जितं मांसमभ्यर्च्य पितृदेवताः॥ ५६
क्षत्रियो द्वादशोनं तत् क्रीत्वा वैश्योऽपि धर्म्मतः।
द्विजो जग्ध्वा वृथामांसमभ्यर्च्य पितृदेवताः॥ ५७
निरयेष्वक्षयं वासमाप्नोत्याचन्द्रतारकम्।
सर्वान् कामान् समासाद्य फलमश्वमखस्य च॥ ५८
मुनिसाम्यमवाप्नोति गृहस्थोऽपि द्विजोत्तमः।
द्विजभोज्यानि गव्यानि माहिष्याणि पयांसि च॥ ५९
निर्द्दशासन्धिसम्बन्धि वत्सवन्ति पयांसि च।
पलाण्डुश्वेतवृन्ताकरक्तमूलकमेव च॥ ६०
गृञ्जनारुणवृश्चासृग् जतुगर्भफलानि च।
अकालकुसुमादीनि द्विजो जग्ध्वैन्दवं चरेत्॥ ६१
वाग्दूषितमविज्ञातमन्यपीड़ाकार्य्यपि।
दूतेभ्योऽन्नमदत्त्वा च तदन्नं गृहिणो दहेत्॥ ६२
हैमराजतकांस्येषु पात्रेष्वद्यात् सदा गृही।
तदभावे साधुगन्धलोध्रद्रुमलतासु च॥ ६३

पलाशपद्मपत्रेषु गृहस्थो भोक्तुमर्हति।
ब्रह्मचारी यतिश्चैव श्रेयो यन्नोक्तुमर्हति॥ ६४
अभ्युत्थानं नमस्कारैर्भुवि दद्याद्बलित्रयम्।
भूपतये भुवः पतये भूतानां पतये तथा॥ ६५
अपः प्राश्य ततः पश्चात् पञ्चप्राणाहुतिक्रमात्।
स्वाहाकारेण जुहुयाच्छेषमद्याद्यथासुखम्॥ ६६
अनन्यचित्तो भुञ्जीत वाग्यतोऽन्नमकुत्सयन्।
आतृप्तेरन्नमश्नीयादन्नुं पात्रमुत्सृजेत्॥ ६७
उच्छिष्टमन्नमुद्धृत्य ग्रासमेकं भुवि क्षिपेत्।
आचान्तः साधुसङ्गेन सद्विद्यापठनेन च॥ ६८
वृत्तवृद्धकथाभिश्च शेषाहमतिवाहयेत्।
सायं सन्ध्यामुपासीत हुताग्निं भृत्यसंयुतः॥ ६९
आपोशानक्रियापूर्वमश्नीयादन्वहं द्विजः।
सायमप्यतिथिःपूज्यो होमकालागतोऽनिशम्॥ ७०
श्रद्धया शक्तितो नित्यं श्रुतं हन्यादपूजितः।
नातितृप्त उपस्पृश्य प्रक्षाल्य चरणौ शुचिः॥ ७१
अप्रत्यगुत्तरशिराः शयीत शयने शुभे।
शक्तिमानुदिते काले स्नानं सन्ध्यां न हापयेत्॥ ७२
ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेद्धितमात्मनः।
शक्तिमान् मतिमान् नित्यं वृत्तमेतत् समाचरेत्॥ ७३
इति श्रीवेदव्यासीये धर्मशास्त्रे तृतीयोऽध्यायः॥ ३

---

## चतुर्थोऽध्यायः ।

इति व्यासकृतं शास्त्रं धर्मसारं समुच्चयम् ।
आश्रमे यानि पुण्यानि मोक्षधर्माश्रितानि च ॥ १
गृहाश्रमात् परो धर्मो नास्ति नास्ति ... पुनः ।
सर्वतीर्थ फलं तस्य यथोक्तं यस्तु पालयेत् ॥ २
गुरुभक्तो भृत्यपोषी दयावाननसूयकः ।
नित्यजापी च होमी च सत्यवादी जितेन्द्रियः ॥ ३
स्वदारे यस्य सन्तोषः परदारनिवर्त्तनम् ।
अपवादोऽपि नो यस्य तस्य तीर्थफलं गृहे ॥ ४
परदारान् परद्रव्यं हरते यो दिने दिने ।
सर्वतीर्थाभिषेकेण पापं तस्य न नश्यति ॥ ५
गृहेषु सर्वतीर्थेषु सर्वतीर्थफलं ततः ।
अन्नदस्य त्रयो भागाः कर्त्ता भागेन लिप्यते ॥ ६
प्रतिश्रयं पादशौचं ब्राह्मणानाञ्च तर्पणम् ।
न पापं संस्पृशेत्तस्य बलिभिक्षां ददाति यः ॥ ७
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
यो ददाति ब्राह्मणेभ्यो नोपसर्पति तं यमः ॥ ८
विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपात्रेषु पिबन्ति पितरोऽमृतम् ॥ ९
यत् फलं कपिलादाने कार्त्तिक्यां ज्येष्ठपुष्करे ।
तत् फलं ऋषयः श्रेष्ठा विप्राणां पादशौचने ॥ १०
स्वागतेनाग्नयः प्रीता आसनेन शतक्रतुः ।
पितरः पादशौचेन अन्नाद्येन प्रजापतिः ॥ ११

मातापित्रोः परं तीर्थं गङ्गा गावो विशेषतः ।
ब्राह्मणात् परमं तीर्थं न भूतं न भविष्यति ॥ १२
इन्द्रियाणि वशीकृत्य गृह एव वसेन्नरः ।
तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ १३
गङ्गाद्वारञ्च केदारं सन्निहत्य तथैव च ।
एतानि सर्वतीर्थानि कृत्वा पापैः प्रमुच्यते ॥ १४
वर्णानामाश्रमाणाञ्च चातुर्वर्ण्यस्य भो द्विजाः ।
दानधर्मं प्रवक्ष्यामि यथा व्यासेन भाषितम् ॥ १५
यद्ददाति विशिष्टेभ्यो यच्चाश्नाति दिने दिने ।
तच्च वित्तमहं मन्ये शेषं कस्याभिरक्षति ॥ १६
यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीड़न्ति दारैरपि धनैरपि ॥ १७
किं धनेन करिष्यन्ति देहिनोऽपि गतायुषः ।
यद्वर्द्धयितुमिच्छन्तस्तच्छरीरमशाश्वतम् ॥ १८
अशाश्वतानि गात्राणि विभवो नैव शाश्वतः ।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः ॥ १९
यदि नाम न धर्माय न कामाय न कीर्त्तये ।
यत् परित्यज्य गन्तव्यं तद्धनं किं न दीयते ॥ २०
जीवन्ति जीविते यस्य विप्र मित्राणि बान्धवाः ।
जीवितं सफलं तस्य आत्मार्थं को न जीवति ॥ २१
पशवोऽपि हि जीवन्ति केवलात्मोदरम्भराः ।
किं कायेन सुगुप्तेन बलिना चिरजीविना ॥ २२
ग्रासादर्द्धमपि ग्रासमर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः कदा कस्य भविष्यति ॥ २३

अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति॥ २४
प्राणनाशस्तु कर्त्तव्यो यः कृतार्थो न सो मृतः।
अकृतार्थस्तु यो मृत्युं प्राप्तः खरसमो हि सः॥ २५
अनाहूतेषु यद्दत्तं यच्च दत्तमयाचितम्।
भविष्यति युगस्यान्तस्तस्यान्तो न भविष्यति॥ २६
मृतवत्सा यथा गौश्च कृष्णा लोभेन दुह्यते।
परस्परस्य दानानि लोकयात्रा न धर्मतः॥ २७
अदृष्टे चाशुभे दानं भोक्ता चैव न दृश्यते।
पुनरागमनं नास्ति तत्र दानमनन्तकम्॥ २८
मातापितृषु यद्दद्याद्भ्रातृषु श्वशुरेषु च।
जायापत्येषु यद्दद्यात् सोऽनन्तः स्वर्गसंक्रमः॥ २९
पितुः शतगुणं दानं सहस्रं मातुरुच्यते।
भगिन्यां शतसाहस्रं सोदरे दत्तमक्षयम्॥ ३०
अहन्यहनि दातव्यं ब्राह्मणेषु मुनीश्वराः।
आगमिष्यति यत् पात्रं तत् पात्रं तारयिष्यति॥ ३१
किञ्चिद्वेदमयं पात्रं किञ्चित् पात्रं तपोमयम्।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे॥ ३२
यश्च चैव गृहे मूर्खो दूरे चापि गुणान्वितः।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥ ३३
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥ ३४
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्ज्जिते।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते॥ ३५

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
भोजने चैव दाने च हन्यात्त्रिपुरुषं कुलम् ॥ ३६
यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥ ३७
ग्रामस्थानं यथा शून्यं यथा कूपश्च निर्ज्जलः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥ ३८
ब्राह्मणेषु च यद्दत्तं यच्च वैश्वानरे हुतम्।
तद्धनं धनमाख्यातं धनं शेषं निरर्थकम् ॥ ३९
सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।
सहस्रगुणमाचार्य्ये ह्यनन्तं वेदपारगे ॥ ४०
ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्ज्जितः।
जातिमात्रोपजीवी च स भवेद्ब्राह्मणः समः ॥ ४१
गर्भाधानादिभिर्मन्त्रैर्वेदोपनयनेन च।
नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः ॥ ४२
अग्निहोत्री तपस्वी च वेदमध्यापयेच्च यः।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते ॥ ४३
इष्टिभिः पशुबन्धैश्च चातुर्मास्यैस्तथैव च।
अग्निष्टोमादिभिर्यज्ञैर्येन चेष्टं स इष्टवान् ॥ ४४
मीमांसते च यो वेदान् षड्भिरङ्गैः सविस्तरैः।
इतिहासपुराणानि स भवेद्वेदपारगः ॥ ४५
ब्राह्मणा येन जीवन्ति नान्यो वर्णः कथञ्चन।
ईदृक्पथमुपस्थाय कोऽन्यस्तं त्यक्तुमुत्सहेत् ॥ ४६
ब्राह्मणः स भवेच्चैव देवानामपि दैवतम्।
प्रत्यक्षञ्चैव लोकस्य ब्रह्मतेजो हि कारणम् ॥ ४७

ब्राह्मणस्य मुखं चैव निष्ककण्टकम् ।
वापयेत् तत्र बीजानि सा कृषिः सार्वकामिकी ॥ ४८
सुक्षेत्रे वापयेद्बीजं सुपात्रे दापयेद्धनम् ।
सुक्षेत्रे च सुपात्रे च क्षिप्तं नैव विदुष्यति ॥ ४९
विद्याविनयसम्पन्ने ब्राह्मणे गृहमागते ।
क्रीड़न्त्योषधयः सर्वा यास्यामः परमां गतिम् ॥ ५०
नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्ज्जिते ।
दीयमानं रुदत्यन्नं भयाद्वै दुष्कृतं कृतम् ॥ ५१
प्रीतिपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत् ।
न च मूर्खं निराहारं षड्रात्रमुपवासिनम् ॥ ५२
यानि यस्य पवित्राणि कुक्षौ तिष्ठन्ति भो द्विजाः ।
तानि तस्य प्रयोज्यानि न शरीराणि देहिनाम् ॥ ५३
यस्य देहे सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किम्भूतमधिकं ततः ॥ ५४
यद्भुङ्क्ते वेदविद्विप्रः स्वकर्म्मनिरतः शुचिः ।
दातुः फलमसङ्ख्यातं प्रतिजन्म तदक्षयम् ॥ ५५
हस्त्यश्वरथयानानि केचिदिच्छन्ति पण्डिताः ।
अहं नेच्छामि मुनयः कस्यैताः शस्यसम्पदः ॥ ५६
वेदलाङ्गलकृष्टेषु द्विजश्रेष्ठेषु सत्सु च ।
यत् पुरा पातितं बीजं तस्यैताः शस्यसम्पदः ॥ ५७
शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
वक्ता शतसहस्रेषु दाता भवति वा न वा ॥ ५८
न रणे विजयाच्छूरोऽध्ययनान्न च पण्डितः ।

इन्द्रियाणां जये शूरो धर्म्मं चरति पण्डित: ।
हितप्रियोक्तिभिर्वक्ता दाता सम्मानदानत: ॥ ६०

यश्चैकपङ्क्त्यां विषमं ददाति
स्नेहाद्भयाद्वा यदि वार्थहेतो: ।
वेदेषु दृष्टं ऋषिभिश्च गीतं
तद्ब्रह्महत्यां मुनयो वदन्ति ॥ ६१

ऊषरे वापितं बीजं भिन्नभाण्डेषु गोदुहम् ।
हुतं भस्मनि हव्यञ्च मूर्खे दानमशाश्वतम् ॥ ६२
मृतसूतकपुष्टाङ्गो द्विज: शूद्रान्नभोजने ।
अहमेवं न जनामि कां योनिं स गमिष्यति ॥ ६३
शूद्रान्नेनोदरस्थेन यदि कश्चिन्म्रियेत य: ।
स भवेत् शूकरो नूनं तस्य वा जायते कुलम् ॥ ६४
गृध्रो द्वादश जन्मानि सप्त जन्मानि शूकर: ।
श्वानश्च सप्त जन्मानि इत्येवं मनुरब्रवीत् ॥ ६५
अमृतं ब्राह्मणान्नेन दारिद्रं क्षत्रियस्य च ।
वैश्यान्नेन तु शूद्रान्नं शूद्रान्नान्नरकं व्रजेत् ॥ ६६
यश्च भुङ्क्तेऽथ शूद्रान्नं मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृत: श्वा चैव जायते ॥ ६७
यस्य शूद्रा पचेन्नित्यं शूद्रा वा गृहमेधिनी ।
वर्ज्जित: पितृदेवैस्तु रौरवं याति स द्विज: ॥ ६८
भाण्डसङ्करसङ्कीर्णा न [illegible] ।
योनि सङ्करसङ्कीर्णा निरयं यान्ति मानवा: ॥ ६०
पङ्क्तिभेदी वृथापाकी नित्यं ब्राह्मणनिन्दक: ।
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातका: ॥ ७०

इदं व्यासमतं नित्यमध्येतव्यं प्रयत्नतः।
एतदुक्ताचारवतः पतनं नैव विद्यते॥ ७१

इति श्रीवेदव्यासीये धर्मशास्त्रे चतुर्थोऽध्यायः॥ ४॥

# पराशरसंहिता।

---

## प्रथमोऽध्यायः।

अथातो हिमशैलाग्रे देवदारुवनालये।
व्यासमेकाग्रमासीनमपृच्छन्नृषयः पुरा॥ १
मानुषाणां हितं धर्म्मं वर्त्तमाने कलौ युगे।
शौचाचारं यथावच्च वद सत्यवतीसुत॥ २
तच्छ्रुत्वा ऋषिवाक्यन्तु सशिष्याग्न्यर्कसन्निभः।
प्रत्युवाच महातेजाः श्रुतिस्मृतिविशारदः॥ ३
न चाहं सर्व्वतत्त्वज्ञः कथं धर्म्मं वदाम्यहम्।
अस्मत्पितैव प्रष्टव्य इति व्यासः सुतोऽवदत्॥ ४
ततस्ते ऋषयः सर्व्वे धर्म्मतत्त्वार्थकाङ्क्षिणः।
ऋषिं व्यासं पुरस्कृत्य गता बदरिकाश्रमम्॥ ५
नानावृक्षसमाकीर्णं फलपुष्पोपशोभितम्।
नदीप्रस्रवणाकीर्णं पुण्यतीर्थैरलङ्कृतम्॥ ६
मृगपक्षिगणाव्यञ्च देवतायतनावृतम्।
यक्षगन्धर्व्वसिद्धैश्च नृत्यगीतसमाकुलम्॥ ७
तस्मिन्नृषिसभामध्ये शक्तिपुत्रं पराशरम्।
सुखासीनं महात्मानं मुनिमुख्यगणावृतम्॥ ८
कृताञ्जलिपुटो भूत्वा व्यासस्तु ऋषिभिः सह।
प्रदक्षिणाभिवादैश्च स्तुतिभिः समपूजयत्॥ ९

अथ सन्तुष्टमनसा पराशरमहामुनिः ।
आह सुस्वागतं ब्रूहीत्यासीनो मुनिपुङ्गवः ॥ १०
व्यासः सुस्वागतं ये च ऋषयश्च समन्ततः ।
कुशलं कुशलेत्युक्त्वा व्यासः पृच्छत्यतः परम् ॥ ११
यदि जानासि मे भक्तिं स्नेहाद्वा भक्तवत्सल ।
धर्मं कथय मे तात अनुग्राह्यो ह्यहं तव ॥ १२
श्रुता मे मानवा धर्म्मा वाशिष्ठाः काश्यपास्तथा ।
गार्ग्या गौतमाश्चैव तथा चौशनसाः स्मृताः ॥ १३
अत्रेर्विष्णोश्च सांवर्त्ता दाक्षा आङ्गिरसास्तथा ।
शातातपाश्च हारीता याज्ञवल्क्यकृताश्च ये ॥ १४
कात्यायनकृताश्चैव प्राचेतसकृताश्च ये ।
आपस्तम्बकृता धर्म्माः शङ्खस्य लिखितस्य च ॥ १५
श्रुता ह्येते भवत्प्रोक्ता श्रौतार्था स्तेन विस्मृताः ।
अस्मिन् मन्वन्तरे धर्म्माः कृतत्रेतादिके युगे ॥ १६
सर्वे धर्म्माः कृते जाताः सर्वे नष्टाः कलौ युगे ।
चातुर्वर्ण्यसमाचारं किञ्चित् साधारणं वद ॥ १७
व्यासवाक्यावसाने तु मुनिमुख्यः पराशरः ।
धर्मस्य निर्णयं प्राह सूक्ष्मं स्थूलञ्च विस्तरात् ॥ १८
शृणु पुत्र प्रवक्ष्येऽहं शृण्वन्तु ऋषयस्तथा ।
कल्पे कल्पे क्षयोत्पत्तौ ब्रह्मविष्णुमहेश्वराः ॥ १९
श्रुतिः स्मृतिः सदाचारा निर्णेतव्याश्च सर्वदा ।
न कश्चिद्वेदकर्त्ता च वेदस्मर्त्ता चतुर्म्मुखः ।
तथैव धर्म्मं स्मरति मनुः कल्पान्तरान्तरे ॥ २०

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे।
अन्ये कलियुगे नृणां युगरूपानुसारतः॥ २१
तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते।
द्वापरे यज्ञमित्यचुर्दानमेकं कलौ युगे॥ २२
कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः।
द्वापरे शङ्खलिखितौ कलौ पाराशरः स्मृतः॥ २३
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत्।
द्वापरे कुलमेकन्तु कर्त्तारञ्च कलौ युगे॥ २४
कृते सम्भाषणात् पापं त्रेतायाञ्चैव दर्शनात्।
द्वापरे चान्नमादाय कलौ पतति कर्मणा॥ २५
कृते तु तत्क्षणाच्छापस्त्रेतायां दशभिर्दिनैः।
द्वापरे मासमात्रेण कलौ संवत्सरेण तु॥ २६
अभिगम्य कृते दानं त्रेतास्वाहूय दीयते।
द्वापरे याचमानाय सेवया दीयते कलौ॥ २७
अभिगम्योत्तमं दानमाहूतञ्चैव मध्यमम्।
अधमं याचमानं स्यात् सेवादानञ्च निष्फलम्॥ २८
कृते चास्थिगताः प्राणास्त्रेतायां मांससंस्थिताः।
द्वापरे रुधिरं यावत् कलावन्नादिषु स्थिताः॥ २९
धर्मो जितो ह्यधर्मेण जितः सत्योऽनृतेन च।
जिता भृत्यैस्तु राजानः स्त्रीभिश्च पुरुषा जिताः॥ ३०
सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति।
कुमार्यश्च प्रसूयन्ते तस्मिन् कलि युगे सदा॥ ३१
युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः।

युगे युगे च सामर्थ्यं शेषं मुनिविभाषितम्।
पराशरेण चाप्युक्तं प्रायश्चित्तं प्रवीयते ॥ ३३
अहमद्यैव तद्धर्ममन्यूस्मृत्य ब्रवीमि वः।
चातुर्वर्ण्यसमाचारं शृणुध्वं मुनिपुङ्गवाः ॥ ३४
पराशरमतं पुण्यं पवित्रं पापनाशनम्।
चिन्तितं ब्राह्मणार्थाय धर्मसंस्थापनाय च ॥ ३५
चतुर्णामपि व[redacted]रो धर्मपालकः।
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥ ३६
षट्कर्माभिरतो नित्यं देवतातिथिपूजकः।
हुतशेषन्तु भुञ्जानो ब्राह्मणो नावसीदति ॥ ३७
सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम्।
वैश्वदेवातिथेयञ्च षट्कर्माणि दिने दिने ॥ ३८
प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा।
वैश्वदेवे तु सम्प्राप्तः सोऽतिथिः स्वर्गसंक्रमः ॥ ३९
दूराध्वानं पथिश्रान्तं वैश्वदेवे उपस्थितम्।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥ ४०
न पृच्छेद्गोत्रचरणं न स्वाध्यायव्रतानि च।
हृदयं कल्पयेत् तस्मिन् सर्वदेवमयो हि सः ॥ ४१
नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा।
अनित्यं ह्यागतो यस्मात् तस्मादतिथिरुच्यते ॥ ४२
अपूर्वः सुव्रती विप्रो अपूर्वो वातिथिस्तथा।
वेदाभ्यासरतो नित्यं त्रयोऽपूर्वा दिने दिने ॥ ४३
वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥ ४४

यती च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा च भुक्त्वा चान्द्रायणं चरेत् ॥ ४५
यतिहस्ते जलं दद्याद्भैक्षं दद्यात् पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥ ४६
वैश्वदेवकृतान् दोषाञ्छक्तो भिक्षुर्व्यपोहितुम ।
न हि भिक्षुकृतान् दोषान् वैश्वदेवो व्यपोहति ॥ ४७
अकृत्वा वैश्वदेवन्तु भुञ्जते ये द्विजातयः ।
सर्वे ते निष्फला ज्ञेयाः पतन्ति नरकेऽशुचौ ॥ ४८
शिरोवेष्टन्तु यो भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः ।
वामपादे करं न्यस्य तद्वै रक्षांसि भुञ्जते ॥ ४९
यतये काञ्चनं दत्त्वा ताम्बूलं ब्रह्मचारिणे ।
चौरेभ्योऽप्यभयं दत्त्वा दातापि नरकं व्रजेत् ॥ ५०
पापो वा यदि चाण्डालो विप्रघ्नः पितृघातकः ।
वैश्वदेवे तु सम्प्राप्तः सोऽतिथिः स्वर्गसंक्रमः । ५१
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
पितरस्तस्य नाश्नन्ति दशवर्षशतानि च ॥ ५२
न प्रसज्यातिगो विप्रो ह्यतिथिं वेदपारगम् ।
अददन्नमात्रन्तु भुक्त्वा भुङ्क्ते तु किल्बिषम् ॥ ५३
ब्राह्मणस्य मुखं क्षेत्रं निरुदकमकण्टकम् ।
वापयेत् सर्वबीजानि सा कृषिः सर्वकामिका ॥ ५४
सुक्षेत्रे वापयेद्बीजं सुपुत्रे दापयेद्धनम् ।
सुक्षेत्रे च सुपुत्रे च यत्क्षिप्तं नैव नश्यति ॥ ५५
अव्रता ह्यनधीयाना यत्र भैक्षचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥ ५६

क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रचण्डवत् ।
विजित्य परसैन्यानि क्षितिं धर्म्मेण पालयेत् ॥ ५७
न श्रीः कुलक्रमायाता स्वरूपाल्लिखितापि या ।
खड्गेनाक्रम्य भुञ्जीत वीरभोग्या वसुन्धरा ॥ ५८
पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवोद्याने न तथाङ्गारकारकः ॥ ५९
लोहकर्म्म तथा रत्नं गवाञ्च प्रतिपालनम् ।
वाणिज्यं कृषिकर्म्माणि वैश्यवृत्तिरुदाहृता ॥ ६०
शूद्राणां द्विजशुश्रूषा परो धर्म्मः प्रकीर्त्तितः ।
अन्यथा कुरुते किञ्चित् तद्भवेत् तस्य निष्फलम् ॥ ६१
लवणं मधु तैलञ्च दधि तक्रं घृतं पयः ।
न दुष्येच्छूद्रजातीनां कुर्य्यात् सर्व्वस्य विक्रयम् ॥ ६२
अविक्रेयं मद्यमांसमभक्ष्यस्य च भक्षणम् ।
अगम्यागमनञ्चैव शूद्रोऽपि नरकं व्रजेत् ॥ ६३
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम् ॥ ६४

इति पाराशरे धर्म्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

अतःपरं गृहस्थस्य धर्म्माचारं कलौ युगे ।
धर्म्मं साधारणं शक्यं चातुर्व्वर्ण्याश्रमागतम् ॥ १
सम्प्रवक्ष्याम्यहं भूयः पाराशर्य्यप्रचोदितः ।
षट्कर्म्मनिरता विप्रः कृषिकर्म्माणि कारयेत् ॥ २

हलमष्टगव्यं धर्म्यं षड्गवं मध्यमं स्मृतम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्॥ ३
क्षुधितं तृषितं श्रान्तं बलीवर्द्दं न योजयेत्।
हीनाङ्गं व्याधितं क्लीबं वृषं विप्रो न वाहयेत्॥ ४
स्थूलाङ्गं नीरुजं दृप्तं वृषभं षण्डवर्ज्जितम्।
वाहयेद्दिवसस्यार्द्धं पश्चात् स्नानं समाचरेत्॥ ५
जप्यं देवार्च्चनं होमं स्वाध्यायञ्चैवमभ्यसेत्।
एकद्वित्रिचतुर्विप्रान् भोजयेत् स्नातकान् द्विजः॥ ६
स्वयंकृष्टे तथा क्षेत्रे धान्यैश्च स्वयमर्ज्जितैः।
निर्वपेत् पञ्चयज्ञानि क्रतुदीक्षाञ्च कारयेत्॥ ७
तिला रसा न विक्रेया विक्रेया धान्यतः समाः।
विप्रस्यैवंविधा वृत्तिस्तृणकाष्ठादिविक्रयः॥ ८
संवत्सरेण यत् पापं मत्स्यघाती समाप्नुयात्।
अयोमुखेन काष्ठेन तदेकाहेन लाङ्गली॥ ९
पाशको मत्स्यघाती च व्याधः शाकुनिकस्तथा।
अदाता कर्षकश्चैव पञ्चैते समभागिनः॥ १०
कण्डनी पेषणी चुल्ली उदकुम्भोऽथ मार्जनी।
पञ्च सूना गृहस्थस्य अहन्यहनि वर्त्तते॥ ११
वृक्षांश्छित्त्वा महीं भित्त्वा हत्वा तु कृमिकीटकान्।
कर्षकः खलु यज्ञेन सर्वपापात् प्रमुच्यते॥ १२
यो न दद्याद्द्विजातिभ्यो राशिमूलमुपागतः।
स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्द्दिशेत्॥ १३
राज्ञे दत्त्वा तु षड्भागं देवानाञ्चैकविंशकम्।
विप्राणां त्रिंशकं भागं कृषिकर्त्ता न लिप्यते॥ १४

क्षत्रियोऽपि कृषिं कृत्वा द्विजान् देवांश्च पूजयेत्।
वैश्यः शूद्रः सदा कुर्य्यात् कृषिवाणिज्यशिल्पकान्॥ १५
विकर्म्म कुर्वते शूद्रा द्विजसेवाविवर्ज्जिताः।
भवन्त्यल्पायुषस्ते वै पतन्ति नरकेषु च।
चतुर्णामपि वर्णानामेष धर्म्मः सनातनः॥ १६

इति पाराशरे धर्म्मशास्त्रे द्वितीयोऽध्यायः॥ २॥

## तृतीयोऽध्यायः।

अतः शुद्धिं प्रवक्ष्यामि जनने मरणे तथा।
दिनत्रयेण शुध्यन्ति ब्राह्मणाः प्रेतसूतके॥ १
क्षत्रियो द्वादशाहेन वैश्यः पञ्चदशाहकैः।
शूद्रः शुध्यति मासेन पराशरवचो यथा॥ २
उपासने तु विप्राणामङ्गशुद्धिस्तु जायते।
ब्राह्मणानां प्रसूतौ तु देहस्पर्शो विधीयते॥ ३
जाते विप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यति॥ ४
एकाहाच्छुध्यते विप्रो योऽग्निवेदसमन्वितः।
त्र्यहात् केवलवेदस्तु द्विहीनो दशभिर्दिनैः॥ ५
जन्मकर्म्मपरिभ्रष्टः सन्ध्योपासनवर्ज्जितः।
नामधारकविप्रस्य दशाहं सूतकं भवेत्॥ ६
एकपिण्डास्तु दायादाः पृथग्दारनिकेतनाः।
जन्मन्यपि विपत्तौ च भवेत् तेषांच सूतकम्॥ ७
उभयत्र दशाहानि कुलस्यान्नं न भुज्यते।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते॥ ८

आप्नोति सूतकं गोत्रे चतुर्थपुरुषेण तु।
दायाद्विच्छेदमाप्नोति पञ्चमो वात्मवंशजः॥ ९
चतुर्थे दशरात्रं स्यात् षण्णिशा पुंसि पञ्चमे।
षष्ठे चतुरहाच्छुद्धिः सप्तमे तु दिनत्रयम्॥ १०
पञ्चभिः पुरुषैर्युक्ता अश्राद्धेयाः सगोत्रिणः।
ततः षट्पुरुषाश्चाद्य श्राद्धे भोज्याः सगोत्रिणः॥ ११
भृग्वग्निमरणे चैव देशान्तरमृते तथा।
बाले प्रेते च सन्न्यासे सद्यःशौचं विधीयते॥ १२
दशरात्रेष्वतीतेषु त्रिरात्राच्छुद्धिरिष्यते।
ततः संवत्सरादूर्द्ध्वं सचेलं स्नानमाचरेत्॥ १३
देशान्तरमृतः कश्चित् सगोत्रः श्रूयते यदि।
न त्रिरात्रमहोरात्रं सद्यः स्नात्वा विशुध्यति॥ १४
आ त्रिपक्षात् त्रिरात्रं स्यादा षण्मासाच्च पक्षिणी।
अहः संवत्सरादर्वाक् सद्यःशौचं विधीयते॥ १५
अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः।
न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया॥ १६
यदि गर्भो विपद्येत स्रवते वापि योषिताम्।
यावन्मासंस्थितो गर्भो दिनं तावत् स सूतकः॥ १७
आ चतुर्थाद्भवेत् स्रावः पातः पञ्चमषष्ठयोः।
अत ऊर्द्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत्॥ १८
प्रसूतिकाले सम्प्राप्ते प्रसवे यदि योषिताम्।
जीवापत्ये तु गोत्रस्य मृते मातुश्च सूतकः॥ १९
रात्रावेव समुत्पन्ने मृते रजसि सूतके।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः॥ २०

दन्तजातेऽनुजाते च कृतचूड़े च संस्थिते।
अग्निसंस्कारणं तेषां त्रिरात्रं सूतकं भवेत्॥ २१
आ दन्तजननात् सद्य आ चूड़ान्नैशिकी स्मृता।
त्रिरात्रमा व्रतात् तेषां दशरात्रमतःपरम्॥ २२
गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत्।
जीवन् जातो यदि प्रेतः सद्य एव विशुध्यति॥ २३
स्त्रीणां चूड़ाव आदानात् संक्रमात् तदधःक्रमात्।
सद्यःशौचमथैकाहं त्रिरहः पितृबन्धुषु॥ २४
ब्रह्मचारी गृहे येषां हूयते च हुताशने।
सम्यक् न च कुर्वन्ति न तेषां सूतकं भवेत॥ २५
सम्पर्काद्दुष्यते विप्रो नान्यो दोषोऽस्ति ब्राह्मणे।
सम्पर्केषु निवृत्तस्य न प्रेतं नैव सूतकम्॥ २६
शिल्पिनः कारुका वैद्या दासीदासाश्च नापिताः।
श्रोत्रियाश्चैव राजानः सद्यःशौचाः प्रकीर्तिताः॥ २७
सव्रती मन्त्रपूतश्च आहिताग्निश्च यो द्विजः।
राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः॥ २८
उद्यतो निधने दाने आर्त्तो विप्रो निमन्त्रितः।
तदेव ऋषिभिर्दृष्टं यथाकालेन शुध्यति॥ २९
प्रसवे गृहमेधी तु न कुर्यात् सङ्करं यदि।
दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः॥ ३०
सर्वेषां शावमाशौचं मातापित्रोस्तु सूतकम्।
सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः॥ ३१
यदि पत्न्यां प्रसूतायां [illegible] द्विजः।
सूतकन्तु भवेत् तस्य यदि विप्रः षडङ्गवित्॥ ३२

सम्यक्काज्जायते दोषो नान्यो दोषोऽस्ति ब्राह्मणे ।
तस्मात् सर्वप्रयत्नेन सम्यकं वर्जयेद्दिजः ॥ ३३
विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥ ३४
अन्तरा तु दशाहस्य पुनर्मरणजन्मनि ।
तावत् स्यादशुचिर्विप्रो यावत् तत् स्यादनिर्दशम् ॥ ३५
ब्राह्मणार्थे विपन्नानां वन्दिगोग्रहणे तथा ।
आहवेषु विपन्नानामेकरात्रन्तु सूतकम् ॥ ३६
द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदकौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः ॥ ३७
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयान् लभते लोकान् यदि क्लीवं न भाषते ॥ ३८
जितेन लभते लक्ष्मीं हतेनापि सुराङ्गनाः ।
क्षणविध्वंसिकेऽस्मिन् का चिन्ता मरणे रणे ॥ ३९
यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः ।
परित्राता यदा गच्छेत् स च क्रतुफलं लभेत् ॥ ४०
यस्य च्छेदक्षतं गात्रं शरशक्त्यृष्टिमुद्गरैः ।
देवकन्यास्तु तं वीरं गायन्ति रमयन्ति च ॥ ४१
वराङ्गनासहस्राणि शूरमायोधने हतम् ।
नागकन्याश्च धावन्ति मम भर्त्ता भवेदिति ॥ ४२

यं यज्ञसङ्घैस्तपसा च विद्यया
स्वर्गैषिणो वात्र यथैव विप्राः।
तथैव यान्त्येव हि तत्र वीराः
प्राणान् सुयुद्धेन परित्यजन्तः॥ ४४

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफलमानुपूर्व्याल्लभन्ति ते॥ ४५

असगोत्रमबन्धुञ्च प्रेतीभूतञ्च ब्राह्मणम्।
नीत्वा च दाहयित्वा च प्राणायामेन शुध्यति॥ ४६

न तेषामशुभं किंचिद्द्विजानां शुभकर्म्मणि।
जलावगाहनात् तेषां शुद्धि स्मृतिरितीरिता॥ ४७

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा चैव तु स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥ ४८

क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति।
एकाहमशुचिर्भूत्वा पंचगव्येन शुध्यति॥ ४९

शवंच वैश्यमज्ञानाद्ब्राह्मणो योऽनुगच्छति।
कृत्वाशौचं द्विरात्रंच प्राणायामान् षडाचरेत्॥ ५

प्रेतीभूतन्तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः।
नयन्तमनुगच्छेत त्रिरात्रमशुचिर्भवेत्॥ ५१

त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति॥ ५२

विनिर्वर्त्य यदा शूद्रा उदकान्तमुपस्थिताः।
द्विजैस्तदानुगन्तव्या इति धर्म्मविदो विदुः॥ ५३

तस्माद्द्विजो मृतं शूद्रं न स्पृशेन्न च दाहयेत्।
दृष्टे सूर्य्यावलोकेन शुद्धिरेषा पुरातनी ॥ ५४

इति पाराशरे धर्म्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

अतिमानादतिक्रोधात् स्नेहाद्वा यदि वा भयात्।
उद्बध्नीयात् स्त्री पुमान् वा गतिरेषा विधीयते ॥ १
पूयशोणितसम्पूर्णे अन्धे तमसि मज्जति।
षष्टिं वर्षसहस्राणि नरकं प्रतिपद्यते ॥ २
नाशौचं नोदकं नाग्निं नाश्रुपातं च कारयेत्।
वोढारोऽग्निप्रदातारः पाशच्छेदकरास्तथा ॥ ३
तप्तकृच्छ्रेण शुध्यन्तीत्येवमाह प्रजापतिः।
गोभिर्हतं तथोद्बद्धं ब्राह्मणेन तु घातितम् ॥ ४
संस्पृशन्ति च ये विप्रा वोढारश्चाग्निदाश्च ये।
अन्ये ऽपि वानुगन्तारः पाशच्छेदकराश्च ये ॥ ४
तप्तकृच्छ्रेण शुध्यन्ति कुर्य्युर्ब्राह्मणभोजनम्।
अनडुत्सहितां गांच दद्युर्विप्राय दक्षिणाम् ॥ ५
त्र्यहमुष्णं पिवेदापस्त्र्यहमुष्णं पयः पिवेत्।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम् ॥ ७
यो वै समाचरेद्विप्रः पतितादिष्वकामतः ॥ ८
मासार्द्धं मासमेकं वा मासद्वयमथापि वा।
अब्दार्द्धमब्दमेकं वा तदूर्द्धं चैव तत्समः ॥ ९

त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत् ।
तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत् ॥ १०
चतुर्थे दशरात्रं स्यात् पराकः पंचमे मतः ।
कुर्य्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम् ॥ ११
शुद्ध्यर्थमष्टमे चैव षण्मासात् कृच्छ्रमाचरेत् ।
पक्षसङ्ख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥ १२
ऋतुस्नाता तु या नारी भर्त्तारं नोपसर्पति ।
सा मृता नरकं याति विधवा च पुनः पुनः ॥ १३
ऋतौ स्नातान्तु यो भार्य्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ १४
अदुष्टपतितां भार्य्यां यौवने यः परित्यजेत् ।
सप्तजन्म भवेत् स्त्रीत्वं वैधव्यं च पुनःपुनः ॥ १५
दरिद्रं व्याधितं मूर्खं भर्त्तारं या न मन्यते ।
सा मृता जायते व्याली वैधव्यं च पुनःपुनः ॥ १६
ओघवाताहृतं बीजं यथा क्षेत्रे प्ररोहति ।
क्षेत्री तल्लभते बीजं न बीजी भागमर्हति ॥ १७
तद्वत् परस्त्रियाः पुत्रौ द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डः स्यात् मृते भर्त्तरि गोलकः ॥ १८
औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः ।
दद्यान्माता पिता वापि स पुत्रो दत्तको भवेत् ॥ १९
परिवित्तिः परिवेत्ता यया च परिविद्यते ।
सर्वे ते नरकं यान्ति दातृयाजकपंचमाः ॥ २०
दाराग्निहोत्रसंयोगं यः कुर्य्यादग्रजे सति ।
परिवेत्ता स परिज्ञेयः परिवित्तिस्तु पूर्वजः ॥ २१

द्वौ कृच्छ्रौ परिवित्तेस्तु कन्यायाः कृच्छ्र एव च।
कृच्छ्रातिकृच्छ्रौ दातुश्च होता चान्द्रायणं चरेत् ॥ २२
कुब्जवामनषण्ढेषु गद्गदेषु जड़ेषु च।
जातान्धे बधिरे मूके न दोषः परिवेदने ॥ २३
पितृव्यपुत्रः सापत्नः परनारीसुतस्तथा।
दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥ २४
ज्येष्ठो भ्राता यदि तिष्ठेदाधानं नैव चिन्तयेत् ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥ २५
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ।
पंचास्वापत्सु नारीणां पतिरन्यो विधीयते ॥ २६
मृते भर्त्तरि या नारी ब्रह्मचर्य्ये व्यवस्थिता।
सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥ २७
तिस्रः कोट्यर्द्धकोटी च यानि रोमाणि मानवे।
तावत्कालं वसेत् स्वर्गं भर्त्तारं यानुगच्छति ॥ २८
व्यालग्राही यथा व्यालं बिलादुद्धरते बलात्।
एवमुद्धृत्य भर्त्तारं तेनैव सह मोदते ॥ २९
इति पाराशरे धर्म्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

वृकश्वभ्यां शृगालाद्यैर्यदि दष्टस्तु ब्राह्मणः।
स्नात्वा जपेत गायत्रीं पवित्रां वेदमातरम् ॥ १
गवां शृङ्गोदके स्नातो महानद्यास्तु सङ्गमे।
समुद्रदर्शनाद्वापि शुना दष्टः शुचिर्भवेत् ॥ २

वेदविद्याव्रतस्नातः शुना दष्टस्तु ब्राह्मणः ।
सहिरण्योदके स्नात्वा घृतं प्राश्य विशुध्यति ॥ ३
सव्रतस्तु शुना दष्टस्त्रिरात्रं समुपोषितः ।
घृतं कुशोदकं पीत्वा व्रतशेषं समापयेत् ॥ ४
अव्रतः सव्रतो वापि शुना दष्टो भवेद्द्विजः ।
प्रणिपत्य भवेत् पूतो विप्रैश्चानुनिरीक्षितः ॥ ५
शुनाघ्रातावलीढ़स्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनाच्छुद्धिरग्निना चोपचूलनम् ॥ ६
शुना च ब्राह्मणी दष्टा जम्बुकेन वृकेण वा ।
उदितं सोमनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥ ७
कृष्णपक्षे यदा सोमो न दृश्येत कदाचन ।
यां दिशं व्रजति सोमस्तां दिशं चावलोकयेत् ॥ ८
असद्ब्राह्मणके ग्रामे शुना दष्टस्तु ब्राह्मणः ।
वृषं प्रदक्षिणीकृत्य सद्यः स्नानाद्विशुध्यति ॥ ९
चण्डालेन श्वपाकेन गोभिर्विप्रैर्हतो यदि ।
आहिताग्निर्मृतो विप्रो विषेणात्महतो यदि ॥ १०
दहेत्तं ब्राह्मणं विप्रो लोकाग्नौ मन्त्रवर्जितम् ।
स्पृष्ट्वा वोढ्वा च दग्ध्वा च सपिण्डेषु च सर्वथा ॥ ११
प्राजापत्यं चरेत् पश्चाद्विप्राणामनुशासनात् ।
दग्धास्थीनि पुनर्गृह्य क्षीरैः प्रक्षालयेद्द्विजः ॥ १२
पुनर्दहेत् स्वकाग्नौ तन्मन्त्रेण च पृथक् पृथक् ।
आहिताग्निर्द्विजः कश्चित् प्रवसन् कालचोदितः ॥ १३
देहनाशमनुप्राप्तस्तस्याग्निर्वसते गृहे ।
श्रौताग्निहोत्रसंस्कारः श्रूयतामृषिसत्तमाः ॥ १४

कृष्णाजिनं समास्तीर्य्य कुशैश्च पुरुषाकृतिम्।
षट्शतानि शतंचैव पलाशानांच वृन्तकम्॥ १५
चत्वारिंशच्छिरे दद्यात् षष्टिं कण्ठे विनिर्दिशेत्।
बाहुभ्यांच शतं दद्याङ्गुलीषु दशैव तु॥ १६
शतंचोरसि सन्दद्यात् त्रिंशच्चैवोदरे न्यसेत्।
अष्टौ वृषणयोर्दद्यात् पंच मेढ्रे च विन्यसेत्॥ १७
एकविंशतिमूरुभ्यां जानुजङ्घे च विंशतिम्।
पादाङ्गुल्योः शतार्द्धंच पलाणि च तथा न्यसेत्॥ १८
शम्यां शिश्ने विनिक्षिप्य अरणीं वृषणे तथा।
जुहूं दक्षिणहस्तेन वामहस्ते तथोपसत्॥ १९
कर्णे चोदूखलं दद्यात् पृष्ठे च मूषलं ततः।
निक्षिप्योरसि दृषदं तण्डुलाज्यतिलान् मुखे॥ २०
श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालींच चक्षुषोः।
कर्णे नेत्रे मुखे घ्राणे हिरण्यशकलं क्षिपेत्॥ २१
अग्निहोत्रोपकरणं गात्रे शेषं प्रविन्यसेत्।
असौ स्वर्गाय लोकाय स्वाहेति च घृताहुतीः॥ २२
दद्यात् पुत्रोऽथवा भ्राता ह्यन्ये वापि स्वधर्म्मणः।
यथा दहनसंस्कारस्तथा कार्य्यं विचक्षणैः॥ २३
ईदृशन्तु विधिं कुर्य्याद्ब्रह्मलोके गतिर्ध्रुवम्।
ये दहन्ति द्विजास्तन्तु ते यान्ति परमां गतिम्॥ २४
अन्यथा कुर्वते किंचिदात्मबुद्धिप्रबोधिताः।
भवन्त्यल्पायुषस्ते वै पतन्ति नरके ध्रुवम्॥ २५

इति पाराशरे धर्म्मशास्त्रे पंचमोऽध्यायः॥ ५

---

# षष्ठोऽध्यायः ।

अतपरं प्रवक्ष्यामि प्राणिहत्यासु निष्कृतिम् ।
पराशरेण पूर्वोक्तां मन्वर्थेऽपि च विस्तृताम् ॥ १
हंससारसक्रौंचांश्च चक्रवाकं सकुक्कुटम् ।
जालपादांश्च शरभमहोरात्रेण शुध्यति ॥ २
बलाकाटिट्टिभानांच शुकपारावतादिनाम् ।
आटिनांच बकानांच शुध्यते नक्तभोजनात् ॥ ३
भासकाककपोतानां सारीतित्ति रिघातकः ।
अन्तर्जले उभे सन्ध्ये प्राणायामेन शुध्यति ॥ ४
गृध्रश्येनशिखिग्राहचाषोलूकविपातने ।
अपक्वाशी दिनं तिष्ठेत् त्रिकालं मारुताशनः ॥ ५
वल्गुणीचटकानांच कोकिलाखञ्जरीटकान् ।
लावकान् रक्तपादांश्च शुध्यन्ते नक्तभोजनात् ॥ ६
कारण्डवचकोराणां पिङ्गलाकुररस्य च ।
भरद्वाजनिहन्ता च शुध्यते शिवपूजनात् ॥ ७
भेरुण्डश्येनभासंच पारावतकपिञ्जलान् ।
पक्षिणामेव सर्वेषामहोरात्रेण शुध्यति ॥ ८
हत्वा नकुलमार्जारसर्पाजगरडुण्डुभान् ।
कृशरं भोजयेद्विप्रान् लौहदण्डंच दक्षिणाम् ॥ ९
शल्लकीश[illegible]
हन्ताक[illegible] च [illegible] शुध्यति ॥ १०
वृकजम्बु[illegible] तरक्षू[illegible] ।
तिलप्रस्थं द्विजे दद्याद्वायुभक्षो दिनत्रयम् ॥ ११

अजगवयतुरङ्गानां महिषोष्ट्रनिपातने।
शुध्यते स त्रिरात्रेण विप्राणां तर्पणेन च ॥ १२
खर्गं रुरुं वराहंच अज्ञानाद्यस्तु घातयेत्।
अज्ञानाक्तृष्टमश्नीयादहोरात्रेण शुध्यति ॥ १३
एवं चतुष्पदानांच सर्वेषां वनचारिणाम्।
अहोरात्रोषितस्तिष्ठेज्जपन् वै जातवेदसम् ॥ १४
शिल्पिनं कारुकं शूद्रं स्त्रियं वा यस्तु घातयेत्।
प्राजापत्यद्वयं कुर्य्याद् वृषैकादश दक्षिणा ॥ १५
वैश्यं वा क्षत्रियं वापि निर्दोषमभिघातयेत्।
सोऽतिकृच्छ्रद्वयं कुर्य्याद्गोविंशद्दक्षिणां ददेत् ॥ १६
वैश्यं शूद्रं क्रियासक्तं विकर्म्मस्थं द्विजोत्तमम्।
हत्वा चान्द्रायणं कुर्य्यात्त्रिंशद्गोदक्षिणाम् ॥ १७
क्षत्रियेणापि वैश्येन शूद्रेणैवेतरेण वा।
चण्डालवधसम्प्राप्तः कृच्छ्रार्द्धेन विशुध्यति ॥ १८
चौरः श्वपाकचाण्डाला विप्रेणापि हता यदि।
अहोरात्रोपवासेन प्राणायामेन शुध्यति ॥ १९
श्वपाकं वापि चाण्डालं विप्रः सम्भाषते यदि।
द्विजसम्भाषणं कुर्य्याद्गायत्रीं वा सकृज्जपेत् ॥ २०
चाण्डालैः सह सुप्तन्तु त्रिरात्रमुपवासयेत्।
चाण्डालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः ॥ २१
चण्डालदर्शनेनैव आदित्यमवलोकयेत।
चण्डालस्पर्शने चैव सचेलं स्नानमाचरेत् ॥ २२
चण्डालखातवापीषु पीत्वा सलिलमग्रजः।
अज्ञानाच्चैव नक्तेन त्वहोरात्रेण शुध्यति । २३

चण्डालभाण्डसंस्पृष्टं पीत्वा कूपगतं जलम् ।
गोमूत्रयावकाहारस्त्रिरात्रेण विशुध्यति ॥ २४
चण्डालोदकभाण्डे तु अज्ञानात् पिबते जलम् ।
तत्क्षणात् क्षिपते यस्तु प्राजापत्यं समाचरेत् ॥ २५
यदि न क्षिपते तोयं शरीरे यस्य जीर्य्यति ।
प्रजापत्यं न दातव्यं कृच्छ्रं सान्तपनं चरेत् ॥ २६
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु क्षत्रियः ।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ २७
भाण्डस्थमन्त्यजनान्तु जलं दधि पयः पिबेत् ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥ २८
ब्रह्मकूर्च्चोपवासेन द्विजातीनान्तु निष्कृतिः ।
शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥ २९
ब्राह्मणो ज्ञानतो भुङ्क्ते चण्डालान्नं कदाचन ।
गोमूत्रयावकाहारो दशरात्रेण शुध्यति ॥ ३०
एकैकं ग्रासमश्नीयाद्गोमूत्रयावकस्य च ।
दशाहं नियमस्थस्य व्रतं तत्र विनिर्दिशेत् ॥ ३१
अविज्ञातश्च चण्डालः सन्तिष्ठेत् तस्य वेश्मनि ।
विज्ञाते तूपसन्नस्य द्विजाः कुर्व्वन्त्यनुग्रहम् ॥ ३२
ऋषिवक्त्राच्च्युता धर्म्माज्जायन्ते वेदपारगाः ।
पतन्तमुद्धरेयुस्ते धर्म्मज्ञं पापसङ्कटात् ॥ ३३
दध्ना च सर्पिषा चैव क्षीरगोमूत्रयावकम् ।
भुञ्जीत सह सर्व्वैश्च त्रिसन्ध्यमवगाहनम् ॥ ३४
त्र्यहं भुञ्जीत दध्ना च त्र्यहं भुञ्जीत सर्पिषा ।
त्र्यहं क्षीरेण भुञ्जीत एकैकेन दिनत्रयम् ॥ ३५

आवद्दुष्टं न भुञ्जीयान्नोच्छिष्टं कृमिदूषितम्।
त्रिपलं दधिदुग्धस्य पलमेकन्तु सर्पिषः॥ ३६
भस्मना तु भवेच्छुद्धिरुभयोस्ताम्रकांस्ययोः।
जलशौचेन वस्त्राणां परित्यागेन मृन्मयम्॥ ३७
कुसुम्भगुडकार्पासलवणं तैलसर्पिषी।
द्वारे कृत्वा तु धान्यानि गृहे दद्याद्धुताशनम्॥ ३८
एवं शुद्धस्ततः पश्चात् कुर्य्याद्ब्राह्मणभोजनम्।
त्रिंशतं गा वृषञ्चैकं दद्याद्विप्रेषु दक्षिणाम्॥ ३९
पुनर्लेपनया तेज होमजप्येन शुध्यति।
आधारेण च विप्राणां भूमिदोषो न विद्यते॥ ४०
रजकी चर्म्मकारी च लुब्धकस्य च गुल्मी।
चातुर्वर्ण्यगृहे यस्य ह्यज्ञानादधितिष्ठति॥ ४१
ज्ञात्वा तु निष्कृतिं कुर्य्यात् पूर्व्वोक्तस्यार्द्धमेव च।
गृहदाहं न कुर्वीताद्यन्यत् सर्व्वञ्च कारयेत्॥ ४२
गृहस्याभ्यन्तरे गच्छेच्चाण्डालो यस्य कस्यचित्।
तस्माद्गृहाद्विनिःसृत्य गृहभाण्डानि वर्ज्जयेत्॥ ४३
रसपूर्णन्तु यद्भाण्डं न त्यजेच्च कदाचन।
गोरसेन तु सम्मिश्रैर्ज्जलैः प्रोक्षेत् समन्ततः॥ ४४
ब्राह्मणस्य व्रणद्वारे पूयशोणितसम्भवे।
कृमिरुत्पद्यते यस्य प्रायश्चित्तं कथं भवेत्॥ ४५
गवां मूत्रपुरीषेण दध्ना क्षीरेण सर्पिषा।
त्र्यहं स्नाता च पीत्वा च कृमिदुष्टः शुचिर्भवेत्॥ ४६
क्षत्रियोऽपि सुवर्णस्य पञ्चमाषान् प्रदापयेत्।
गोदक्षिणान्तु वैश्यस्याप्युपवासं विनिर्दिशेत्॥ ४७

शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति ।
ब्राह्मणांस्तु नमस्कृत्य पञ्चगव्येन शुध्यति ॥ ४८
अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः ।
प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं हि तत ॥ ४६
व्याधिव्यसनिनिश्रान्ते दुर्भिक्षे डामरे तथा ।
उपवासो व्रतो होमो द्विजसम्पादितानि वा ॥ ५०
अथवा ब्राह्मणास्तुष्टाः स्वयं कुर्व्वन्त्यनुग्रहम् ।
सर्व्वधर्म्ममवाप्नोति द्विजैः संवर्द्धितापि वा ॥ ५१
दुर्ब्बलेऽनुग्रहः कार्य्यस्तथा वै बालवृद्धयोः ।
अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः ॥ ५२
स्नेहाद्वा यदि वा लोभाद्भयादज्ञानतोऽपि वा ।
कुर्व्वन्त्यनुग्रहं ये वै तत्पापं तेषु गच्छति ॥ ५३
शरीरस्यात्यये प्राप्ते वदन्ति नियमन्तु ये ।
महत्कार्य्योपरोधेन न स्वस्थस्य कदाचन ॥ ५४
स्वस्थस्य मूढा कुर्व्वन्ति नियमन्तु वदन्ति ये ।
ते तस्य विघ्नकर्त्तारः पतन्ति नरकेऽशुचौ ॥ ५५
स एव नियमस्त्याज्यो ब्राह्मणं योऽवमन्यते ।
वृथा तस्योपवासः स्यान्न स पुण्येन युज्यते ॥ ५६
स एव नियमो ग्राह्यो यं यं कोऽपि वदेद्द्विजः ।
कुर्य्याद्वाक्यं द्विजानाञ्च अकुर्व्वन् ब्रह्महा भवेत् ॥ ५७
उपवासो व्रतञ्चैव स्नानं तीर्थं जपस्तपः ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तद्भवेत् ॥ ५८
व्रतच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्म्मणि ।
सर्व्वं भवति निश्छिद्रं ब्राह्मणैरुपपादितम् ॥ ५९

ब्राह्मणा जङ्गमं तीर्थं निर्ज्जनं सर्वकामदम्।
तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः॥ ६०

ब्राह्मणाः यानि भाषन्ते भाषन्ते तानि देवताः।
सर्वदेवमया विप्रा न तद्वचनमन्यथा॥ ६१

अन्नाद्ये कीटसंयुक्ते मक्षिकाकीटदूषिते।
अन्तरा संस्पृशेच्चापस्तदन्नं भस्मना स्पृशेत्॥ ६२

भुञ्जानो हि यदा विप्रः पादं हस्तेन संस्पृशेत्।
उच्छिष्टं हि स वै भुङ्क्ते योभुङ्क्ते मृतभाजने॥ ६३

पादुकास्थो न भुञ्जीत पर्य्यङ्के संस्थितोऽपि वा।
शुना चाण्डालदृष्टो वा भोजनं परिवर्ज्जयेत्॥ ६४

यदन्नञ्च निषिद्धं यदन्नशुद्धिं तथैव च।
यथा पराशरेणोक्तं तथैवाहं वदामि वः॥ ६५

सितं द्रोणाढ़कस्यान्नं काकश्वानोपघातितम्।
केनैतच्छुध्यते चान्नं ब्राह्मणेभ्यो निवेदयेत्॥ ६६

काकश्वानावलीढ़न्तु द्रोणान्नं न परित्यजेत्।
वेदवेदाङ्गविद्विप्रै र्धर्म्मशास्त्रानुपालकैः॥ ६७

प्रस्थो द्वात्रिंशतिद्रोणः स्मृतो द्विप्रस्थ आढ़कः।
ततो द्रोणाढ़कस्यान्नं श्रुतिस्मृतिविदो विदुः॥ ६८

काकश्वानावलीढ़न्तु गवाघ्रातं खरेण वा।
स्वल्पमन्नं त्यजेद्विप्रः शुद्धिर्द्रोणाढ़के भवेत्॥ ६९

अन्नस्योद्धृत्य तन्मात्रं यच्च नोपहतं भवेत्।
सुवर्णोदकमभ्युक्ष्य हुताशेनैव तापयेत्॥ ७०

हुताशनेन संसृष्टं सुवर्णसलिलेन च ।
विप्राणां ब्रह्मघोषेण भौज्यं भवति तत्क्षणात् ॥ ७१

इति पाराशरे धर्मशास्त्रे षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

अथातो द्रव्यसंशुद्धिः पराशरवचो यथा ।
दारवाणान्तु पात्राणां तक्षणाच्छुद्धिरिष्यते ॥ १
मार्ज्जनाद्यज्ञपात्राणां पाणिना यज्ञकर्म्मणि ।
चामसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु ॥ २
चरुणाञ्च सुवाणाञ्च शुद्धिरुष्णेन वारिणा ।
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ॥ ३
रजसा शुध्यते नारी विकलं या न गच्छति ।
नदी वेगेन शुध्येत लेपो यदि न दृश्यते ॥ ४
वापीकूपतड़ागेषु दूषितेषु कथंचन ।
उद्धृत्य वै घटशतं पंचगव्येन शुध्यति ॥ ५
अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत् कन्या अत ऊर्द्धं रजस्वला ॥ ६
प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिवन्ति पितरः स्वयम् ॥ ७
माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च ।
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ८
यस्तां समुद्वहेत् कन्यां ब्राह्मणोऽज्ञानमोहितः ।
असम्भाष्योह्यपाङ्क्तेयः स विप्रो वृषलीपति ॥ ९

यः करोत्येकरात्रेण वृषलीसेवनं द्विजः।
स भैक्षभुग्जपन्नित्यं त्रिभिर्वर्षैर्विशुध्यति ॥ १०
अस्तं गते यदा सूर्य्ये चाण्डालं पतितं स्त्रियम्।
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते ॥ ११
जातवेदं सुवर्णञ्च सोममार्गं विलोक्य च।
ब्राह्मणानुगतश्चैव स्नानं कृत्वा विशुध्यति ॥ १२
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी ब्राह्मणी तथा।
तावत् तिष्ठेन्निराहारा त्रिरात्रेणैव शुध्यति ॥ १३
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी क्षत्रिया तथा।
अर्द्धकृच्छ्रं चरेत् पूर्व्वा पादमेकमनन्तरा ॥ १४
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यजा तथा।
पादोनञ्चैव पूर्व्वाया: पराया: कृच्छ्रपादकम् ॥ १५
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा।
कृच्छ्रेण शुध्यते पूर्व्वा शूद्रा दानेन शुध्यति ॥ १६
स्नाता रजस्वला या तु चतुर्थेऽहनि शुध्यति।
कुर्य्याद्रजोनिवृत्तौ तु दैवपित्र्यादिकर्म्म च ॥ १७
रोगेण यद्रजः स्त्रीणामन्वहन्तु प्रवर्त्तते।
नाशुचिः सा ततस्तेन तत् स्याद्वैकारिकं मतम् ॥ १८
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥ १९
आतुरे स्नान उत्पन्ने दशकृत्वा ह्यनातुरः।
स्नात्वा स्नात्वास्पृशेदेनं ततः शुध्येत् स आतुरः ॥ २०
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेन वा द्विजः।
उपोष्य रजनीमेकां पंचगव्येन शुध्यति ॥ २१

अनुच्छिष्टेन शूद्रेन स्पर्शे स्नानं विधियते ।
उच्छिष्टेन च संस्पृष्टः प्राजापत्यं समाचरेत् ॥ २२
भस्मना शुध्यते कांस्यं सुरया यन्न लिप्यते ।
सुरामात्रेण संस्पृष्टं शुध्यतेऽग्न्युपलेपनैः ॥ २३
गवाघ्रातानि कांस्यानि श्वकाकोपहतानि च ।
शुध्यन्ति दशभिः क्षारैः शूद्रोच्छिष्टानि यानि च ॥ २४
गण्डूषं पादशौचंच कृत्वा वै कांस्यभाजने ।
षण्मासान् भुवि निक्षिप्य उद्धृत्य पुनराहरेत् ॥ २५
आयसेष्वपसारेन सीसस्याग्नौ विशोधनम् ।
दन्तमस्थि तथा शृङ्गं रौप्यं सौवर्णभाजनम् ॥ २६
मणिपाषाणशङ्खाच एतान् प्रक्षालयेज्जलैः ।
पाषाणे तु पुनर्घृष्टिरेषा शुद्धिरुदाहृता २७
मृद्भाण्डदहनाच्छुद्धिर्धान्यानां मर्ज्जनादपि ॥ २८
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते ॥ २९
वेणुवल्कलचीराणां क्षौमकार्पासवाससाम् ।
और्णानां नेत्रपट्टानां जलाच्छौचं विधीयते ॥ ३०
तुलिकाद्युपधानानि पीतरक्ताम्बराणि च ।
शोषयित्वार्कतापेन प्रोक्षयित्वा शुचिर्भवेत् ॥ ३१
मुञ्जोपस्करसूर्पाणां शाणस्य फलचर्म्मणाम् ।
तृणकाष्ठादिरज्जुनामुदकप्रोक्षणं मतम् ॥ ३२
मार्ज्जारमक्षिकाकीट-पतङ्गकृमिदर्दुराः ।
मेध्यामेध्यं स्पृशन्त्येव नोच्छिष्टान् मनुरब्रवीत ॥ ३३

भूमिं स्पृष्टागतं तोयं यश्चाप्यन्योन्यविप्रुषः।
भुक्तोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत्॥ ३४
ताम्बुलेक्षुफले चैव भुक्तस्नेहानुलेपने।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत्॥ ३५
रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च।
मरुतार्केण शुध्यन्ति पक्वेष्टकचितानिच॥ ३६
अदुष्टाः सन्तता धारा वातोद्धूताश्च रेणवः।
स्त्रियो वृद्धाश्च वालाश्च न दुष्यन्ति कदाचन॥ ३७
क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥ ३८
अग्निरापश्च वेदाश्च सोमसूर्य्यानिलास्तथा।
एते सर्व्वेऽपि विप्राणां श्रोत्रे तिष्ठन्ति दक्षिणे॥ ३९
प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा।
विप्रस्य दक्षिणे कर्णे सान्निध्यं मनुरब्रवीत्॥ ४०
देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि।
रक्षेदेव स्वदेहादि पश्चाद्धर्म्मं समाचरेत्॥ ४१
येन केन च धर्म्मेण मृदुना दारुणेन च।
उद्धरेद्दीनमात्मानं समर्थो धर्म्ममाचरेत्॥ ४२
आपत्काले तु सम्प्राप्ते शौचाचारं न चिन्तयेत्।
स्वयं समुद्धरेत् पश्चात् स्वस्थो धर्म्मं समाचरेत्॥ ४३
इति पाराशरे धर्म्मशास्त्रे सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः ।

गवां बन्धनयोक्त्रे तु भवेन्मृत्युरकामतः ।
अकामात् कृतपापस्य प्रायश्चित्तं कथं भवेत् ॥ १
वेदवेदाङ्गविदुषां धर्म्मशास्त्रं विजानताम् ।
स्वकर्म्मरतविप्राणां स्वकं पापं निवेदयेत् ॥ २
अत ऊर्द्ध्वं प्रवक्ष्यामि उपस्थानस्य लक्षणम् ।
उपस्थितो हि न्यायेन व्रतादेशनमर्हति ॥ ३
सद्यो निःसंशये पापे न भुञ्जीतानुपस्थितः ।
भुञ्जानो वर्द्धयेत् पापं पर्षद्यत्र न विद्यते ॥ ४
संशये तु न भोक्तव्यं यावत् कार्य्यविनिश्चयः ।
प्रमादश्च न कर्त्तव्यो यथैवासंशयस्तथा ॥ ५
कृत्वा पापं न गूहेत गुह्यमानं विवर्द्धते ।
स्वल्पं वाथ प्रभूतं वा धर्म्मविद्भ्यो निवेदयेत् ॥ ६
ते हि पापे कृते वैद्या हन्तारश्चैव पाप्मनाम् ।
व्याधितस्य यथा वैद्या बुद्धिमन्तो रुजापहाः ॥ ७
प्रायश्चित्ते समुत्पन्ने ह्रीमान् सत्यपरायणः ।
मृद्वार्ज्जवसम्पन्नः शुद्धिं गच्छेत मानवः ॥ ८
सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः ।
क्षत्रियो वाथ वैश्यो वा ततः पर्षदमाव्रजेत् ॥ ९
उपस्थाय ततः शीघ्रमार्त्तिमान् धरणीं व्रजेत् ।
गात्रैश्च शिरसा चैव न च किञ्चिदुदाहरेत् ॥ १०
सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्य्ययोः ।
अज्ञानात् कृषिकर्त्तारो ब्राह्मणा नामधारकाः ॥ ११

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।
सहस्रशः समेतानां परिषत्त्वं न विद्यते॥ १२
यद्वदन्ति तमोमूढ़ा मूर्खा धर्म्ममतद्विदः।
तत् पापं शतधा भूत्वा तद्वक्तॄनधिगच्छति॥ १३
अज्ञात्वा धर्म्मशास्त्राणि प्रायश्चित्तं ददाति यः।
प्रायश्चित्ती भवेत् पूतः किल्बिषं परिषद्व्रजेत्॥ १४
चत्वारो वा त्रयो वापि यद्ब्रूयुर्वेदपारगाः।
स धर्म्म इति विज्ञेयो नेतरैस्तु सहस्रशः॥ १५
प्रमाणमार्गं मार्गन्तो ये धर्म्मं प्रवदन्ति वै।
तेषामुद्विजते पापं सद्भूतगुणवादिनाम्॥ १६
यथाश्मनि स्थितं तोयं मरुतार्केण शुष्यति।
एवं परिषदादेशान्नाशयेद्देव दुष्कृतम्॥ १७
नैव गच्छति कर्त्तारं नैव गच्छति पर्षदम्।
मारुतार्कादिसंयोगात् पापं नश्यति तोयवत्॥ १८
अनाहिताग्नयो येऽन्ये वेदवेदाङ्गपारगाः।
पञ्च त्रयो वा धर्म्मज्ञाः परिषत् सा प्रकीर्त्तिता॥ १९
मुनीनामात्मविद्यानां द्विजानां यज्ञयाजिनाम्।
वेदव्रतेषु स्नातानामेकोऽपि परिषद्भवेत्॥ २०
पञ्च पूर्वं मया प्रोक्तास्तेषाञ्चैव त्वसम्भवे।
स्ववृत्तिपरितुष्टा ये परिषत् सा प्रकीर्त्तिता॥ २१
अत ऊर्द्ध्वन्तु ये विप्राः केवलं नामधारकाः।
परिषत्त्वं न तेषां वै सहस्रगुणितेष्वपि॥ २२
यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः।
ब्राह्मणास्त्वनधीयानास्त्रयस्ते नामधारकाः॥ २३

ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्ज्जलः।
यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा॥ २४
यथा षण्ढोऽफलं स्त्रीषु यथा गौरूषराफला।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः॥ २५
चित्रं कर्म्म यथानेकैरङ्गैरुन्मील्यते शनैः।
ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः॥ २६
प्रायश्चित्तं प्रयच्छन्ति ये द्विजा नामधारकाः।
ते द्विजाः पापकर्म्माणः समेता नरकं ययुः। २७
ये पठन्ति द्विजा वेदं पञ्चयज्ञरताश्च ये।
त्रैलोक्यं धारयन्त्येते पञ्चेन्द्रियरतास्तथाः॥ २८
सम्प्रणीतः श्मशानेषु दीप्तोऽग्निः सर्वभक्षकः।
तथैव ज्ञानवान् विप्रः सर्वभक्षश्च दैवतम्॥ २९
अमेध्यानि च सर्वाणि प्रक्षिपन्त्युदके यथा।
तथैव किल्बिषं सर्वं प्रक्षेप्तव्यं द्विजेऽमले॥ ३०
गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत्।
गायत्रीब्रह्मतत्त्वज्ञाः सम्पूज्यन्ते द्विजोत्तमाः॥ ३१
दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः।
कः परित्यज्य दुष्टां गां दुहेच्छीलवतीं खरीम्॥ ३२
धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः।
क्रीड़ार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः॥ ३३
चातुर्वेद्यो विकल्पी च अङ्गविद्धर्मपाठकः।
प्रपञ्चाश्रमिणो मुख्याः परिषत् स्युर्दशावराः॥ ३४
राज्ञाश्चानुमते चैव प्रायश्चित्तं द्विजो वदेत्।
स्वयमेव न वक्तव्या प्रायश्चित्तस्य निष्कृतिः॥ ३५

ब्राह्मणांश्च व्यतिक्रम्य राजा यत् कर्त्तुमिच्छति।
तत् पापं शतधा भूत्वा राजानमुपगच्छति॥ ३६
प्रायश्चित्तं सदा दद्याद्देवतायतनाग्रतः।
आत्मानं पावयेत् पश्चाज्जपन् वै वेदमातरम्॥ ३७
सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम्।
गवां गोष्ठे वसेद्रात्रौ दिवा ताः समनुव्रजेत्॥ ३८
उष्णे वर्षति शीते वा मारुते वाति वा भृशम्।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः॥ ३९
आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले।
भक्षयन्तीं न कथयेत् पिबन्तं चैव वत्सकम्॥ ४०
पिबन्तीषु पिबेत् तोयं संविशन्तीषु संविशेत्।
पतितां पङ्कमग्नां वा सर्वप्राणैः समुद्धरेत्॥ ४१
ब्राह्मणार्थे गवार्थे वा यस्तु प्राणान् परित्यजेत्।
मुच्यते ब्रह्महत्यायै गोप्ता गोब्राह्मणस्य च॥ ४२
गोवधस्यानुरूपेण प्राजापत्यं विनिर्द्दिशेत्।
प्राजापत्यन्तु यत् कृच्छ्रं विभजेत् तच्चतुर्विधम्॥ ४३
एकाहमेकभक्ताशी एकाहं नक्तभोजनः।
अयाचिताश्येकमहरेकाहं मारुताशनः॥ ४४
दिनद्वयं चैकभक्तो द्विदिनं नक्तभोजनः।
दिनद्वयमयाची स्यात् द्विदिनं मारुताशनः॥ ४५
त्रिदिनं चैकभक्ताशी त्रिदिनं नक्तभोजनः।
दिनत्रयमयाची स्यात् त्रिदिनं मारुताशनः॥ ४६
चतुरहन्त्वेकभक्ताशी चतुरहं नक्तभोजनः।
चतुर्द्दिनमयाची स्याच्चतुरहं मारुताशनः॥ ४७

प्रायश्चित्ते ततश्चीर्णे कुर्य्याद्ब्राह्मणभोजनम्।
विप्राय दक्षिणां दद्यात् पवित्राणि जपेद्द्विजः।
ब्राह्मणान् भोजयित्वा तु गोघ्नः शुद्धो न संशयः॥ ४८
इति पाराशरे धर्म्मशास्त्रे अष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

गवां सं[illegible]ाथाय न दुष्येद्रोधबन्धयोः।
तद्वधन्तु न तत् विद्यात् कामाकामकृ[illegible] तथा॥ १
अंगुष्ठमात्रः स्थूलो वा बाहुमात्रः प्रमाणतः।
आर्द्रस्तु सपलाशश्च दण्ड इत्यभिधीयते॥ २
दण्डादूर्द्धं यदन्येन प्रहरेद्वा निपातयेत्।
प्रायश्चित्तं चरेत् प्रोक्तं द्विगुणं गोव्रतंचरेत्॥ ३
रोधबन्धनयोक्त्राणि घातनंच चतुर्विधम्।
एकपादं चरेद्रोधे द्विपादं बन्धने चरेत्॥ ४
योक्त्रेषु पादहीनं स्याच्चरेत् सर्वं निपातने।
गोचरे च गृहे वापि दुर्गेष्वपि समेष्वपि॥ ५
नदीष्वपि समुद्रेषु खातेऽप्यथ दरीमुखे।
दग्धदेशे स्थिताः गावस्तम्भनाद्रोध उच्यते॥ ६
योक्त्रदामकडोरैश्च घण्टाभरणभूषणैः।
गृहे वापि वने वापि बद्धा स्याद्गौर्मृता यदि॥ ७
तदेव बन्धनं विद्यात् कामाकामकृतंच यत्।
हले वा शकटे पङ्क्तौ भारे वा पीड़ितो नरैः॥ ८

गोपतिर्मृत्युमाप्नोति योक्त्रो भवति तद्वधः।
मत्तः प्रमत्त उन्मत्तश्चेतनो वाप्यचेतनः॥ ९
कामाकामकृतक्रोधो दण्डैर्हन्यादथोपलैः।
प्रहता वा मृता वापि तद्धि हेतुर्निपातने॥ १०
मूर्च्छितः पतितो वापि दण्डेनाभिहतः स तु।
उत्थितस्तु यदा गच्छेत् पञ्च सप्त दशैव वा॥ ११
ग्रासं वा यदि ग..ीयात्तोयं वापि पिबेद्यदि।
पूर्वव्याध्युपसृष्टश्चेत् प्रायश्चित्तं न विद्यते॥ १२
पिण्डस्थे पादमेकन्तु द्वौ पादौ गर्भसम्मिते।
पादोनं व्रतमुद्दिष्टं हत्वा गर्भमचेतनम्॥ १३
पादेऽङ्गरोमवपनं द्विपादे श्मश्रुणोऽपि च।
त्रिपादे तु शिखावर्ज्जं सशिखन्तु निपातने॥ १४
पादे वस्त्रयुगं चैव द्विपादे कांस्यभाजनम्।
पादोने गोवृषं दद्याच्चतुर्थे गोद्वयं स्मृतम्॥ १५
निष्पन्नसर्वगात्रन्तु दृश्यते वा सचेतनम्।
अङ्गप्रत्यङ्गसम्पन्ने द्विगुणं गोव्रतं चरेत्॥ १६
पाषाणेनैव दण्डेन गावो येनाभिघातितः।
शृङ्गभङ्गे चरेत् पादं द्वौ पादौ तेन घातने॥ १७
लाङ्गुले कृच्छ्रपादन्तु द्वौ पादावस्थिभञ्जने।
त्रिपादं चैव कर्णे तु चरेत् सर्वं निपातने॥ १८
शृङ्गभङ्गेऽस्थिभङ्गे च कटिभङ्गे तथैव च।
यदि जीवति षण्मासान् प्रायश्चित्तं न विद्यते॥ १९
व्रणभङ्गे च कर्त्तव्यः स्नेहाभ्यङ्गस्तु पाणिना।
यवसश्चापहर्त्तव्यो यावद्दृढबलो भवेत्॥ २०

यावत् सम्पूर्णसर्वाङ्गस्तावत् तं पोषयेन्नरः ।
गोरूपं ब्राह्मणस्याग्रे नमस्कृत्य विवर्जयेत् ॥ २१
यद्यसम्पूर्णसर्वाङ्गो हीनदेहो भवेत् तदा ।
गोघातकस्य तस्यार्द्धं प्रायश्चित्तं विनिर्दिशेत् ॥ २२
काष्ठलोष्टकपाषाणैः शस्त्रेणैवोद्धतो बलात् ।
व्यापादयति यो गान्तु तस्य शुद्धिं विनिर्दिशेत् ॥ २३
चरेत् सान्तपनं काष्ठे प्राजापत्यन्तु लोष्टके ।
तप्तकृच्छ्रन्तु पाषाणे शस्त्रे चैवातिकृच्छ्रकम् ॥ २४
पञ्च सान्तपने गावः प्राजापत्ये तथा त्रयः ।
तप्तकृच्छ्रे भवन्त्यष्टावतिकृच्छ्रे त्रयोदश ॥ २५
प्रमापणे प्राणभृतां दद्यात् तत्प्रतिरूपकम् ।
तस्यानुरूपं मूल्यं वा दद्यादित्यब्रवीन्मनुः ॥ २६
अन्यत्राङ्कनलक्ष्मभ्यां वहने दोहने तथा ।
सायं संयमनार्थन्तु न दुष्येद्रोधबन्धयोः ॥ २७
अतिदाहेऽतिवाहे च नासिकाभेदने तथा ।
नदीपर्वतसञ्चारे प्रायश्चित्तं विनिर्दिशेत् ॥ २८
अतिदाहे चरेत् पादं द्वौ पादौ वाहने चरेत् ।
नासिके पादहीनन्तु चरेत् सर्वं निपातने ॥ २९
दहनाच्च विपद्येत अवद्धो वापि यन्त्रितः ।
उक्तं पराशरेणैव ह्येकपादं यथाविधि ॥ ३०
रोधबन्धनयोक्त्रेषु भारप्रहरणं तथा ।
दुर्गप्रेरणयोक्त्रेषु निमित्तानि वधस्य षट् ॥ ३१
बन्धपाशसुगुप्ताङ्गो म्रियते यदि गोपशुः ।
भवने तस्य नाशस्य पापी कृच्छ्रार्द्धमर्हति ॥ ३२

न नारिकेलैर्न च शालवालै-
र्न चापि मौञ्जैर्न च बन्धनशृङ्खलैः।
एतैस्तु गावो न निबन्धनीया
बद्धास्तु तिष्ठेत् परशुं गृहीत्वा॥ २३
कुशैः काशैश्च बध्नीयाद्गोपशुं दक्षिणामुखम्।
पाशलग्नाग्निदग्धेषु प्रायश्चित्तं न विद्यते॥ २४
यदि तत्र भवेत् काष्ठं प्रायश्चित्तं कथं भवेत्।
जपित्वा पावनीं देवीं मुच्यते तत्र किल्बिषात्॥ २५
प्रेरयन् कूपवापीषु वृक्षच्छेदेषु पातयन्।
गवाशनेषु विक्रीणं स्ततः प्राप्नोति गोवधम्॥ २६
आराधितस्तु यः कश्चिद्भिन्नकक्षो यदा भवेत्।
श्रवणं हृदयं भिन्नं मग्नो वा कूपसङ्कटे॥ २७
कूपादुत्क्रमणे चैव भग्नो वा ग्रीवपादयोः।
स एव म्रियते तत्र त्रीन् पादांस्तु समाचरेत्॥ २८
कूपखाते तटीबन्धे नदीबन्धे प्रपासु च।
पानीयेषु विपन्नानां प्रायश्चित्तं न विद्यते॥ २९
कूपखाते तटीखाते दीर्घखाते तथैव च।
अन्येषु धर्मखातेषु प्रायश्चित्तं न विद्यते॥ ४०
वेश्मद्वारे निवासेषु यो नरः खातमिच्छति।
स्वकार्यगृहखातेषु प्रायश्चित्तं विनिर्दिशेत्॥ ४१
निशि बन्धनिरुद्धेषु सर्पव्याघ्रहतेषु च।
अग्निविद्युद्विपन्नानां प्रायश्चित्तं न विद्यते॥ ४२
ग्रामघाते शरौघेण वेश्मभङ्गनिपातने।
अतिवृष्टिहतानाञ्च प्रायश्चित्तं न विद्यते॥ ४३

संग्रामे प्रहतानाञ्च ये दग्धा वेश्मकेषु च ।
दावाग्निग्रामघाते वा प्रायश्चित्तं न विद्यते ॥ ४४
यन्त्रिता गौश्चिकित्सार्थं मूढगर्भविमोचने ।
यत्ने कृते विपद्यते प्रायश्चित्तं न विद्यते ॥ ४५
व्यापन्नानां बहूनाञ्च बन्धने रोधनेऽपि वा ।
भिषङ्मिथ्यापचारे च प्रायश्चित्तं विनिर्दिशेत् ॥ ४६
गोवृषाणां विपत्तौ च यावन्तः प्रेक्षका जनाः ।
न वारयन्ति तां तेषां सर्वेषां पातकं भवेत् ॥ ४७

एको हतो यैर्बहुभिः समेतै-
र्न ज्ञायते यस्य हतोऽभिधानात् ।
दिव्येन तेषामुपलभ्य हन्ता
निवर्त्तनीयो नृपसन्नियुक्तैः ॥ ४८

एका चेद्बहुभिः कापि दैवाद्व्यापादिता भवेत् ।
पादं पादञ्च हत्यायाश्चरेयुस्ते पृथक् पृथक् ॥ ४९
हतेषु रुधिरं दृश्यं व्याधिग्रस्तः कृशो भवेत् ।
नाना भवति दृष्टेषु एवमन्वेषणं भवेत् ॥ ५०
मनुना चैवमेकेन सर्वशास्त्राणि जानता ।
प्रायश्चित्तन्तु तेनोक्तं गोषु चान्द्रायणं चरेत् ॥ ५१
केशानां रक्षणार्थाय द्विगुणं गोव्रतं चरेत् ।
द्विगुणे व्रत आदिष्टे दक्षिणा द्विगुणा भवेत् ॥ ५२
राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः ।
अकृत्वा वपनं तस्य प्रायश्चित्तं विनिर्दिशेत् ॥ ५३
यस्य न द्विगुणं दानं केशश्च परिरक्षितः ।
तत् पापं तस्य तिष्ठेत वक्ता च नरकं व्रजेत् ॥ ५४

यत् किञ्चित् क्रियते पापं सर्वं केशेषु तिष्ठति ।
सर्वान् केशान् समुद्धृत्य च्छेदयेदंगुलिद्वयम् ॥ ५५
एवं नारीकुमारीणां शिरसोमुण्डनं स्मृतम् ।
न स्त्रियाः केशवपनं न दूरे शयनाशनम् ॥ ५६
न च गोष्ठे वसेद्रात्रौ न दिवा गा अनुव्रजेत् ।
नदीषु सङ्गमे चैव अरण्येषु विशेषतः ॥ ५७
न स्त्रीणामजिनं व्यासो व्रतमेवं समाचरेत् ।
त्रिसन्ध्यं स्नानमित्युक्तं सुराणामर्चनं तथा ॥ ५८
बन्धुमध्ये व्रतं तासां कृच्छ्रचान्द्रायणादिकम् ।
गृहेषु नियतं तिष्ठेच्छुचिर्नियममाचरेत् ॥ ५९
इह यो गोवधं कृत्वा प्रच्छादयितुमिच्छति ।
स याति नरकं घोरं कालसूत्रमसंशयम ॥ ६
विमुक्तो नरकात् तस्मान्मर्त्यलोके प्रजायत ।
क्लीवो दुःखी च कुष्ठी च सप्तजन्मानि वै नरः ॥ ६१
तस्मात् प्रकाशयेत् पापं स्वधर्मं सततं चरेत् ।
स्त्रीबालभृत्यगोविप्रेष्वतिकोपं विवर्ज्जयेत् ॥ ६२

इति पाराशरे धर्म्मशास्त्रे नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः ।

चातुर्वर्ण्यस्य सर्वत्र कीयं प्रोक्ता तु निष्कृतिः ।
अगम्यागमने चैव शुद्धौ चान्द्रायणं चरेत् ॥ १
एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेत् ।
अमावस्यां न भुञ्जीत एष चन्द्रायणो विधिः ॥ २

कुक्कुटाण्डप्रमानन्तु ग्रासञ्च परिकल्पयेत्।
अन्यथा भावदुष्टस्य न धर्म्मो नैव शुध्यति॥ ३
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्।
गोद्वय वस्त्रयुग्मञ्च दद्याद्विप्रेषु दक्षिणाम्॥ ४
चाण्डालींच श्वपाकींचह्यभिगच्छति यो द्विजः।
त्रिरात्रमुपवासी स्याद्विप्राणामनुशासनात्॥ ५
सशिखं वपनं कुर्य्याद् प्राजापत्यत्रयं चरेत्।
ब्रह्मकूर्चं ततः कृत्वा कुर्य्याद्ब्राह्मणतर्पणम्॥ ६
गायत्रींच जपेन्नित्यं दद्याद्गोमिथुनद्वयम्।
विप्राय दक्षिणां दद्या च्छुद्धिमाप्नोत्यसंशयम्॥ ७
क्षत्रियोवापि वैश्यो वा चंडालीं गच्छते यदि।
प्राजापत्यद्वयं कुर्य्याद्दद्याद्गोमिथुनं तथा॥ ८
श्वपाकमथचंडालीं शूद्रो वै यदि गच्छति।
प्राजापत्यं चरेत् कृच्छ्रं दद्याद्गोमिथुनं तथा॥ ९
मातरं यदि गच्छेत भगिनीं पुत्रिकां तथा।
एतास्तु मोहतो गत्वा त्रीन् कृच्छ्रांस्तु समाचरेत्॥ १०
चान्द्रायणत्रयं कुर्य्याच्छिश्नच्छेदेन शुध्यति।
मातृष्वसृगमे चैव आत्ममेढ्रनिकर्त्तनम्॥ ११
अज्ञानात् तान्तु यो गच्छेत् कुर्य्याच्चान्द्रायणद्वयम्।
दशगोमिथुनं दद्याच्छुद्धिः पराशरोऽब्रवीत्॥ १३
पितृदारान् समारुह्य मातुराप्तांच भ्रातृजाम्।
गुरुपत्नीं स्नुषांचैव भ्रातृभार्य्यां तथैव च॥ १४
मातुलानीं सगोत्रांच प्राजापत्यत्रयं चरेत्।
गोद्वयं दक्षिणां दत्त्वा शुध्यति नात्र संशयः॥ १५

पशुवेश्यादि-गमने महिषुष्ट्रीकपीस्तथा।
खरीञ्च शूकरीं गत्वा प्राजापत्यं समाचरेत् ॥ १५
गोगामी च त्रिरात्रेण गामेकां ब्राह्मणे ददत्।
महिष्युष्ट्रीखरीगामी त्वहोरात्रेण शुध्यति ॥ १६
डामरे समरे वापि दुर्भिक्षे वा जनक्षये।
वन्दिग्राहे भयार्त्ते वा सदा स्वस्त्रीं निरीक्षयेत् ॥ १७
चाण्डालैः सह सम्पर्कं या नारी कुरुते ततः।
विप्रान् दश वरान् गत्वा स्वकं दोषं प्रकाशयेत् ॥ १८
आकण्ठसम्मिते कूपे गोमयोदककर्द्दमे।
तत्र स्थिता निराहारा त्वेकरात्रेण निष्क्रमेत् ॥ १९
सशिखं वपनं कृत्वा भुञ्जीयाद्यावकौदनम्।
त्रिरात्रमुपवासित्वं त्वेकरात्रं जले वसेत् ॥ २०
शङ्खपुष्पीलतामूलं पत्रञ्च कुसुमं फलम्।
सुवर्णं पंचगव्यञ्च क्वाथयित्वा पिवेज्जलम् ॥ २१
एकभक्तं चरेत् पश्चाद्यावत् पुष्पवती भवेत्।
व्रतं चरति यद्यावत् तावत् संवसते वहिः ॥ २२
प्रायश्चित्ते ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्।
गोद्वयं दक्षिणां दद्याच्छुद्धिः पराशरोऽब्रवीत् ॥ २३
चातुर्वर्ण्यस्य नारीणां कृच्छ्रचान्द्रायणव्रतम्।
यथा भूमिस्तथा नारी तस्मात् तां न तु दूषयेत् ॥ २४
वन्दिग्राहेण या भुक्ता हत्वा बद्ध्वा वलाद्भयात्।
कृत्वा सान्तपनं कृच्छ्रं शुध्येत् पराशरोऽब्रवीत् ॥ २५
सकृद्भुक्ता तु या नारी नेच्छन्ती पापकर्म्मभिः।
प्राजापत्येन शुध्येत ऋतुप्रस्रवणेन तु ॥ २६

पतत्यर्द्धं शरीरस्य यस्य भार्य्या सुरां पिबेत् ।
पतितार्द्धशरीरस्य निष्कृतिर्न विधीयते ॥ २७
गायत्रीं जपमानस्तु कृच्छ्रं सान्तपनं चरेत् ॥ २८
गोमूत्रं गोमयं चीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम् ॥ २९
जारेण जनयेद्गर्भं गर्भे त्यक्ते मृते पतौ ।
तां त्यजेदपरे राष्ट्रे पतितां पापकारिणीम् ॥ ३०
ब्राह्मणी तु यदा गच्छेत् परपुंसा समन्विता ।
सा तु नष्टा विनिर्द्दिष्टा न तस्यागमनं पुनः ॥ ३१
कामान्मोहाद्वयदा गच्छेत् त्यक्ता बन्धुन् सुतान् पतिम् ।
सा तु नष्टा परे लोके मानुषेषु विशेषतः ॥ ३२
दशमे तु दिने प्राप्ते प्रायश्चित्तं न विद्यते ।
दशाहं न त्यजेन्नारी त्यजेन्नष्टश्रुता तथा ॥ ३३
भर्त्ता चैव चरेत् कृच्छ्रं कृच्छ्रार्द्धञ्चैव बान्धवा ।
तेषां भुक्ता च पीत्वा च अहोरात्रेण शुध्यति ॥ ३४
ब्राह्मणीतु यदा गच्छेत् परपुंसा विवर्ज्जिता ।
गत्वा पुंसां शतं याति त्यजेयुस्तान्तु गोत्रिणः ॥ ३५
पुंसो यदि गृहं गच्छेत् तदशुद्धं गृहं भवेत् ।
[illegible]हं यच्च जारस्यैव तु तद्गृहम् ॥ ३६
उल्लिख्य तद्गृहं पश्चात् पंचगव्येन शुध्यति ।
त्यजेन्मृन्मयपात्राणि वस्त्रं काष्ठंच शोधयेत् ॥ ३७
सम्भारान् शोधयेत् सर्वान् गोकेशैश्च फलोद्भवान् ।
ताम्राणि पंचगव्येन कांस्यानि दश भस्मभिः ॥ ३८

प्रायश्चित्तं चरेद्विप्रो ब्राह्मणैरुपपादितम्।
गोद्वयं दक्षिणां दद्यात् प्राजापत्यं समाचरेत्। ३९
इतरेषामहोरात्रं पंचगव्येन शोधनम्।
सपुत्रः सहभृत्यश्च कुर्य्याद् ब्राह्मणभोजनम्॥ ४०
आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम्।
न दुष्यन्तीह दर्भाश्च यज्ञेषु चमसास्तथा॥ ४१
उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्यार्च्चनादिभिः।
जपैर्होमैस्तथा दानैःशुध्यन्ते ब्राह्मणाः सदा॥ ४२
इति पाराशरे धर्म्मशास्त्रे दशमोऽध्यायः॥ १०॥

---

## एकादशोऽध्यायः।

अमेध्यरेतो गोमांसं चाण्डालान्नमथापि वा।
यदि भुक्तन्तु विप्रेण कृच्छ्रं चान्द्रायणं चरेत्। १
तथैव क्षत्रियो वैश्यस्तदर्द्धन्तु समाचरेत्।
शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत्॥ २
पंचगव्यं पिवेच्छूद्रो ब्रह्मकूर्च्चं पिवेद्विजः।
एकद्वित्रिचतुर्गाश्च दद्याद्विप्राद्यनुक्रमात्॥ ३
शूद्रान्नं सूतकस्यान्नमभोज्यस्यान्नमेव च।
शङ्कितं प्रतिषिद्धान्नं पूर्व्वोच्छिष्टं तथैव च॥ ४
यदि भुक्तन्तु विप्रेण अज्ञानादापदापि वा।
ज्ञात्वा समाचरेत् कृच्छ्रं ब्रह्मकूर्च्चन्तु पावनम्॥ ५
व्यालैर्नकुलमार्ज्जारैरन्नमुच्छिष्टितं यदा।
तिलदर्भोदकैः प्रोक्ष्य शुध्यते नात्र संशयः॥ ६

शूद्रोऽप्यभोज्यं भुक्त्वान्नं पंचगव्येन शुध्यति।
क्षत्रियो वापि वैश्यश्च प्राजापत्येन शुध्यति॥ ७
एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने।
यद्येकोऽपि त्यजेत् पात्रं शेषमन्नं न भोजयेत्॥ ८
मोहाद्वा लोभतस्तत्र पङ्क्तावुच्छिष्टभोजने।
प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनन्तथा॥ ९
पीयूषश्वेतलशुनवृन्ताकफलगृञ्जनम्।
पलाण्डुं वृक्षनिर्यासं देवस्वं कवकानि च॥ १०
उष्ट्रीक्षीरमविक्षीरमज्ञानाद्भुञ्जते द्विजः।
त्रिरात्रमुपवासी स्यात् पंचगव्येन शुध्यति॥ ११
मण्डूकं भक्षयित्वा च मूषिकमांसमेव च।
ज्ञात्वा विप्रस्त्वहोरात्रं यावकान्नेन शुध्यति॥ १२
क्षत्रियो वापि वैश्यो वा क्रियावन्तौ शुचिव्रतौ।
तद्गृहेषु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः॥ १३
घृतं तैलं तथा क्षीरं गुड़ं तैलेन पाचितम्।
गत्वा नदतटे विप्रो भुञ्जीयाच्छुद्रभोजनम्॥ १४
अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विनिर्दिशेत्॥ १५
गायत्र्यष्टसहस्रेण शुद्धः स्याच्छूद्रसूतके।
वैश्यः पंचसहस्रेण त्रिसहस्रेण क्षत्रियः॥ १६
ब्राह्मणस्य यदा भुङ्क्ते प्राणायामेन शुध्यति।
अथवा वामदेव्येन साम्ना चैकेन शुध्यति॥ १७
शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम्।
पक्वं विप्रगृहे पूतं भोज्यं तन्मनुरब्रवीत्॥ १८

आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि ।
मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत् ॥ १९
दासनापितगोपालकुलमित्रार्द्धसीरिणः ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥ २०
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
संस्कृतस्तु भवेद्दासो ह्यसंस्कारैस्तु नापितः ॥ २१
क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः ।
स गोपाल इति ज्ञेयो भोज्या विप्रैर्न संशयः ॥ २२
वैश्यकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
आर्द्धिकः स तु विज्ञेयो भोज्यो विप्रैर्न संशयः ॥ २३
भाण्डस्थितमभोज्येषु जलं दधि घृतं पयः ।
अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत् ॥ २४
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाप्युपसर्पति ।
ब्रह्मकूर्चोपवासेन यथा वर्णस्य निष्कृतिः ॥ २५
शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति ।
ब्रह्मकूर्चमहोरात्रं श्वपाकमपि शोधयेत् ॥ २६
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
निर्दिष्टं पञ्चगव्यन्तु पवित्रं पापनाशनम् ॥ २७
गोमूत्रं कृष्णवर्णायाः श्वेताया गोमयं हरेत् ।
पयश्च ताम्रवर्णाया रक्ताया दधि चोच्यते ॥ २८
[illegible] घृतं ग्राह्यं सर्वं कापिलमेव वा ।
गोमूत्रस्य पलं दद्यादङ्गुष्ठार्द्धन्तु गोमयम् ।
क्षीरं सप्तपलं दद्यात् पलमेकं कुशोदकम् ॥ ३०

गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि ॥ ३१
तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ।
पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ ॥ ३२
आपोहिष्ठेति चालोद्य मानस्तोकेति मन्त्रयेत् ।
सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥ ३३
एभिरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ।
इरावती इदं विष्णुर्मानस्तोके च शंवती ।
एतैरुद्धृत्य होतव्यं हुतशेषं स्वयं पिवेत् ॥ ३४
आलोद्य प्रणवेनैव निर्मथ्य प्रणवेन तु ।
उद्धृत्य प्रणवेनैव पिवेच्च प्रणवेन तु ॥ ३५
यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम् ।
ब्रह्मकूर्चो दहेत् सर्वं यथैवाग्निरिवेन्धनम् ॥ ३६
पिवतः पतितं तोयं भाजने मुखनिःसृतम् ।
अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ ३७
कूपे च पतितं दृष्ट्वा श्वशृगालौ च मर्कटम् ।
अस्थिचर्म्मादि पतितं पीत्वामेध्या अपो द्विजः ॥ ३८
नारन्तु कूपे काकञ्च विड़्वराहखरोष्ट्रकम् ।
गावयं सौप्रतीकञ्च मयूरं खड़्गकं तथा ॥ ३९
वैयाघ्रमार्क्षं सैंहं वा कुणपं यदि मज्जति ॥ ४०
तड़ागस्याथ दुष्टस्य पीतं स्यादुदकं यदि ।
प्रायश्चित्तं भवेत् पुंसः क्रमशोतेन सर्वशः ॥ ४१
विप्रः शुध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात् ।
एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुध्यति ४२

परपाकनिवृत्तस्य परपाकरतस्य च।
अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत्॥ ४३
अपचस्य च यद्दानं दातुश्चास्य कुतः फलम्।
दाता प्रतिग्रहीता च द्वौ तौ निरयगामिनौ॥ ४४
गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न वर्त्तयेत्।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः॥ ४५
पञ्चयज्ञं स्वयं कृत्वा परान्नेनोपजीवति।
सततं प्रातरुत्थाय परपाकरतो हि सः॥ ४६
गृहस्थधर्म्मयो विप्रो ददाति परिवर्ज्जितः।
ऋषिभिर्धर्म्मतत्त्वज्ञैरपचः परिकीर्त्तितः॥ ४७
युगे युगे च ये धर्म्मास्तेषु धर्म्मेषु ये द्विजाः।
तेषां निन्दा न कर्त्तव्या युगरूपाहि ब्राह्मणाः॥ ४८
हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारञ्च गरीयसः।
स्नात्वा तिष्ठन्नहःशेषमभिवाद्य प्रसादयेत्॥ ४९
ताड़यित्वा तृणेनापि कण्ठे वावद्ध्य वाससा।
विवादेनापि निर्ज्जित्य प्रणिपत्य प्रसादयेत्॥ ५०
अवगूर्य्य त्वहोरात्रं त्रिरात्रं क्षितिपातने।
अतिकृच्छ्रञ्च रुधिरे कृच्छ्रमन्तरशोणिते॥ ५१
नवाहमतिकृच्छ्रं स्यात् पाणिपूरान्नभोजनम्।
त्रिरात्रमुपवासः स्यादितिकृच्छ्रः स उच्यते॥ ५२
सर्व्वेषामेव पापानां सङ्करे समुपस्थिते।
शतसहस्रमभ्यस्ता गायत्रीशोधनं परम्॥ ५३

इति पाराशरे धर्म्मशास्त्रे एकादशोऽध्यायः॥ ११॥

---

## द्वादशोऽध्यायः ।

दुःस्वप्नं यदि पश्येत् तु वान्ते वा क्षुरकर्म्मणि ।
मैथुने प्रेतधूमे च स्नानमेव विधीयते ॥ १
अज्ञानात् प्राश्य विण्मूत्रं सुरां वा पिबते यदि ।
पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २
अजिनं मेखला दण्डो भैक्षचर्य्या व्रतानि च ।
निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्म्मणि ॥ ३
स्त्रीशूद्रस्य तु शुद्ध्यर्थं प्राजापत्यं विधीयते ।
पंचगव्यं ततः कृत्वा स्नात्वा पीत्वा विशुध्यति ॥ ४
जलाग्निपतने चैव प्रव्रज्यानाशकेषु च ।
प्रत्यवसितमेतेषां कथं शुद्धिर्विधीयते ॥ ५
प्र[illegible]येन।।पे तीर्थाभिगमनेन च ।
वृषैकादशदानेन वर्णाः शुध्यन्ति ते त्रयः ॥ ६
ब्राह्मणस्य प्रवक्ष्यामि वनं गत्वा चतुष्पथम् ।
सशिखं वपनं कृत्वा प्राजापत्यत्रयं चरेत् ॥ ७
गोद्वयं दक्षिणां दद्याच्छुचिः स्वायम्भुवोऽब्रवीत् ।
मुच्यते तेन पापेन ब्राह्मणत्वं च गच्छति ॥ ८
[illegible]नि पंच पुण्यानि कीर्त्तितानि मनीषिभिः ।
आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥ ९
आग्नेयं भस्मना स्नानमवगाह्य तु वारुणम् ।
आपोहिष्ठेति तद्ब्राह्मं वायव्यं रजसा स्मृतम ॥ १०
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
तत्र स्नाने तु गङ्गायां स्नातो भवति मानवः ॥ ११

स्नानार्थं [illegible] देवाः पितृगणैः सह ।
मरुभूता हि गच्छन्ति तृषार्त्ताः सलिलार्थिनः ॥ १२
निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीड़ने कृते ।
तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणम ॥ १३
विधूनोति हि यः केशान् स्नातः प्रस्रवतो द्विजः ।
आचामेद्वा जलस्थोऽपि स बाह्यः पितृदैवतैः ॥ १४
शिरः प्रावर्त्तकं बद्ध्वा मुक्तकच्छशिखोऽपि वा ।
विना यज्ञोपवीतेन आचान्तोऽप्यशुचिर्भवेत् ॥ १५
जले स्थलस्थो नाचामेज्जलस्थश्च बहिःस्थले ।
उभे स्पृष्ट्वा समाचान्त उभयत्र शुचिर्भवेत् ॥ १६
स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥ १७
क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥ १८
ब्रह्मा विष्णुश्च रुद्रश्च सोमः सूर्य्योऽनिलस्तथा ।
ते सर्व्वे अपि तिष्ठन्ति कर्णे विप्रस्य दक्षिणे ॥ १९
दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥ २०
मरुतो वसवो रुद्रा आदित्याश्चाधिदेवताः ।
सर्व्वे सोमे विलीयन्ते तस्मात् स्नानन्तु तद्ग्रहे ॥ २१
खलयज्ञे विवाहे च संक्रान्तौ ग्रहणेषु च ।
सर्व्वर्य्यां दानमेतेषु नान्यत्रेति विनिश्चयः ॥ २२
पुत्रजन्मनि यज्ञे च तथा चात्ययकर्म्मणि ।
राहोश्च दर्शने दानं प्रशस्तं नान्यथा निशि ॥ २३

महानिशा तु विज्ञेया मध्यस्थप्रहरद्वयम ।
प्रदोषपश्चिमौ यामौ दिनवत् स्नानमाचरेत् ॥ २४
चैत्यवृक्षश्चितिश्चैव चण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् ॥ २५
अस्थिसञ्चयनात् पूर्वं रुदित्वा स्नानमाचरेत् ।
अन्तर्दशाहे विप्रस्य पूर्वमाचमनं भवेत् ॥ २६
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ।
सोमग्रहे तथैवोक्तं स्नानदानादिकर्मसु ॥ २७
कुशपूतन्तु यत् स्नानं कुशेनोपस्पृशेद्द्विजः ।
कुशेनोद्धततोयं यत् सोमपानसमं स्मृतम् ॥ २८
अग्निकार्य्यात् परिभ्रष्टाः सन्ध्योपासनवर्ज्जिताः ।
वेदञ्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥ २९
तस्माद्वृषलभीतेन ब्राह्मणेन विशेषतः ।
अध्येतव्योऽप्येकदेशो यदि सर्वं न शक्यते ॥ ३०
शूद्रान्नरसपुष्टस्याप्यधीयानस्य नित्यशः ।
जपतो जुह्वतो वापि गतिरूर्द्ध्वा न विद्यते ॥ ३१
शूद्रान्नं शूद्रसम्पर्कं शूद्रेण तु सहासनम् ।
शूद्राज्ज्ञानागमश्चापि ज्वलन्तमपि पातयेत् ॥ ३२
मृतसूतकपुष्टाङ्गो द्विजः शूद्रान्नभोजने ।
अहं तां न विजानामि कां कां योनिं गमिष्यति ॥ ३३
गृध्रो द्वादश जन्मानि दश जन्मानि शूकरः ।
श्वयोनौ सप्त जन्म स्यादित्येवं मनुरब्रवीत् ॥ ३४
दक्षिणार्थन्तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥ ३५

मौनव्रतं समाश्रित्य आसीनो न वदेद्द्विजः।
भुञ्जानो हि वदेद्यस्तु तदन्नं परिवर्जयेत्॥ ३६
अर्द्धं भुक्ते तु यो विप्रस्तस्मिन् पात्रे जलं पिबेत्।
हतं दैवञ्च पित्र्यञ्च आत्मानञ्चोपघातयेत्॥ ३७
भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः।
न देवास्तृप्तिमायान्ति: निराशाः पितरस्तथा॥ ३८
गृहस्थस्तु यदा युक्तो धर्मं [illegible]न्तयेत्।
पोष्यवर्गार्थसिद्ध्यर्थं न्यायवर्त्ती सुबुद्धिमान्॥ ३९
न्यायोपार्जितवित्तेन कर्त्तव्यं ह्यात्मरक्षणम्।
अन्यायेन तु यो जीवेत् सर्वकर्मबहिष्कृतः॥ ४०
अग्निचित् कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्रं पुनन्त्येते तस्मात् पश्येत्तु नित्यशः॥ ४१
अरणिं कृष्णमार्जारं चन्दनं सुमणिं घृतम्।
तिलान् कृष्णाजिनं छागं गृहे चैतानि रक्षयेत्॥ ४२
गवां शतं सैकवृषं यत्र तिष्ठत्ययन्त्रितम्।
तत् क्षेत्रं दशगुणितं गोचर्म्म परिकीर्त्तितम्॥ ४३
ब्रह्महत्यादिभिर्म्मर्त्यो मनोवाक्कायकर्म्मजैः।
एतद्गोचर्म्मदानेन मुच्यते सर्वकिल्बिषैः॥ ४४
कुटुम्बिने दरिद्राय श्रोत्रियाय विशेषतः।
यद्दानं दीयते तस्मै तदायुर्वृद्धिकारकम्॥ ४५
आ षोड़शदिनादर्वाक् स्नानमेव रजस्वला।
अत ऊर्द्ध्वं त्रिरात्रं स्यादुशना मुनिरब्रवीत्॥ ४६
युगं युगद्वयंचैव त्रियुगंच चतुर्युगम्।
चाण्डालसूतिकोदक्यापतितानामधः क्रमात्॥ ४७

ततः सन्निधिमात्रेण सचेलं स्नानमाचरेत्।
स्नात्वावलोकयेत् सूर्य्यमज्ञानात् स्पृशते यदि ॥ ४८
वापीकूपतड़ागेषु ब्राह्मणो ज्ञानदुर्बलः।
तोयं पिबति वक्त्रेण श्वयोनौ जायते ध्रुवम् ॥ ४९
यस्तु क्रुद्धः पुमान् भार्य्यां प्रतिज्ञायाप्यगम्यताम्।
पुनरिच्छति तां गन्तुं विप्रमध्ये तु श्रावयेत् ॥ ५०
श्रान्तः क्रुद्धस्तमोऽन्धो वा क्षुत्पिपासाभयार्दितः।
दानं पुण्यमकृत्वा च प्रायश्चित्तं दिनत्रयम् ॥ ५१
उपस्पृशेत् त्रिषवणं महानद्युपसङ्गमे।
चीर्णान्ते चैव गां दद्याद् ब्राह्मणान् भोजयेद्दश ॥ ५२
दुराचारस्य विप्रस्य निषिद्धाचरणस्य च।
अन्नं भुक्त्वा द्विजः कुर्य्याद्दिनमेकमभोजनम् ॥ ५३
सदाचारस्य विप्रस्य तथा वेदान्तवादिनः।
भुक्त्वान्नं मुच्यते पापादहोरात्रान्तरे नरः ॥ ५४
ऊर्द्ध्वोच्छिष्टमधोच्छिष्टमन्तरीक्षऋतौ तथा।
कृच्छ्रत्रयं प्रकुर्वीत अशौचमरणे तथा ॥ ५५
कृच्छ्रं देव्ययुतञ्चैव प्राणायामशतत्रयम्।
पुण्यतीर्थेनार्द्रशिरः स्नानं द्वादशसङ्ख्यया।
द्वियोजनं तीर्थयात्रा कृच्छ्रमेवं प्रकल्पितम् ॥ ५६
गृहस्थः कामतः कुर्य्याद्रेतसः सेचनं भुवि।
सहस्रन्तु जपेद्देव्याः प्राणायामैस्त्रिभिः सह ॥ ५७
चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके।
समुद्रसेतुगमने प्रायश्चित्तं विनिर्दिशेत् ॥ ५८

सेतुबन्धपथे भिक्षां चातुर्वर्ण्यात् समाचरेत्।
वर्जयित्वा विकर्म्मस्थांश्छत्रोपानद्विवर्ज्जितः॥ ५९
अहं दुष्कृतकर्म्मा वै महापातककारकः।
गृहद्वारेषु तिष्ठामि भिक्षार्थी ब्रह्मघातकः॥ ६०
गोकुलेषु वसेच्चैव ग्रामेषु नगरेषु च।
तथा वनेषु तीर्थेषु नदीप्रस्रवणेषु च॥ ६१
एतेषु ख्यापयन्नेनः पुण्यं गत्वा तु सागरम्।
दशयोजनविस्तीर्णं शतयोजनमायतम्॥ ६२
रामचन्द्रसमादिष्टं नलसञ्चयनश्चितम्।
सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति॥ ६३
यजेत चाश्वमेधेन राजा तु पृथिवीपतिः।
पुनः प्रत्यागतो वेश्म वासार्थमुपसर्पति॥ ६४
सपुत्रः सह भृत्यैश्च कुर्य्याद्ब्राह्मणभोजनम्।
गाश्चैवैकशतं दद्याच्चातुर्वेद्येषु दक्षिणाम्॥ ६५
ब्राह्मणानां प्रसादेन ब्रह्महा तु विमुच्यते।
सवनस्थां स्त्रियं हत्वा ब्रह्महत्याव्रतं चरेत्॥ ६६
मद्यपश्च द्विजः कुर्य्यान्नदीं गत्वा समुद्रगाम्।
चान्द्रायणे ततश्चीर्णे कुर्य्याद् ब्राह्मणभोजनम्॥ ६७
अनडुत्सहितां गाञ्च दद्याद्विप्रेषु दक्षिणाम्॥ ६८
अपहृत्य सुवर्णन्तु ब्राह्मणस्य ततः स्वयम्।
गच्छेन्मुषलमादाय राजाभ्यासं बधाय तु॥ ६९
ततः शुद्धिमवाप्नोति राज्ञासौ मुक्त एव च।
कामकारकृतं यत् स्यान्नान्यथा बधमर्हति॥ ७०

आसनाच्छयनाद्यानात् सम्भाषात् सहभोजनात् ।
संक्रामन्ति हि पापानि तैलविन्दुरिवाम्भसि ॥ ७१
चान्द्रायणं यावकञ्च तुलापुरुष एव च ।
गवाञ्चैवानुगमनं सर्वपापप्रणाशनम् ॥ ७२
एतत् पाराशरं शास्त्रं श्लोकानां शतपञ्चकम् ।
द्विनवत्या समायुक्तं धर्म्मशास्त्रस्य संग्रहः ॥ ७३
यथाध्ययनकर्म्माणि धर्म्मशास्त्रमिदं तथा ।
अध्येतव्यं प्रयत्नेन नियतं स्वर्गगामिणा ॥ ७४
इति पाराशरे धर्म्मशास्त्रे द्वादशोऽध्यायः ॥ १२ ॥

---

# विष्णुसंहिता ।

---

## प्रथमोऽध्यायः ।

ब्रह्मरात्र्यां व्यतीतायां प्रबुद्धे पद्मसम्भवे ।
विष्णुः सिसृक्षुर्भूतानि ज्ञात्वा भूमिं जलानुगाम् ॥ १
जलक्रीडारुचि शुभं कल्पादिषु यथा पुरा ।
वाराहमास्थितो रूपमुज्जहार वसुन्धराम् ॥ २
वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥ ३
अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः स्रुवातुण्डः सामघोषमहास्वनः ॥ ४
धर्म्मसत्यमयः श्रीमान् क्रमविक्रमसत्कृतः ।
प्रायश्चित्तमयो वीरः पशुजानुर्महावृषः ॥ ५
उद्गात्रन्त्रो होमलिङ्गो वीजौषधिमहाफलः ।
वेद्यन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥ ६
वेदिस्कन्धो हविर्गन्धो हव्यकव्यादिवेगवान् ।
प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरन्वितः ॥ ७
दक्षिणाहृदयो योगमहामन्त्रमयो महान् ।
उपाकर्म्माष्ठरुचिरः प्रवर्ग्यावर्त्तभूषणः ॥ ८
नानाछन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायोऽसौ मणिशृङ्ग इवोच्छ्रितः ॥ ९

महीं सागरपर्य्यन्तां सशैलवनकाननाम् ।
एकार्णवजलभ्रष्टामेकार्णवगतः प्रभु ॥ १०
दंष्ट्राग्रेण समुद्धृत्य लोकानां हितकाम्यया ।
आदिदेवो महायोगी चकार जगतीं पुनः ॥ ११
एवं यज्ञवराहेण भूत्वा भूतहितार्थिना ।
उद्धृता पृथिवी सर्वा रसातलगता पुरा ॥ १२
उद्धृत्य निश्चले स्थाने स्थापिता च तथा स्वके ।
यथास्थानं विभज्यापस्तद्गता मधुसूदनः ॥ १३
सामुद्राश्च समुद्रेषु नादेयाश्च नदीषु च ।
पल्वलेषु च पाल्वल्यः सरःसु च सरोवराः ॥ १४
पातालसप्तकं चक्रे लोकानां सप्तकं तथा ।
द्वीपानामुदधीनांच स्थानानि विविधानि च ॥ १५
स्थानपालाल्लोकपालान्नदीशैलवनस्पतीन् ।
ऋषींश्च सप्तधर्मज्ञान् वेदान् साङ्गान् सुरासुरान् ॥ १६
पिशाचोरगगन्धर्वयक्षराक्षसमानुषान् ।
पशुपक्षिमृगाद्यांश्च भूतग्रामं चतुर्विधम् ।
मेघेन्द्रचापशम्पाद्यान् यज्ञांश्च विविधांस्तथा ॥ १७
एवं वराहो भगवान् कृत्वेदं सचराचरम् ।
जगाम लोकानामविज्ञातां तदा गतिम् ॥ १८
अविज्ञातां गतिं याते देवदेवे जनार्द्दने ।
वसुधा चिन्तयामास का धृतिर्म्मे भविष्यति ॥ १९
पृच्छामि कश्यपं गत्वा स मे वक्ष्यत्यसंशयम् ।
मदीयां वहते चिन्तां नित्यमेव महामुनिः ॥ २०

एवं सा निश्चयं कृत्वा देवी स्त्रीरूपधारिणी।
जगाम कश्यपं द्रष्टुं दृष्टवांस्ताञ्च कश्यपः॥ २१
नीलपङ्कजपत्राक्षीं शारदेन्दुनिभाननाम्।
अलिसङ्घालकां शुभ्रां बन्धुजीवाधरां शुभा॥ २२
सुभ्रूं सुसूक्ष्मदशनां चारुनासां नतभ्रुवम्।
कम्बुकण्ठीं संहतोरुं पीनोरुजघनस्थलीम्॥ २३
विरेजतुस्तनौ यस्याः समौ पीनौ निरन्तरौ।
शक्रेभकुम्भसङ्काशौ शातकुम्भसमद्युती॥ २४
मृणालकोमलौ बाहू करौ किशलयोपमौ।
रुक्मस्तम्भनिभावूरू गूढ़े श्लिष्टे च जानुनी॥ २५
जङ्घे विरोमे सुषमे पदावतिमनोरमौ।
जघनञ्च घनं मध्यं यथा केशरिणः शिशोः॥ २६
प्रभायुता नखास्ताम्रा रूपं सर्वमनोहरम्।
कुर्वाणां वीक्षितैर्नित्यं नीलोत्पलयुता दिशः॥ २७
कुर्वाणां प्रभया देवीं तथा वितिमिरा दिशः।
सुसूक्ष्मशुक्लवसनां रत्नोत्तमविभूषिताम्॥ २८
पदन्यासैर्वसुमतीं सपद्मामिव कुर्वतीम्।
रूपयौवनसम्पन्नां विनीतवदुपस्थिताम्।
समीपमागतां दृष्ट्वा पूजयामास कश्यपः॥ २९
उवाच तां वरारोहे विज्ञातं हृद्गतं मया।
धरे तव विशालाक्षि गच्छ देवि जनार्द्दनम्।
स ते वक्ष्यत्यशेषेण भाविनी ते यथा स्थितिः॥ ३०
क्षीरोदे वसतिस्तस्य मया ज्ञाता शुभानने।
ध्यानयोगेन चार्वङ्गि तज्ज्ञानं तत्प्रसादतः॥ ३१

इत्येवमुक्ता सम्पूज्य काश्यपं वसुधा ततः ।
प्रययौ केशवं द्रष्टुं क्षीरोदमथ सागरम् ॥ ३२
सा ददर्शामृतनिधिं चन्द्ररश्मिमनोहरम् ।
पवनक्षोभसञ्जातवीचीशतसमाकुलम् ॥ ३३
हिमवच्छतसङ्काशं भू[illegible] ।
वीचीहस्तैर्धवलितैराह्वयानमिव क्षितिम् ॥ ३४
तैरेव शुभ्रतां चन्द्रे विदधानमिवानिशम् ।
अन्तरस्थेन हरिणा विगताशेषकल्मषम् ।
यस्मात् तस्मात् तु बिभ्रन्तं सुशुभ्रां तनुमूर्जिताम् ॥ ३५
पाण्डरं खगमागम्यमधोभुवनवर्त्तिनम् ।
इन्द्रनीलकडाराढ्यं विपरीतमिवाम्बरम् ॥ ३६
फणावलीसमुद्भूतवनसङ्घसमाचितम् ।
निर्म्मोकमिव शेषाहेर्विस्तीर्णं तमतीव हि ॥ ३७
तं दृष्ट्वा तत्र मध्यस्थं ददृशे केशवालयम् ।
अनिर्द्देश्यपरीमाणमनिर्द्देश्यर्द्धिसंयुतम् ॥ ३८
शेषपर्य्यङ्कगं तस्मिन् ददर्श मधुसूदनम् ।
शेषाहिफणरत्नांशुदुर्विभाव्यमुखाम्बुजम् ॥ ३९
शशाङ्कशतसङ्काशं सूर्य्यायुतसमप्रभम् ।
पीतवाससम[illegible]भं सर्वरत्नविभूषितम् ॥ ४०
मुकुटेनार्कवर्णेन कुण्डलाभ्यां विराजितम् ।
संवाह्यमानाङ्घ्रियुगं लक्ष्म्या करतलैः शुभैः ।
शरीरधारिभिः शस्त्रैः सेव्यमानं समन्ततः ॥ ४१
तं दृष्ट्वा पुण्डरीकाक्षं ववन्दे मधुसूदनम् ।
जानुभ्यामवनीं गत्वा विज्ञापयति चाप्यथ ॥ ४२

उद्धृताहं त्वया देव रसातलतलं गता ।
स्वे स्थाने स्थापिता विष्णो लोकानां हितकाम्यया ॥ ४३
तत्राधुना मे देवेश का धृतिर्वै भविष्यति ।
एवमुक्तस्तदा देव्या देवो वचनमब्रवीत् ॥ ४४
वर्णाश्रमाचाररताः शास्त्रैकतत्परायणाः ।
त्वां धरे धारयिष्यन्ति तेषां त्वद्भार आहितः ॥ ४५
एवमुक्ता वसुमती देवदेवमभाषत ।
वर्णानामाश्रमाणाञ्च धर्म्मान् वद सनातनान् ।
त्वत्तोऽहं श्रोतुमिच्छामि त्वं हि मे परमा गतिः ॥ ४६
नमस्ते देवदेवेश देवारिबलसूदन ।
नारायण जगन्नाथ शङ्खचक्रगदाधर ॥ ४७
पद्मनाभ हृषीकेश महाबलपराक्रम ।
अतीन्द्रिय सुदुष्पार देव शार्ङ्गधनुर्द्धर ॥ ४८
वराह भीम गोविन्द पुराण पुरुषोत्तम ।
हिरण्यकेश विश्वाक्ष यज्ञमूर्त्ते निरञ्जन ॥ ४९
क्षेत्र क्षेत्रज्ञ लोकेश सलिलान्तरशायक ।
मन्त्र मन्त्रवताचिन्त्य वेदवेदाङ्गविग्रह ५०
जगतोऽस्य समग्रस्य सृष्टिसंहारकारक ।
सर्वधर्म्मज्ञ धर्म्माङ्ग धर्म्मयोने वरप्रद ॥ ५१
विश्वक्सेनाच्युत व्योम मधुकैटभसूदन ।
हरतां दंष्ट्रयाज्ञेय सर्व सर्वाभयप्रद ॥ ५२
वरेण्यानघ जीमूताव्यय निर्वाणकारक ।
आप्यायन क्षमास्थान चैत्याधार निश्चय ॥ ५३

सप्तशीर्षाध्वरगुरो पुराण पुरुषोत्तम ।
ध्रुवाक्षर सुनूक्ष्मेश भक्तवत्सल पावन ॥ ५४
त्वं गतिः सर्वदेवानां त्वं गतिर्ब्रह्मवादिनाम् ।
तथा विदितवेद्यानां गतिस्त्वं पुरुषोत्तम ॥ ५५
प्रपन्नास्मि जगन्नाथ ध्रुवं वाचस्पतिं प्रभुम् ।
सुब्रह्मण्यमनादिष्टं वसुखेलं वसुप्रदम् ॥ ५६
महायोगबलोपेतं श्रग्निगर्भं घृतार्चिषम् ।
वासुदेवं महात्मानं पुण्डरीकाक्षमच्युतम् ॥ ५७
सुरासुरगुरुं देवं विभुं भूतमहेश्वरम् ।
एकव्यूहं चतुर्बाहुं जगत्कारणकारणम् ॥ ५८
ब्रूहि मे भगवन् धर्मांश्चातुर्वर्ण्यस्य शाश्वतान् ।
आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ॥ ५९
एवमुक्तस्तु देवेशः पुनः क्षौणीमभाषत ।
शृणु देवि धरे धर्मांश्चातुर्वर्ण्यस्य शाश्वतान् ।
आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ॥ ६०
ये तु त्वां धारयिष्यन्ति सन्तस्तेषां परायणान् ।
निषसा भव वामोरु काञ्चनेऽस्मिन् वरासने ॥
सुखासीना निबोध त्वं धर्मान्निगदतो मम ।
शुश्रुवे वैष्णवान् धर्मान् सुखासीना धरा तदा ॥ ६२

इति वैष्णवे धर्मशास्त्रे प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः।

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति वर्णाश्चत्वारः॥ १॥ तेषामाद्या द्विजातयस्त्रयः॥ २॥ तेषां निषेकाद्यः श्मशानान्तो मन्त्रवत्क्रियासमूहः॥ ३॥ तेषांच धर्माः—ब्राह्मणस्याध्यापनम्; क्षत्रियस्य शस्त्रनित्यता; वैश्यस्य पशुपालनम्; शूद्रस्य द्विजातिशुश्रूषा; द्विजानां यजनाध्ययने॥ ४॥

अथैतेषां वृत्तयः—ब्राह्मणस्य याजनप्रतिग्रहौ; क्षत्रियस्य क्षितित्राणम्; कृषिगोरक्षवाणिज्यकुसीदयोनिपोषणानि वैश्यस्य; शूद्रस्य सर्वशिल्पानि॥ ५॥ आपद्यनन्तरा वृत्तिः॥ ६

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया॥ ७
आर्ज्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते॥ ८

इति वैष्णवे धर्मशास्त्रे द्वितीयोऽध्यायः॥ २॥

---

## तृतीयोऽध्यायः।

अथ राजधर्माः॥ १॥ प्रजापरिपालनम्, वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम्॥ २॥ राजा च जाङ्गलं पशव्यं शस्योपेतं देशमाश्रयेत् वैश्यशूद्रप्रायञ्च॥ ३॥ तत्र धन्व-

महीवारिवृक्षगिरिदुर्गाणामन्यतमं दुर्गमाश्रयेत् ॥ ४ ॥ तत्र स्वस्वग्रामाधिपान् कुर्य्यात् । दशाध्यक्षान् ॥ शताध्यक्षान् । देशाध्यक्षांश्च ॥ ५ ॥ ग्रामदोषाणां ग्रामाध्यक्षः परिहारं कुर्य्यात् ॥ ६ ॥ अशक्तो दशग्रामाध्यक्षाय निवेदयत् ॥ ७ ॥ सोऽप्यशक्तः शताध्यक्षाय । सोऽप्यशक्तो देशाध्यक्षाय । देशाध्यक्षोऽपि सर्वात्मना दोषमुच्छिन्द्यात् ॥ ८ ॥ आकरशुल्कतरनागवनेष्वाप्तान् नियुञ्जीत । धर्म्मिष्ठान् धर्म्मकार्य्येषु । निपुणानर्थकार्य्येषु । शूरान् संग्रामकर्म्मसु । उग्रानुग्रेषु । षण्ढान् स्त्रीषु ॥ ९ ॥ प्रजाभ्यो बल्यर्थं संवत्सरेण धान्यतः षष्ठमंशमादद्यात् । सर्वशस्येभ्यश्च ॥ १० ॥ द्विकं शतं पशुहिरण्येभ्यो वस्त्रेभ्यश्च ॥ ११ ॥ मांसमधुघृतौषधिगन्धपुष्पमूलफल-रसदारुपत्राजिनमृद्भाण्डाश्मभाण्ड-वैदलेभ्यः षष्ठभागम् ॥ १२ ॥ ब्राह्मणेभ्य करादानं न कुर्य्यात्, ते हि राज्ञो धर्म्मकरदाः ॥ १३ ॥ राजा च प्रजाभ्यः सुकृतदुष्कृतषष्ठांशभाक् ॥ १४ ॥ स्वदेशपण्याच्च शुल्कांशं दशममादद्यात्, परदेशपण्याच्चविंशतितमम् ॥ १५ ॥ शुल्कस्थानमपक्रामन् सर्व्वापहारमाप्नुयात् ॥ १६ ॥ शिल्पिनः कर्म्मजीविनश्च शूद्राश्च मासेनैकं राज्ञः कर्म्म कुर्य्युः ॥ १७ ॥ स्वाम्यमात्यदुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतयः ॥ १८ ॥ तद्दूषकांश्च हन्यात् ॥ १९ ॥ स्वराष्ट्रपरराष्ट्रयोश्च चारचक्षुः स्यात् ॥ २० ॥ साधूनां पूजनं कुर्य्यात् ॥ २१ ॥ दुष्टांश्च हन्यात् ॥ २२ ॥ शत्रुमित्रोदासीनमध्यमेषु सामभेददानदण्डान् यथार्ह यथाकालं प्रयुञ्जीत ॥ २३ ॥ सन्धिविग्रहयानासनसंश्रयद्वैधीभावांश्च यथाकालमाश्रयेत् ॥ २४ ॥ चैत्रे मार्गशीर्षे वा यात्रां

यायात्। परस्य व्यसने वा ॥ २५ ॥ परदेशावाप्तौ तद्देश-धर्मान् नोच्छिन्द्यात् ॥ २६ ॥ परेणाभियुक्तश्च सर्वात्मना स्वं राष्ट्रं गोपायेत् ॥ २७ ॥ नास्ति राज्ञां समरे तनुत्याग-सदृशो धर्मः ॥ २८ ॥ गोब्राह्मणनृपतिमित्रधनदारजीवित-रक्षणाद्ये हतास्ते स्वर्गभाजः। वर्णसङ्कररक्षणार्थे च ॥ २९ ॥ राजा परपुरावाप्तौ तु तत्र तत्कुलीनमभिषिञ्चेत् ॥ ३० ॥ न राजकुलमुच्छिन्द्यात् अन्यत्राकुलीनराजकुलात् ॥ ३१ ॥ मृगयाक्षस्त्रीपानेष्वभिरतिं न कुर्य्यात्। ३२। आद्यदाराणां नोच्छिन्द्यात्। ३३। नापात्रवर्षी स्यात्। ३४। आकरेभ्यः सर्वमादद्यात्। ३५। निधिं लब्ध्वा तदर्द्धं ब्राह्मणेभ्यो दद्यात्, द्वितीयमर्द्धं कोषे प्रवेशयेत्। ३६। निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात्। ३७। क्षत्रियश्चतुर्थमंशं राज्ञे दद्यात् चतुर्थ-मंशं ब्राह्मणेभ्योऽर्द्धमादद्यात्। ३८। वैश्यश्चतुर्थमंशं राज्ञे दद्यात् ब्राह्मणेभ्योऽर्द्धमंशमादद्यात्। ३९। शूद्रश्चावाप्तं द्वादशधा विभज्य पंचांशान् राज्ञे दद्यात् पंचांशान् ब्राह्म-णेभ्योऽंशद्वयमादद्यात्। ४०। अनिवेदितविज्ञातस्य सर्व-मपहरेत् ॥ ४१। स्वनिहिताद्राज्ञे ब्राह्मणवर्ज्जं द्वादशमंशं दद्युः। ४२। परनिहितं स्वनिहितमिति ब्रुवंस्तत्सं दण्ड-मावहेत्। ४३। बालानाथस्त्रीधनानि च राजा परि पालयेत्। ४४। चौरहृतं धनमवाप्य सर्वमेव सर्ववर्णेभ्यो दद्यात्। ४५। अनवाप्य च स्वकोषादेव दद्यात्। ४६। शान्तिस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत्। ४७। परचक्रोप-घातांश्च शस्त्रनित्यतया। ४८। वेदेतिहासधर्मशास्त्रार्थ-कुशलं कुलीनमव्यङ्गं तपस्विनं पुरोहितंच वरयेत्। शुचीन-

लुब्धानवहिताञ्छीलसम्पन्नान् सर्व्वार्थेषु च सहायान् । ४९ ॥ स्वयमेव व्यवहारान् पश्येद्विद्वद्भिर्ब्राह्मणैः सार्द्धम् । ५० ॥ व्यवहारादर्शने ब्राह्मणं नियुञ्ज्यात् । ५१ । जन्मकर्म्मव्रतोपेताश्च राज्ञा सभासदः कार्य्या रिपौ मित्रे च ये समाः कामक्रोधभयलोभादिभिः कार्य्यार्थिभिरनाहार्य्याः । ५२ ॥ राजा च सर्व्वकार्य्येषु सांवत्सराधीनः स्यात् । ५३ । देवब्राह्मणान् सततमेव पूजयेत् । ५४ । वृद्धसेवी भवेत् । यज्ञयाजी च । ५५ । न चास्य विषये ब्राह्मणः क्षुधार्त्तोऽवसीदेत् । न चान्योऽपि सत्कर्म्मनिरतः । ५६ । ब्राह्मणेभ्यश्च भुवं प्रतिपादयेत् । ५७ । तेषां येषाञ्च प्रतिपादयेत् स्ववंश्यान् आत्मनश्च प्रमाणं दानच्छेदोपवर्णनञ्च पटे ताम्रपट्टे वा लिखितं स्वमुद्राङ्कितं चागामिनृपविज्ञापनार्थं दद्यात् । ५८ । परदत्ताञ्च भुवं नापहरेत् । ५९ । ब्राह्मणेभ्यः सर्व्वदायान् प्रयच्छेत् । ६० । सर्व्वतश्चात्मानं गोपायेत् । ६१ । सुदर्शनश्च स्यात् । विषघ्नागदमन्त्रधारी च । नापरीक्षितमुपयुञ्ज्यात् । ६२ । स्मितपूर्व्वाभिभाषी स्यात् । ६३ । वध्येष्वपि भ्रुकुटीमाचरेत् । ६४ । अपराधानुरूपञ्च दण्डं दण्ड्येषु दापयेत् । ६५ । सम्यग् दण्डप्रणयनं कुर्य्यात् । ६६ । द्वितीयमपराधं न कस्यचित् क्षमेत स्वधर्म्ममपालयन् नादण्ड्यो नामास्ति राज्ञः ।

यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः ।
प्रजास्तत्र विवर्द्धन्ते नेता चेत् साधु पश्यति ॥ ६७
स्वराष्ट्रे न्यायदण्डः स्याद् भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ६८

एवं वृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः।
विस्तीर्य्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥ ६९
प्रजासुखे सुखी राजा तद्दुःखे यश्च दुःखितः।
स कीर्त्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते ॥ ७०

इति वैष्णवे धर्म्मशास्त्रे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः।

जालस्थार्कमरीचिगतं रजस्त्रसरेणुसंज्ञकम्। १। तद-
ष्टकं लिक्षा। २॥ तत्त्रयं राजसर्षपः। ३। तत्त्रयं गौर-
सर्षपः। ४। तत्षट्कं यवः। ५। तत्त्रयं कृष्णलम्। ६।
तत्पञ्चकं माषः। ७। तद्द्वादशमक्षार्द्धम्। ८। अक्षार्द्धमेकं
सचतुर्म्माषकं सुवर्णः। ९। चतुःसुवर्णको निष्कः। १०।
द्वे कृष्णले समधृते रूप्यमाषकः। ११। तत्षोडशकं धरणम्।
१२। ताम्रकार्षिकः कार्षापणः। १३।

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः ॥ १४

इति वैष्णवे धर्म्मशास्त्रे चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः।

अथ महापातकिनः ब्राह्मणवर्ज्जं सर्व्वे वध्याः। १। न
शारीरो ब्राह्मणस्य दण्डः। २। स्वदेशाद्ब्राह्मणं कृताङ्कं
विवासयेत्। ३। तस्य च ब्रह्महत्यायामशिरस्कं पुरुषं
ललाटे कुर्य्यात्। ४। सुराध्वजं सुरापाने। ५। श्वपदं

स्तेये। ६। भगं गुरुतल्पगमने। ७। अन्यत्रापि वध्यकर्म्मणि
तिष्ठन्तं समग्रधनमक्षतं विवासयेत्। ८। कूटशासनकर्त्तॄंश्च
राजा हन्यात्। ९। कूटलेख्यकारांश्च। १०। गरदाग्निद-
प्रसह्यतस्करान् स्त्रीबालपुरुषघातिनश्च। ११। ये च धान्यं
दशभ्यः कुम्भेभ्योऽधिकमपहरेयुः। १२। धरिमेयानां
शतादभ्यधिकम्। १३। ये चाकुलीना राज्यमभिकामयेयुः।
१४। सेतुभेदकांश्च। १५। प्रसह्यतस्कराणामवकाशभक्त-
प्रदांश्च। १६। अन्यत्र राजाशक्तेः। १७। स्त्रियमशक्त-
भर्त्तृकां तदतिक्रमणीं च। १८। हीनवर्णोऽधिकवर्णस्य
येनाङ्गेनापराधं कुर्य्यात् तदेवास्य शातयेत्। १९। एका-
सनोपवेशी कट्यां कृताङ्को निर्वास्यः। २०। निष्ठीव्योष्ठ-
द्वयविहीनः कार्य्यः। २१। अवशर्द्धयिता च गुदहीनः। २२।
आक्रोशयिता च विजिह्वः। २३। दर्पेण धर्म्मोपदेशकारिणो
राजा तप्तमासेचयेत् तैलमास्ये। २४। द्रोहेण च नाम-
जातिग्रहणे दशाङ्गुलोऽस्य शङ्कुर्निखेयः। २५। श्रुतदेश-
जातिकर्म्मणामन्यथावादी कार्षापणशतद्वयं दण्ड्यः। २६।
काणखञ्जादीनां तथावाद्यपि कार्षापणद्वयम्। २७। गुरु-
नाक्षिपत् कार्षापणशतम्। २८। परस्य पतनीयाक्षेपे कृते
तूत्तमसाहसम्। २९। उपपातकयुक्ते मध्यमम्। ३०।
त्रैविद्यवृद्धानां क्षेपे जातिपूगानांच। ३१। ग्रामदेशयोः
प्रथमसाहसम्। ३२। न्यङ्गतायुक्ताक्षेपे कार्य्यपणशतम्। ३३।
मातृयुक्ते तूत्तमम्। ३४। सवर्णाक्रोशने द्वादशपणान्
दण्ड्यः। ३५। हीनवर्णाक्रोशने षड्दण्ड्यः। ३६। यथा-
कालमुत्तमसवर्णाक्षेपे तत्प्रमाणो दण्डः। ३७। त्रयो वा

कार्षापणाः। ३८। शुष्कवाक्याभिधाने त्वेवमेव। ३९। पारजयी सवर्णागमने तूत्तमसाहसं दण्ड्यः। ४०। हीनवर्णागमने मध्यमम्। ४१। गोगमने च। ४२। अन्त्यागमने वध्यः। ४३। पशुगमने कार्षापणशतं दण्डः॥ ४४॥ दोषमनाख्याय कन्यां प्रयच्छंश्च। ४५। तांच विभृयात्।४६। अदुष्टां दुष्टामिति ब्रुवन्नुत्तमसाहसम्। ४७। गजाश्वोष्ट्रगोघाती त्वेककरपादः कार्य्यः। ४८। विमांसविक्रयी च। ४९। ग्राम्यपशुघाती कार्षापणशतं दण्ड्यः। ५०। पशुस्वामिने तन्मूल्यं दद्यात्। ५१। आरण्यपशुघाती पंचाशतं कार्षापणान्। ५२। पक्षिघाती मत्स्यघाती च दश कार्षापणान्। ५३। कीटोपघाती च कार्षापणम्। ५४। फलोपगमद्रुमच्छेदी तूत्तमसाहसम्। ५५। पुष्पोपगमद्रुमच्छेदी मध्यमम्। ५६। वल्लीगुल्मलताच्छेदी कार्षापणशतम्। ५७। तृणच्छेद्येकम्। ५८। सर्वे च तत्स्वामिनां तदुत्पत्तिम्। ५९। हस्तेनावगोरयिता दश कार्षापणान्। ६०। पादेन विंशतिम्। ६१। काष्ठेन प्रथमसाहसम्। ६२। पाषाणेन मध्यमम्। ६३। शस्त्रेणोत्तमम्। ६४। पादकेशांशुककरलुण्ठने दश पणान् दण्ड्यः। ६५। शोणितेन विना दुःखमुत्पादयिता द्वात्रिंशत्पणान्। ६६। सह शोणितेन चतुःषष्टिम्। ६७। करपाददन्तभङ्गे कर्णनासाविकर्त्तने मध्यमम्। ६८। चेष्टाभोजनवाग्रोधे प्रहारदाने च। ६९। नेत्रकन्धराबाहुसक्थ्यंसभङ्गे चोत्तमम्। ७०। उभयनेत्रभेदिनं राजा यावज्जीवं बन्धनान्न विमुञ्चेत्। ७१। तादृशमेव वा कुर्य्यात्। ७२। एकं बहूनां विघ्नतां प्रत्येकमुक्ता-

दण्डाद्विगुणः। ७३। उत्क्रोशन्तमनभिधावतां तत्समीपवर्त्तिनां संसरताञ्च। ७४। सर्वे च पुरुषपीड़ाकरास्तदुत्थानव्ययं दद्युः। ७५। ग्राम्यपशुपीड़ाकराश्च। ७६। गोऽश्वोष्ट्रगजापहार्य्येकपादकरः कार्य्यः। ७७। अजावापहार्य्येककरश्च। ७८। धान्यापहार्य्येकादशगुणं दण्ड्यः। ७९। शस्यापहारी च। ८०। सुवर्णरजतवस्त्राणां पञ्चाशतस्त्वभ्यधिकमपहरन् विकरः। ८१। तदूनमेकादशगुणं दण्ड्यः। ८२। सूत्रकार्पासगोमयगुड़दधिक्षीरतक्रतृण-लवण-मृद्भस्मपक्षिमत्स्य-घृततैल-मांस-मधु-वैदल-वेणुमृन्मयलोहभाण्डानामपहर्त्ता मूल्यात् त्रिगुणं दण्ड्यः। ८३। पक्वान्नानाञ्च। ८४। पुष्पहरितगुल्मवल्लीलतापर्णानामपहरणे पंच कृष्णलान्। ८५। शाकमूलफलानांच। ८६। रत्नापहार्य्युत्तमसाहसम्। ८७। अनुक्तद्रव्याणामपहर्त्ता मूल्यसमम्। ८८। स्तेनाः सर्वमपहृतं धनिकस्य दाप्याः। ८९। ततस्तेषामभिहितदण्डप्रयोगः। ९०। येषां देयः पन्थास्तेषामपथदायी कार्षापणानां पंचविंशतिं दण्ड्यः। ९१। आसनार्हस्यासनमददच्च। ९२। पूजार्हमपूजयंश्च। ९३। प्रातिवेश्यब्राह्मणे निमन्त्रणातिक्रमे च। ९४। निमन्त्रयित्वा भोजनादायिनश्च। ९५। निमन्त्रितस्तथेत्युक्त्वाभुञ्जानः सुवर्णमाषकं निमन्त्रयितुश्च द्विगुणमन्नम। ९६। अभक्ष्येण ब्राह्मणदूषयिता षोड़श सुवर्णान्। ९७। जात्यपहारिणा शतम्। ९८। सुरया बध्यः। ९९। क्षत्रियं दूषयितुस्तदर्द्धम्। १००। वैश्यं दूषयितुस्तदर्द्धमपि। १०१। शूद्रं दूषयितुः प्रथमसाहसम्। १०२। कामकारेणास्पृश्यस्तैवर्णिकं स्पृशन्

वैश्य:। १०३। रजस्वलां शिफाभिस्ताड़येत्। १०४।
पथ्युद्यानोदकसमीपेऽशुचिकारी पणशतम्। १०५। तच्चा-
पास्यात्। १०६। गृहभूकुड्याद्यभेत्ता मध्यमसाहसं
दण्ड्य:। १०७। तंच योजयेत्। १०८। गृहे पीड़ाकरं
द्रव्यं प्रक्षिपन् पणशतम्। १०९। साधारण्यापलापी च।
११०। योषितस्याप्रदाता च। १११। पितृपुत्राचार्य-
याज्यर्त्विजामन्योन्यापतितत्यागी च। ११२। न च तान्
जह्यात्। ११३। शूद्रप्रव्रजितां दैवे पित्र्ये भोजकश्च। ११४।
अयोग्यकर्म्मकारी च। ११५। समुद्रगृहभेदक:। ११६।
अनियुक्तः शपथकारी। ११७। पशूनां पुंस्त्वोपघातकारी।
११८। पितापुत्रविरोधे तु साक्षिणां दशपणो दण्डः।
११९। यस्तयोश्चान्तर: स्यात् तस्योत्तमसाहसम्। १२०।
तुलामानकूटकर्म्मकर्त्तुश्च। १२१। तदकूटे कूटवादिनश्च।
१२२। द्रव्याणां प्रतिरूपविक्रयिकस्य च। १२३। सम्भूय
वणिजां पण्यमनर्घेणावरुन्धताम्। १२४। प्रत्येकं विक्रीणा-
नाञ्च। १२५। गृहीतमूल्यं पण्यं यः क्रेतुर्नैव दद्यात् तस्यासौ
सोदयं दाप्य:। १२६। राजा च पणशतं दण्ड्य:। १२७।
क्रीतमक्रीणतो या हानि: सा क्रेतुरेव स्यात्। १२८।
राजविनिषिद्धं विक्रीणतस्तदपहार:। १२९। तारिकः
स्थलजं शुल्कं गृह्णन् दश पणान् दण्ड्य:। १३०। ब्रह्म-
चारिवानप्रस्थभिक्षुगुर्व्विणीतीर्थानुसारिणां नाविकः शुल्क-
माददानश्च। १३१। तच्च तेषां दद्यात्। १३२। द्युते कूटाक्ष-
देविनां करच्छेदः। १३३। उपधिदेविनां सन्दंशच्छेदः।
१३४। ग्रन्थिभेदकानां करच्छेदः। १३५। दिवा पशूनां

हकाद्युपघाते पाले त्वनायति पालदोषः॥ १३६। विनष्ट-
पशुमूल्यञ्च स्वामिने दद्यात्। १३७। अननुज्ञातां दुहन्
पंचविंशतिकार्षापणान् दण्ड्यः। १३८। महिषी चेच्छस्य-
नाशं कुर्य्यात् तत्पालकस्त्वष्टौ माषकान् दण्ड्यः। १३९।
अपालायाः स्वामी। १४०। अश्वस्तूष्ट्री गर्द्दभो वा। १४१।
गौश्चेत् तदर्द्धम्। १४२। तदर्द्धमजाविकम्। १४३। भक्ष-
यित्वोपविष्टेषु द्विगुणम्। १४४। सर्व्वत्र स्वामिने विनष्टशस्य-
मूल्यंच। १४५। पथि ग्रामे विवीतान्ते न दोषः। १४६।
अनावृते च। १४७। अल्पकालम्। १४८। उत्सृष्टवृषभ-
सूतिकानांच। १४९। यस्तूत्तमवर्णान् दास्ये नियोजयेत्
तस्योत्तमसाहसो दण्डः। १५०। त्यक्तप्रव्रज्यो राज्ञो दास्यं
कुर्य्यात्। १५१। भृतकश्चापूर्णकाले भृतिं त्यजन् सकलमेव-
मूल्यं दद्यात्। १५२। राज्ञे च पणशतं दद्यात्। १५३।
तद्दोषेण यद्विनश्येत् तत् स्वामिने। अन्यत्र दैवोपघातात्।
१५४। स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्वं
मूल्यं दद्यात्। १५५। पणशतंच राजनि। अन्यत्र भृतका-
दोषात्। १५६। यः कन्यां पूर्वदत्तामन्यस्मै दद्यात् स चौर-
वच्छास्यः। वरदोषं विना। १५७। निर्द्दोषां परित्यजन्
पत्नीञ्च। १५८। अजानानः प्रकाशं यः परद्रव्यं क्रीणी-
यात् तत्र तस्यादोषः। १५९। स्वामी द्रव्यमाप्नुयात्। १६०।
यद्यप्रकाशं हीनमूल्यञ्च क्रीणीयात् तदा क्रेता विक्रेता च
चौरवच्छास्यौ। १६१। गणद्रव्यापहारी विवास्यः। १६२।
तत्संविदं यश्च लङ्घयेत्। १६३। निक्षेपापहार्य्यर्थवृद्धि-
सहितं धनं धनिकस्य दाप्यः। १६४। राज्ञा चौरवच्छास्य।

१६५। यच्चानिक्षिप्तं निक्षिप्तमिति ब्रूयात्। १६६। सीमा भेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां लिङ्गान्वितां कारयेत्। १६७। जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः। १६८। अभक्ष्यस्याविक्रेयस्य च विक्रयी। १६९। देवप्रतिमाभेदकश्चोत्तमसाहसं दण्डनीयः। १७०। भिषङ्-मिथ्याचरन्नुत्तमेषु पुरुषेषु। १७१। मध्यमेषु मध्यमम्।१७२। तिर्य्यक्षु प्रथमम्। १७३। प्रतिश्रुतस्याप्रदायी तद्दापयित्वा प्रथमसाहसं दण्ड्यः। १७४। कूटसाक्षिणां सर्व्वस्वापहारः कार्य्यः। १७५। उत्कोचोपजीविनां सभ्यानाञ्च। १७६। गोचर्म्ममात्राधिकां भुवमन्यस्याधिकृतां तस्मादनिर्म्मोच्यान्यस्य यः प्रयच्छेत् स वध्यः। १७७। ऊनाञ्चेत् षोड़श सुवर्णान् दण्ड्यः॥ १७८

एकोऽश्नीयाद्यदुत्पन्नं नरः संवत्सरं फलम्।
गोचर्म्ममात्रा सा क्षौणी स्तोका वा यदि वा बहुः॥१७९
ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ।
यस्य भुक्तिः फलं तस्य बलात्कारं विना कृता॥ १८०
सागमेन च भोगेन भुक्तं सम्यग्यदा भवेत्।
आहर्त्ता लभते तत्र नापहार्य्यन्तु तत् क्वचित्॥ १८१
पित्रा भुक्तन्तु यद्द्रव्यं भुक्त्याचारेण धर्म्मतः।
तस्मिन् प्रेते न वाच्योऽसौ भुक्त्याप्राप्तं हि तस्य तत्॥१८२
त्रिभिरेव च या भुक्ता पुरुषैर्भूर्यथाविधि।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात्॥ १८३
नखिनां दंष्ट्रिणाञ्चैव शृङ्गिणामाततायिनाम्।
हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक्॥ १८४

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥ १८५
नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति ॥ १८६
उद्यतासिविषाग्निञ्च शापोद्यतकरं तथा ।
आथर्वणेन हन्तारं पिशुनंचैव राजसु ॥ १८७
भार्य्यातिक्रमिणंचैव विद्यात् सप्ताततायिनः ।
यशोवित्तहरानन्यानाहुर्धर्म्मार्थहारकान् ॥ १८८
उद्देशतस्ते कथितो धरे दण्डविधिर्मया ।
सर्वेषामपराधानां विस्तराद्धतिविस्तरः ॥ १८९
अपराधेषु चान्येषु ज्ञात्वा जातिं धनं वयः ।
दण्डं प्रकल्पयेद्राजा सम्मन्त्र्य ब्राह्मणैः सह ॥ १९०
दण्ड्यं प्रमोचयन् दण्डाद्द्विगुणं दण्डमावहेत् ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥ १९१
यस्य चौरः पुरे नास्ति नान्यस्त्री गो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥ १९२
इति वैष्णवे धर्म्मशास्त्रे पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ।

अथोत्तमर्णोऽधमर्णादृयथादत्तमर्थं गृह्णीयात् ॥ १ ॥ द्विकं त्रिकं चतुष्कं पञ्चकञ्च शतं वर्णानुक्रमेण प्रतिमासम् ।२। सर्वे वर्णा वा स्वप्रतिपन्नां वृद्धिं दद्युः ।३। अकृतामपि

त्सरातिक्रमेण यथाविहिताम् । ४ । आध्युपभोगे वृद्ध्य-
ाव: । ५ । दैवराजोपघातादृते विनष्टमाधिमुत्तमर्णो
द्यात् । ६ । अन्तवृद्धौ प्रविष्टायामपि । ७ । न स्थावर-
ाधिश्चेते वचनात् । ८ । गृहीतधनप्रवेशार्थमेव यत् स्थावरं
त्तं तद्गृहीतधनप्रवेशे दद्यात् । ९ । दीयमानं प्रयुक्ता-
र्थमुत्तमर्णस्याग्टह्णतस्ततः परं न वर्द्धते । १० । हिरण्यस्य
रा वृद्धिर्द्विगुणा । ११ । धान्यस्य त्रिगुणा । १२ । वस्त्रस्य
तुर्गुणा । १३ । रसस्याष्टगुणा । १४ । सन्ततिः स्त्रीपशू-
ाम् । १५ । किण्वकार्पाससूत्रचर्म्मायुधेष्टकाङ्गाराणाम-
्या । १६ । अनुक्तानां द्विगुणा । १७ । प्रयुक्तमर्थं यथा-
थञ्चित् साधयन्न राज्ञो वाच्यः स्यात् । १८ । साध्यमान-
ेद्राजानमभिगच्छेत् तत्समं दण्ड्यः । १९ । उत्तमर्ण-
ेद्राजानमियात् तद्विभावितोऽधमर्णो राज्ञे धनदशभाग-
म्मितं दण्डं दद्यात् । २० । प्राप्तार्थश्चोत्तमर्णो विंशति-
ममंशम् । २१ । सर्वापलापेकदेशविभावितोऽपि सर्वं
द्यात् । २२ । तस्य च भावनास्तिस्रो भवन्ति लिखितं
ाक्षिणः समयक्रिया च । २३ । ससाक्षिकमार्त्तं ससाक्षि-
मेव दद्यात् । २४ । लिखितार्थे प्रविष्टे लिखितं पाटयेत् ।
२५ । असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं
द्यात् । २६ । धनग्राहिणि प्रेते प्रव्रजिते द्विदशसमाः
वसिते वा तत्पुत्रपौत्रैर्धनं देयम् । २७ । नातः परम-
ीप्सुभिः । २८ । सपुत्रस्य वा पुत्रस्य वा ऋक्थग्राही ऋणं
द्यात् । २९ । निर्द्धनस्य स्त्रीग्राही । ३० । न स्त्री पतिपुत्र-
ृतम् । ३१ । न स्त्रीकृतं पतिपुत्रौ । ३२ । न पिता पुत्र-

कृतम्। ३३। अविभक्तैः कृतमृणं यस्तिष्ठेत् स दद्यात्।३४।
पैतृकमृणमविभक्तानां भ्रातृणांच। ३५। विभक्ताश्च दाया-
नुरूपमंशम्। ३६। गोपशौण्डिकशैलूषरजकव्याधस्त्रीणां
पतिर्दद्यात्। ३७। वाक्प्रतिपन्नं कुटुम्बिना देयम्। ३८।
कस्यचित् कुटुम्बार्थे कृतंच। ३९।

यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम्।
न दद्याल्लोभतः पश्चात्तथा वृद्धिमवाप्नुयात्॥ ४०
दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते।
आद्यौ तु वितथे दाप्याबितरस्य सुता अपि॥ ४१
बहवश्चेत् प्रतिभुवो दद्युस्तेऽर्थं यथाकृतम्।
अर्थेऽविशेषिते त्वेषु धनिकच्छन्दतः क्रिया॥ ४२
यमर्थं तभूर्दद्याद्धनिकेनोपपीड़ितः।
ऋणिकस्तं तभुवे द्विगुणं दातुमर्हति॥ ४३

इति वैष्णवे धर्म्मशास्त्रे षष्ठोऽध्यायः॥ ६॥

---

## सप्तमोऽध्यायः।

अथ लेख्यं त्रिविधम्। १। राजसाक्षिकं ससाक्षिक-
मसाक्षिकंच। २। राजाधिकरणे तन्नियुक्त-कायस्थकृतं
तदध्यक्ष-करचिह्नितं राजसाक्षिकम्। ३। यत्र क्वचन येन
केनचिल्लिखितं साक्षिभिः स्वहस्तचिह्नितं ससाक्षिकम्। ४।
स्वहस्तलिखितमसाक्षिकम्। ५। तद्बलात्कारितमप्रमाणम्।
६। उपधिकृताश्च सर्व एव। ७। दूषितकर्मदुष्टसाक्ष्यङ्कितं

तत् ससाक्षिकमपि। ८। तादृग्विधेन लिखितञ्च। ९। स्त्रीबालास्वतन्त्रमत्तोन्मत्तभीतताड़ितकृतञ्च। १०। देशाचाराविरुद्धं व्यक्ताधिकृतलक्षणमलुप्तक्रमाक्षरं प्रमाणम्। ११।

वर्णैश्च तत्कृतैश्चिह्नैः पत्रैरेव च युक्तिभिः।
सन्दिग्धं साधयेल्लेख्यं तद्युक्तिप्रतिरूपितैः॥ १२
अधमर्णो धनिको वापि साक्षी वा लेखकोऽपि वा।
म्रियते तत्र तल्लेख्यं तत् स्वहस्तैः प्रसाधयेत्॥ १३

इति वैष्णवे धर्मशास्त्रे सप्तमोऽध्यायः॥ ७॥

---

## अष्टमोऽध्यायः।

अथासाक्षिणः। १। न राजश्रोत्रियप्रव्रजितकितवतस्करपराधीनस्त्रीबालसाहसिकातिवृद्धमत्तोन्मत्ताभिशस्तपतितक्षुत्तृष्णार्त्तव्यसनिरागान्धाः। २। रिपुमित्रार्थसम्बन्धिविकर्म्मस्थदृष्टदोषसहायाश्च। ३। अनिर्द्दिष्टस्तु साक्षित्वे यश्चोपेत्य ब्रूयात्। ४। एकश्चासाक्षी। ५। स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु साक्षिणो न परीक्ष्यस्याः। ६। अथ साक्षिणः। ७। कुलजा वृत्तवित्तसम्पन्ना यज्वानस्तपस्विनः पुत्रिणो धर्म्मज्ञा अधीयानाः सत्यवन्तस्त्रैविद्यवृद्धाश्च। ८। अभिहितगुणसम्पन्न उभयानुमत एकोऽपि ।९। द्वयोर्विवदमानयोर्यस्य पूर्ववादस्तस्य साक्षिणः प्रष्टव्याः ।१०। आधर्य्य कार्य्यवशाद्यत्र पूर्वपक्षस्य भवेत् तत्रप्रतिवादिनोऽपि। ११। उद्दिष्टसाक्षिणि मृते देशान्तरगते वा तदभि-

हितज्ञातारः प्रमाणम्।१२। समक्षदर्शनात् साक्षी श्रवणाद्वा।१३। साक्षिणश्च सत्येन पूयन्ते।१४। वर्णिनां यत्र वधस्तत्रानृतेन।१५। तत्पावनाय कुष्माण्डीभिर्द्विजोऽग्निं जुहुयात्।१६। शूद्र एकाह्निकं गोर्ग्रासं दद्यात्।१७। स्वभावविकृतौ मुखवर्णविनाशेऽसम्बन्धप्रलापे च कूटसाक्षिणं विद्यात्।१८। साक्षिणश्चाहूयादित्योदये कृतशपथान् पृच्छेत्।१९। ब्रूहीति ब्राह्मणं पृच्छेत्। २०। सत्यं ब्रूहीति राजन्यम्।२१। गोवीजकाञ्चनैर्वैश्यम्॥२२। सर्वमहापातकैस्तु शूद्रम्।२३। साक्षिणश्च श्रावयेत्।२४। ये महापातकिनो लोका ये चोपपातकिनस्ते कूटसाक्षिणामपि।२५। जननमरणान्तरे कृतसुकृतहानिश्च।२६। सत्येनादित्यस्तपति।२७। सत्येन भाति चन्द्रमाः।२८। सत्येन वाति पवनः।२९। सत्येन भूर्धारयति।३०। सत्येनापस्तिष्ठन्ति।३१। सत्येनाग्निस्तिष्ठति।३२। खञ्च सत्येन।३३। सत्येन देवाः।३४। सत्येन यज्ञाः।३५।

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥ ३६॥
जानन्तोऽपि हि ये साक्ष्ये तूष्णीम्भूता उपासते।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चाप्यथ।
एवं हि साक्षिणं पृच्छेद्वर्णानुक्रमतो नृपः॥ ३७
यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः॥ ३८
बहुत्वं प्रतिगृह्णीयात् साक्षिद्वैधे नराधिपः।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान्। ३९

यस्मिन् यस्मिन् विवादे तु कूटसाक्ष्यनृतं वदेत्।
तत्तत् कार्य्यं निवर्त्तेत कृतं चाप्यकृतं भवेत्॥ ४०

इति वैष्णवे धर्म्मशास्त्रे अष्टमोऽध्यायः॥ ८॥

---

## नवमोऽध्यायः।

अथ समयक्रिया। राजद्रोहसाहसेषु यथाकामम्। निक्षेपस्तेयेष्वर्थप्रमाणम्। सर्व्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत्। तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत्। द्विकृष्णलोने तिलकरम्। त्रिकृष्णलोने रजतकरम्। चतुःकृष्णलोने सुवर्णकरम्। पञ्चकृष्णलोने सीतोद्धृतमहीकरम्। सुवर्णार्द्धोने कोशो देयः शूद्रस्य। ततः परं यथार्हं धटाग्न्युदकविषाणामन्यतमम्। द्विगुणेऽर्थे यथाभिहिता समयक्रिया वैश्यस्य। त्रिगुणे राजन्यस्य। कोशवर्ज्जं चतुर्गुणे ब्राह्मणस्य। न ब्राह्मणस्य कोशं दद्यात्। अन्यत्रागामिकालसमयनिबन्धनक्रियातः। कोशस्थाने ब्राह्मणं सीतोद्धृतमहीकरमेव। प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत्। सत्सु विदितं सच्चरितं न महत्यर्थेऽपि। अभियोक्ता वर्त्तयेच्छीर्षम्। अभियुक्तश्च दिव्यं कुर्य्यात्। राजद्रोहसाहसेषु विनापि शीर्षवर्त्तनात्। स्त्रीब्राह्म[illegible]र्थरोगिणां तुला देया। सा च न वाति वायौ। न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः। शरद्ग्रीष्मयोश्च। न कुष्ठिपैत्तिकब्राह्मणानां विषं देयम्। प्रावृषि च। न श्लेष्मव्याध्यर्द्दितानां

## द्वादशोऽध्यायः।

अथोदकम्। पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्ज्जितेऽम्भसि। तत्रानाभिमग्नस्यारागद्वेषिणः पुरुषस्यान्यस्य जानुनी गृहीत्वाभिमन्त्रितम्भः प्रविशेत्। तत्समकालञ्च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः शरक्षेपं कुर्य्यात्। तञ्चापरः पुरुषो जवेन शरमानयेत्॥ १—५॥

तन्मध्ये यो न दृश्येत स शुद्धः परिकीर्त्तितः।
अन्यथा त्वविशुद्धः स्यादेकाङ्गस्यापि दर्शने॥ ६॥
त्वमम्भः सर्व्वभूतानामन्तश्चरसि साक्षिवत्।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानुषाः॥ ७॥
व्यवहाराभिशस्तोऽयं मानुषोस्त्वयि मज्जति।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि॥ ८॥

इति वैष्णवे धर्म्मशास्त्रे द्वादशोऽध्यायः॥ १२॥

---

## त्रयोदशोऽध्यायः।

अथ विषम्। विषाण्यदेयानि सर्व्वाणि। ऋते हिमाचलोद्भवाच्छार्ङ्गात्। तस्य च यवसप्तकं घृतप्लुतमभिशस्ताय दद्यात्॥ १—४॥

विषं वेगक्रमापेतं सुखेन यदि जीर्य्यते।
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्ज्जयेत्॥ ५

विषत्वाद्विषमत्वाच्च क्रूरं त्वं सर्वदेहिनाम्।
त्वमेव विष जानीषे न विदुर्य्यानि मानुषाः॥ ६
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति।
तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि॥ ७

इति वैष्णवे धर्म्मशास्त्रे द्वादशोऽध्यायः॥ १२॥

---

## चतुर्द्दशोऽध्यायः।

अथ कोशः। उग्रान् देवान् समभ्यर्च्य तत्स्नानोदकात् ास्तितयं पिबेत्। इदं मया न कृतमिति व्याहरन् ्वताभिमुखः॥ १—३॥

यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा।
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कमथापि वा॥ ४
तमशुद्धं विजानीयात् तथा शुद्धं विपर्य्यये।
दिव्ये च शुद्धं पुरुषं सत्कुर्य्याद्धार्म्मिको नृपः॥ ५

इति वैष्णवे धर्म्मशास्त्रे चतुर्द्दशोऽध्यायः॥ १४॥

---

## पञ्चदशोऽध्यायः।

अथ द्वादश पुत्रा भवन्ति। स्वे क्षेत्रे संस्कृतायामुत् ादितः स्वयमौरसः प्रथमः। नियुक्तायां सपिण्डेनोत्तम- र्णेन वोत्पादितः क्षेत्रजो द्वितीयः। पुत्त्रिकापुत्रस्तृतीयः। ास्तस्याः पुत्त्रः स मे पुत्रो भवेदिति या पित्रा दत्ता सा

पुत्त्रिका। पुत्त्रिकाविधिना प्रतिपादितापि भ्रातृविहीना पुत्त्रिकैव। पौनर्भवश्चतुर्थः। अक्षता भूयःसंस्कृता पुनर्भूः। भूयस्त्वसंस्कृतापि परपूर्वा। कानीनः पञ्चमः। पितृगृहेऽसंस्कृतयैवोत्पादितः। स च पाणिग्राहस्य। गृहे च गूढोत्पन्नः षष्ठः। यस्य तल्पजस्तस्यासौ। सहोढः सप्तमः। गर्भिणी या संस्क्रियते तस्याः पुत्रः। स च पाणिग्राहस्य। दत्तकश्चाष्टमः। स च मातापितृभ्यां यस्य दत्तः। क्रीतश्च नवमः। स च येन क्रीतः। स्वयमुपगतो दशमः। स च यस्योपगतः। अपविद्धस्त्वेकादशः। पित्रा मात्रा च परित्यक्तः। स च येन गृहीतः। यत्र क्वचनोत्पादितश्च द्वादशः। एतेषां पूर्वः श्रेयान्। स एव दायहरः। स चान्यान् बिभृयात्। अनूढानां स्ववित्तानुरूपेण संस्कारं कुर्य्यात्। पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहारिणः। ऋक्थग्राहिभिस्ते भर्त्तव्याः। तेषाञ्चौरसाः पुत्रा भागहारिणः। न तु पतितस्य पतनीये कर्म्मणि कृते त्वनन्तरोत्पन्नाः। प्रतिलोमासु स्त्रीषु चोत्पन्नाश्चाभागिनः। तत्पुत्राः पैतामहेऽप्यर्थे। अंशग्राहिभिस्ते भरणीयाः। यश्चार्थहरः स पिण्डदायी। एकोढानयामप्येकस्याः पुत्रः सर्वासां पुत्र एव। भ्रातॄणामेकजातानां। पुत्रः पितृवित्ताभावेऽपि पिण्डं दद्यात्॥ १—४२॥

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥ ४३
ऋणमस्मिन् सन्नयति अमृतत्वंच गच्छति।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥ ४४

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम्॥ ४५
पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्मतः।
दौहित्रोऽपि ह्यपुत्रं तं सन्तारयति पौत्रवत्॥ ४६
इति वैष्णवे धर्मशास्त्रे पञ्चदशोऽध्यायः॥ १५

## षोड़शोऽध्यायः।

समानवर्णासु पुत्राः सवर्णा भवन्ति। अनुलोमासु मातृवर्णाः। प्रतिलोमास्त्वार्य्यविगर्हिताः। तत्र वैश्यापुत्रः शूद्रेणायोगवः। पुक्कसमागधौ क्षत्रियापुत्रौ वैश्यशूद्राभ्यां। चाण्डालवैदेहकसूताश्च ब्राह्मणीपुत्राः शूद्रविट्क्षत्रियैः। सङ्करसङ्करास्त्वासङ्ख्येयाः। रङ्गावतरणमायोगवानाम्। व्याधता पुक्कसानाम्। स्तुतिक्रिया मागधानाम्। वध्यघातित्वं चाण्डालानाम्। स्त्रीरक्षा तज्जीवनञ्च वैदेहकानाम्। अश्वसारथ्यं सूतानाम्। चाण्डालानां बहिर्ग्रामनिवसनं मृतचेलधारणमिति विशेषः। सर्व्वेषाञ्च समानजातिभिर्व्यवहारः। स्वपितृवित्तानुहरणञ्च॥१—१६॥

सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्म्मभिः॥ १७
ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम्॥ १८
इति वैष्णवे धर्मशास्त्रे षोड़शोऽध्यायः १६

## सप्तदशोऽध्यायः ।

पिता चेत् पुत्रान् विभजेत् तस्य स्वेच्छा स्वयमुपात्तेऽर्थे । पैतामहे त्वर्थे पितृपुत्रयोस्तुल्यं स्वामित्वम् । पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं दद्युः । अपुत्रधनं पत्न्यभिगामि । तदभावे दुहितृगामि । तदभावे पितृगामि । तदभावे मातृगामि । तदभावे भ्रातृगामि । तदभावे भ्रातृपुत्रगामि । तदभावे बन्धुगामि । तदभावे सकुल्यगामि । तदभावे सहाध्यायिगामि । तदभावे ब्राह्मणधनवर्ज्जं राजगामि । ब्रह्मणार्थो ब्राह्मणानाम् । वानप्रस्थोधनमाचार्यो गृह्णीयात् । शिष्यो वा ॥ १—१६ ॥

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याापहरेच्चांशं जातस्य च मृतस्य च ॥ १७

पितृमातृसुतभ्रातृ-दत्तमध्यग्न्युपागतम् ।
आधिवेदनिकं बंधुदत्तं शुल्कमन्वाधेयकमिति
स्त्रीधनम् ॥ १८

ब्राह्मादिषु चतुर्षु विवाहेष्वप्रजायामतीतायां तद्भर्त्तुः । शेषेषु च पिता हरेत् । सर्वेष्वेव प्रसूतायां तद्धनं तद्दुहितृगामि ॥ १९—२१ ॥

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादा भजमाना: पतन्ति ते ॥ २२

अनेकपितृकाणाञ्च पितृतो भागकल्पना ।
यस्य यत् पितृकं रिक्थं स तद्गृह्णीत नेतरः ॥ २३

इति वैष्णवे धर्मशास्त्रे सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ।

ब्राह्मणस्य चतुर्षु वर्णेषु चेत् पुत्रा भवेयुस्ते पैतृकमृक्थं दशधा विभजेयुः । तत्र ब्राह्मणीपुत्रश्चतुरोऽंशानादद्यात् । क्षत्रियापुत्रस्त्रीन् । द्वावंशौ वैश्यापुत्रः । शूद्रापुत्रस्त्वेकम् । अथ चेच्छूद्रापुत्रवर्ज्जं ब्राह्मणस्य पुत्रत्रयं भवेत् तदा तद्धनं नवधा विभजेयुः । वर्णानुक्रमेण चतुस्त्रिद्विभागीकृतानंशानादद्युः । वैश्यवर्ज्जमष्टधाकृतं चतुरस्त्रीनेकञ्चादद्युः । क्षत्रियवर्ज्जं सप्तधाकृतं चतुरो-द्वावेकञ्च । ब्राह्मणवर्ज्जं षड्धाकृतं त्रीन् द्वावेकञ्च । क्षत्रियस्य क्षत्रियावैश्याशूद्रापुत्रेष्वयमेव विभागः । अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां तदा सप्तधा-कृताद्धनाद्ब्राह्मणश्चतुरोऽंशानादद्यात् । त्रीन् राजन्यः । अथ ब्राह्मणस्य ब्राह्मणवैश्यौ तदा षड्धाविभक्तस्य चतुरोऽंशान् ब्राह्मण आदद्यात् । द्वावंशौ वैश्यः । अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तद्धनं पञ्चधा विभजेयाताम् । चतुरोऽंशान् ब्राह्मणस्त्वादद्यात् । एकं शूद्रः । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियवैश्यौ स्यातां तदा तद्धनं पञ्चधा विभजेयाताम् । त्रीनंशान् क्षत्रियस्त्वादद्यात् । द्वावंशौ वैश्यः । अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियोशूद्रौ पुत्रौ स्यातां तदा तद्धनं चतुर्धा विभजेयाताम् । त्रीनंशान् क्षत्रियस्त्वादद्यात् । एकं शूद्रः । अथ ब्राह्मणस्य क्षत्रियस्य वैश्यस्य वा वैश्यशूद्रौ पुत्रौ स्यातां तदा तद्धनं त्रिधा विभजेयाताम् । द्वावंशौ

वैश्यस्त्वादद्यात्। एवं शूद्रः। अथैकपुत्रा ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्याः सर्वहराः। क्षत्रियस्य राजन्यवैश्यौ। वैश्यस्य वैश्यः। शूद्रः शूद्रस्य। द्विजातीनां शूद्रस्त्वेकः पुत्रोऽर्द्धहरः। अपुत्रऋक्थस्य या गतिः साऽर्द्धस्य द्वितीयस्य। मातरः पुत्रभागानुसारेण भागहारिण्यः। अनूढ़ाश्च दुहितरः। समवर्णाः पुत्राः समानंशानादद्युः। ज्येष्ठाय श्रेष्ठमुद्धारं दद्युः। यदि द्वौ ब्राह्मणीपुत्रौ स्यातामेकः शूद्रापुत्रस्तदा नवधाविभक्तस्यार्थस्य ब्राह्मणीपुत्रावष्टौ भागानादद्यातामेकं शूद्रापुत्रः। अथ शूद्रापुत्रावुभौ स्यातामेको ब्राह्मणीपुत्रस्तदा षड्धाविभक्तस्यार्थस्य चतुरोंऽशान् ब्राह्मणस्त्वादद्याद्द्वावंशौ शूद्रापुत्रौ। अनेन क्रमेणान्यत्राप्यंशकल्पना भवति॥ १—४०॥

विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥ ४१

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जयेत्।
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥ ४२

पैतृकन्तु यदा द्रव्यमनवाप्तं यदाप्नुयात्।
न तत् पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्ज्जितम्॥ ४३

वस्त्रं पत्रमलङ्कारः कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारश्च न विभाज्यश्च पुस्तकम्॥ ४४

इति वैष्णवे धर्म्मशास्त्रेऽष्टादशोऽध्यायः॥ १८॥

---

# एकोनविंशोऽध्यायः ।

अथ द्विजं न शूद्रेण निर्हारयेत् । न शूद्रं द्विजेन । पितरं मातरञ्च पुत्रा निर्हरेयुः । न द्विजं पितरमपि शूद्राः । ब्राह्मणमनाथं ये ब्राह्मणा निर्हरन्ति ते स्वर्गलोकभाजः । निर्हृत्य च बान्धवं प्रेतं सत्कृत्या प्रदक्षिणेन चितामभिगम्याप्सु सवाससो निमज्जनं कुर्य्युः । प्रेतस्योदकनिर्वपणं चैवैकं पिण्डं कुशेषु दद्युः । परिवर्त्तितवाससश्च निम्बपत्राणि विदश्य द्वार्य्यश्मनि पदन्यासं कृत्वा गृहं प्रविशेयुः । अक्षतांश्चाग्नौ क्षिपेयुः । चतुर्थे दिवसेऽस्थिसंचयनं कुर्य्युः । तेषांच गङ्गाम्भसि प्रक्षेपः । यावत् सङ्ख्यमस्थि पुरुषस्य गङ्गाम्भसि तिष्ठति तावद्वर्षसहस्राणि स्वर्गलोकमधितिष्ठति । यावदशौचं तावत् प्रेतस्योदकं पिण्डमेकंच दद्युः । क्रीतलब्धाशनाश्च भवेयुः । अमांसाशनाश्च । स्थण्डिलशायिनश्च । पृथक्शायिनश्च । ग्रामान्निष्क्रम्याशौचान्ते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वा स्नाताः परिवर्त्तितवाससो गृहं प्रविशेयुः । तत्र शान्तिं कृत्वा ब्राह्मणानांच पूजनं कुर्य्युः । देवाः परोक्षदेवाः प्रत्यक्षदेवा ब्राह्मणाः । ब्राह्मणैर्लोका धार्य्यन्ते ॥ १—२१ ॥

ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः ।
ब्राह्मणाभिहितं वाक्यं न मिथ्याजायते क्वचित् ॥ २२

यद्ब्राह्मणा स्तुष्टतमा वदन्ति तद्देवताः प्रत्यभिनन्दयन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ २ ॥

दुःखान्वितानां हृतबान्धवाना-
माश्वासनं कुर्य्युरदीनसत्त्वाः॥
वाच्येतु यैर्नूमि तथाभिधास्ये
वाक्याण्यहं तानि मनोऽभिरामे॥ २४

इति वैष्णवे धर्म्मशास्त्रे एकोनविंशोऽध्यायः। १९

---

## विंशोऽध्यायः।

युदत्तरायणं तदहर्देवानाम्। दक्षिणायनं रात्रिः। संवत्सरोऽहोरात्रः। तत्त्रिंशता मासः। मासा द्वादश वर्षम। द्वादशवर्षशतानि दिव्यानि कलियुगम्। द्विगुणानि द्वापरम्। त्रिगुणानि त्रेता। चतुर्गुणानि कृतयुगम्। द्वादशवर्षसहस्राणि दिव्यानि चतुर्युगम्। चतुर्युगाणामेकसप्ततिर्म्मन्वन्तरम्। चतुर्युगसहस्रं च कल्पः। स च पितामहस्याहः। तावती चास्य रात्रिः। एवंविधेनाहोरात्रेण मासवर्षगणनया सर्वस्यैव ब्रह्मणो वर्षशतमायुः। ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसः। तस्यान्ते महाकल्पः। तावत्येवास्य निशा। पौरुषाणामहोरात्राणामतीतानां सङ्ख्यैव नास्ति। न च भविष्याणाम्। अनाद्यन्तत्वात् कालस्य॥ १—२१।

एवमस्मिन् निरालम्बे काले सततयायिनि।
न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवा॥ २२
गङ्गायाः सिकता धारास्तथा वर्षति वासवे।
शक्या गणयितुं लोके न व्यतीताः पितामहाः॥ २३

चतुर्द्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः।
सर्व्वलोकप्रधानाश्च मनवश्च चतुर्द्दश ॥ २४
बहूनीन्द्रसहस्राणि दैत्येन्द्रानियुतानि च।
विनष्टानीह कालेन मनुजेष्वथ का कथा ॥ २५
राजर्षयश्च बहवः सर्व्वे समुदिता गुणैः।
देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः ॥ २६
ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिणः।
तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः ॥ २७
आक्रम्य सर्व्वः कालेन परलोकञ्च नीयते।
कर्म्मपाशवशो जन्तुः का तत्र परिवेदना ॥ २८
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।
अर्थे दुष्परिहार्य्येऽस्मिन् नास्ति लोके सहायता ॥ २९
शोचन्तो नोपकुर्व्वन्ति मृतस्येह जना यतः।
अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः ॥ ३०
सुकृतं दुष्कृतञ्चोभौ सहायौ यस्य गच्छतः।
बान्धवैस्तस्य किं कार्य्यं शोचद्भिरथवा न वा ॥ ३१
बान्धवानामशौचे तु स्थितं प्रेतो न विन्दति।
अतस्त्वभ्येति तानेव पिण्डतोयप्रदायिनः ॥ ३२
अर्व्वाक् सपिण्डीकरणात् प्रेतो भवति यो मृतः।
प्रेतलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ॥ ३३
पितृलोकगतश्चान्नं श्राद्धे भुङ्क्ते स्वधामयम्।
पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छत ॥ ३४
देवत्वे यातनास्थाने तिर्य्यग्योनौ तथैव च।
मानुष्ये च तथाप्नोति श्राद्धं दत्तं स्वबान्धवैः ॥ ३५

प्रेतश्च श्राद्धकर्त्ता च पुष्टिं श्राद्धे कृते ध्रुवम् ।
तस्माच्छ्राद्धं सदा कार्य्यं शोकं त्यक्त्वा निरर्थकम् ॥ ३६
एतावदेव कर्त्तव्यं सदा प्रेतस्य बन्धुभिः ।
नोपकुर्य्यान्नरः शोकात् प्रेतस्यात्मन एव वा ॥ ३७
दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान् ।
धर्म्ममेकं सहायार्थं वरयध्वं सदा नराः ॥ ३८
मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम् ॥
जायावर्ज्जं हि सर्व्वस्य याम्यः पन्था विरुध्यते ॥ ३९
धर्म्म एकोऽनुयात्येनं यत्र क्वचनगामिनम् ।
नन्वसारे नृलोकेऽस्मिन् धर्म्मं कुरुत मा चिरम् ॥ ४०
श्वःकार्य्यमद्य कुर्वीत पूर्व्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वास्य न वाकृतम् ॥ ४१
क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ ४२
न कालस्यःप्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते ।
आयुष्ये कर्म्मणि क्षीणे प्रसह्य हरते जनम् ॥ ४३
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ ४४
नौषधानि न मन्त्राश्च न होमा न पुनर्ज्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया वापि मानवम् ॥ ४५
आगामिनमनर्थं हि प्रविधानशतैरपि ।
न निवारयितुं शक्तस्तत्र का परिवेदना ॥ ४६
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्व्वकृतं कर्म्म कर्त्तारं विन्दते ध्रुवम ॥ ४७

अव्यक्तादीनि भूतानि व्यक्तमध्यानि चाप्यथ।
अव्यक्तनिधनान्येव तत्र का परिवेदना॥ ४८
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥ ४९
गृह्णातीह यथावस्त्रं त्यक्त्वा पूर्वधृताम्बरम्।
गृह्णात्येवं नवं देहं देही कर्मनिबन्धनम्॥ ५०
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः॥ ५१
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च।
नित्यः सततगः स्थाणुरचलोऽयं सनातनः॥ ५२
अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हथ॥ ५३
इति वैष्णवे धर्मशास्त्रे विंशोऽध्यायः॥ २०॥

---

## एकविंशोऽध्यायः।

अथाशौचव्यपगमे स्नातः सुप्रक्षालितपाणिपादः स्वचान्तस्त्वेवंविधान् ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्धमाल्यवस्त्रालङ्कारादिभिः पूजितान् भोजयेत्। एकवन्नस्नानूहैतैकोद्दिष्टे। उच्छिष्टसन्निधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत्। भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्षय्योदकश्चतुरङ्गुल-पृथ्वीस्तावदन्तरास्तावदधः खाता वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात्। कर्षूसमीपे

चाग्नित्रयमुपसमाधाय परिस्तीर्य्य तत्रैकैकस्मिन्नाहुतित्रयं जुहुयात्। सोमाय पितृमते स्वधा नमः। अग्नये कव्य-वाहनाय स्वधा नमः। यमायाङ्गिरसे स्वधा नमः। स्थानत्रये च प्राग्वत्पिण्डनिर्वपणं कुर्य्यात्। अन्नदधिघृत-मधुमांसैः कर्षुत्रयं पूरयित्वैतत्त इति जपेत्। एवं कृताहे प्रतिमासं कुर्य्यात्। संवत्सरान्ते प्रेताय तत्पित्रे तत्पिता-महाय तत्प्रपितामहाय च ब्राह्मणान् देवपूर्व्वान् भोजयेत्। अत्राग्नौकरणमावाहनं पाद्यञ्च कुर्य्यात्। संसृजतु त्वा पृथिवीसमानीव इति च प्रेतपाद्यपात्रं पितृपाद्यपात्रत्रये योजयेत्। उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्य्यात्। ब्राह्म-णांश्च स्वाचान्तान् दत्तदक्षिणांश्चानुव्रज्य विसर्ज्जयेत्। ततः प्रेतपिण्डं पाद्यपात्रोदकवत् पिण्डत्रये निदध्यात्। कर्षुत्रयसन्निकर्षेऽप्येवमेव। सपिण्डीकरणं मासिकार्थ-वद्द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्य्यात्। मन्त्र-वर्ज्जं हि शूद्राणां द्वादशेऽह्नि। संवत्सराभ्यन्तरे यद्यधि-मासो भवेत् तदा मासिकार्थं दिनमेकं वर्द्धयेत् ॥ १—२१ ॥

सपिण्डीकरणं स्त्रीणां कार्य्यमेवं तथा भवेत्।
यावज्जीवं तथा कुर्य्याच्छ्राद्धन्तु प्रतिवत्सरम् ॥ २२

अर्व्वाक् सपिण्डीकरणं यस्य संवत्सरात् कृतम्।
तस्याप्यन्नं सोदकुम्भं दद्यादब्दं द्विजन्मने ॥ २३

इति वैष्णवे धर्म्मशास्त्रे एकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः ।

ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमशौचम् । द्वादशाहं राजन्यस्य । मासं शूद्रस्य । सपिण्डता च पुरुषे सप्तमे विनिवर्त्तते । अशौचे होमदानप्रतिग्रहस्वाध्याया निवर्त्तन्ते । नाशौचे कस्यचिदन्नमश्नीयात् । ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नाति तस्य तावदशौचं यावत् तेषाम् । अशौचापगमे प्रायश्चित्तं कुर्य्यात् । सवर्णस्याशौचे द्विजो भुक्त्वा स्रवन्तीमासाद्य तस्मिन्मग्नस्त्रिरघमर्षणं जप्त्वोत्तीर्य्य गायत्र्यष्टसहस्रं जपेत् । क्षत्रियाशौचे ब्राह्मणस्त्वेतद्देवोपोषितः कृत्वा शुध्यति । वैश्याशौचे राजन्यस्य । ब्राह्मणस्त्रिरात्रोपोषितस्य । ब्राह्मणाशौचे राजन्यः क्षत्रियाशौचे वैश्यः स्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत् । वैश्यस्य ब्राह्मणाशौचे गायत्र्यष्टशतं जपेत् । शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यव्रतं चरेत् । शूद्रस्य द्विजाशौचे स्नानमाचरेत् । शूद्रः शूद्राशौचे स्नातः पञ्चगव्यं पिबेत् । पत्नीनां दासानामानुलोम्येन स्वामिनस्तुल्यमशौचम् । मृते स्वामिन्यात्मीयम् । हीनवर्णानामधिकवर्णेषु सपिण्डेषु तदाशौचव्यपगमे शुद्धिः । ब्राह्मणस्य क्षत्रविट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः । क्षत्रियस्य विट्शूद्रयोः षड्रात्रत्रिरात्राभ्याम् । वैश्यस्य शूद्रेषु षड्रात्रेण । मासतुल्यैरहोरात्रैर्गर्भस्रावे । जातमृते मृतजाते वा कुलस्य सद्यः शौचम् ॥ अदन्तजाते बाले प्रेते सद्य एव । नास्याग्नि-

संस्कारो नोदकक्रिया। दन्तजाते त्वकृतचूड़े त्वहोरात्रेण। कृतचूड़े त्वसंस्कृते त्रिरात्रेण। ततः परं यथोक्तकालेन। स्त्रीणां विवाहः संस्कारः। संस्कृतासु स्त्रीषु नाशौचं भवति पितृपक्षे। तत्प्रसवमरणे चेत् पितृगृहे स्यातां त्रिरात्रञ्च। जननाशौचमध्ये यद्यपरं जननाशौचं स्यात् तदा पूर्वाशौचव्यपगमे शुद्धिः। रात्रिशेषे दिनद्वयेन। प्रभाते दिनत्रयेण। मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्। श्रुत्वा देशान्तरस्थो जननमरणे शेषेण शुध्येत्। व्यतीतेऽशौचे संवत्सरान्तस्त्वेकरात्रेण। ततः परं स्नानेन। आचार्य्ये मातामहे च व्यतीते त्रिरात्रेण॥ १—४१॥

अनौरसेषु पुत्त्रेषु जातेषु च मृतेषु च।
परपूर्व्वासु भार्य्यासु प्रसूतासु मृतासु च॥ ४२

आचार्य्य-पत्नी पुत्त्रोपाध्याय-मातुल-श्वशुर-श्वशुर्य्य-सहाध्यायि-शिष्येष्वतीतेष्वेकरात्रेण। स्वदेशराजनि च। असपिण्डे स्ववेश्मनि मृते च। श्वगन्धनाशकाम्बु-संग्रामविद्युन्नृपहतानां नाशौचम्। न राज्ञां राजकर्म्मणि। न व्रतिनां व्रते। न सत्रिणां सत्रे। न कारूणां कारुकर्म्मणि। न राजाज्ञाकारिणां तदिच्छया। न देवप्रतिष्ठाविवाहयोः पूर्व्वसम्भृतयोः। न देशविप्लवे। आपद्यपि च कष्टायाम्। आत्मत्यागिनः पतिताश्च नाशौचोदकभाजः। पतितस्य दासी मृतेऽह्नि पादाभ्यां घटमपवर्ज्जयेत्। उद्बन्धनमृतस्य यः पाशं छिन्द्यात् स तप्तकृच्छ्रेण शुध्यति। आत्मघातिनां संस्कर्त्ता च। तदश्रुपातकारी च। सर्व्वस्यैव प्रेतस्य बान्धवैः सहाश्रुपातं कृत्वा स्नानेन। अकृते त्वस्थिसञ्चये सचैलस्नानेन।

द्विजः शूद्रप्रेतानुगमनं कृत्वा स्रवन्तीमासाद्य तन्निमग्न-स्त्रिरघमर्षणं जप्त्वोत्तीर्य्य गायत्र्यष्टसहस्रं जपेत्। द्विज प्रेतस्याष्टशतम्। शूद्रः प्रेतानुगमनं कृत्वा स्नानमाचरेत्। चिताधूमसेवने सर्वे वर्णाः स्नानमाचरेयुः। मैथुने दुःस्वप्ने रुधिरोपगतकण्ठे वमनविरेकयोश्च। श्मश्रुकर्म्मणि कृते च। शवस्पृशञ्च स्पृष्ट्वा रजस्वलाचाण्डालयूपांश्च। भक्ष्यवर्ज्जं पंचनखशवं तदस्थि सस्नेहंच। सर्व्वेष्वेतेषु स्नानेषु पूर्वं वस्त्रं नाप्रक्षालितं बिभृयात्। रजस्वला चतुर्थेऽह्नि स्नाना च्छुध्यति। रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न ताव-दश्नीयाद्यावन्नशुद्धा। सवर्णामधिकवर्णां वा स्पृष्ट्वा स्नात्वा श्नीयात्। क्षुत्वा सुप्त्वा भोजनाध्ययनेप्सुः पीत्वा स्नात्वा निष्ठीव्य वासः परिधाय रथ्यामाक्रम्य मूत्रपुरीषे कृत्वा पंचनखास्थ्यस्नेहं स्पृष्ट्वा चाचामेत्। चाण्डालम्लेच्छ-सम्भाषणे च। नाभेरधस्तात् प्रबाहुषु च कायिकैर्मलैः सुराभि र्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य शुध्यति। अन्यत्रोप हतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन। वक्त्रोपहतस्तूपोष्य स्नात्वा पंचगव्येन। दशनच्छदोपहतश्च॥ ७३—७९॥

वसा शुक्रमसृङ्मज्जा मूत्रविट्कर्णविड्नखाः।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः॥ ८०

गौड़ी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुराः।
यथैवैका तथा सर्वा न पातव्या द्विजातिभिः॥ ८१

माधूकमैक्षवं टाङ्कं कौलं खर्ज्जूरपानसे।
मृद्वीकारसमाध्वीके मैरेयं नारिकेलजम्॥ ८२

अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च ।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः ॥ ८३
गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन् ।
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ॥ ८४
आचार्य्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥ ८५
आदिष्टी नोदकं कुर्य्यादा व्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेण विशुध्यति ॥ ८६
ज्ञानं तपोऽग्निराहारो मृन्मनोवार्य्युपाञ्जनम् ।
वायुः कर्म्मार्ककालौ च शुद्धिकर्त्तॄणि देहिनाम् ॥ ८७
सर्व्वेषामेव शौचानामन्नशौचं परं स्मृतम् ।
योऽन्ने शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ ८८
क्षान्त्या शुध्यन्ति विद्वांसो दानेनाकार्य्यकारिणः ।
प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥ ८९
मृत्तोयैः शुध्यते शोध्यं नदी वेगेन शुध्यति ॥
रजसा स्त्री मनोदुष्टा सन्न्यासेन द्विजोत्तमाः ॥ ९०
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥ ९१
एष शौचस्य ते प्रोक्तः शारीरस्य विनिर्णयः ।
नानाविधानां द्रव्याणां शुद्धेः शृणु विनिर्णयम् ॥ ९२

इति वैष्णवे धर्म्मशास्त्रे द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ।

शारीरैर्मलैः सुराभिर्मद्यैर्वा यदुपहतं तदत्यन्तोपहतम्। अत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रक्षिप्तं शुध्येत्। मणिमयमश्ममयमब्जञ्च सप्तरात्रं महीनिखननेन। शृङ्गदन्तास्थिमयं तक्षणेन। दारवं मृन्मयञ्च जह्यात्। अत्यन्तोपहतस्य वस्त्रस्य यत् प्रक्षालितं सद्विरज्येत् तच्छिन्द्यात्। सौवर्णराजताब्जमणिमयानां निर्लेपानामद्भिः शुद्धिः। अश्ममयानां चमसानां ग्रहाणाञ्च। चरुस्रुक्स्रुवाणामुष्णेनाम्भसा। यज्ञकर्मणि यज्ञपात्राणां पाणिना सम्मार्ज्जनेन। स्फ्यशूर्पशकटमुषलोलूखलानां प्रोक्षणेन। शयनयानासनानांच। बहूनांच। धान्याजिनरज्जुतान्तववैदलसूत्रकार्पासवाससांच। शाकमूलफलपुष्पाणांच। तृणकाष्ठशुष्कपलाशानांच। एतेषां प्रक्षालनेन। अल्पानांच। ऊषैः कौषेयाविकयोः। अरिष्टकैः कुतपानाम्। श्रीफलैरंशुपट्टानाम्। गौरसर्षपैः क्षौमाणाम्। शृङ्गास्थिदन्तमयानांच। पद्माक्षैश्शृङ्गलोमिकानाम्। ताम्ररीतित्रपुसीसमयानामम्लोदकेन। भस्मना कांस्यलोहयोः। तक्षणेन दारवाणाम्। गोवालैः फलसम्भवानाम्। प्रोक्षणेन संहतानाम्। उत्पवनेन द्रवाणाम्। गुडादीनामिक्षुविकाराणां प्रभूतानां गृहनिहितानां वार्थ्यग्निदानेन। सर्वलवणानांच। पुनःपाकेन मृन्मयानाम्। द्रव्यवत् कृतशौचानां देवतार्चानां भूयः प्रतिष्ठापनेन। असिद्धस्यान्नस्य यावन्मात्र-

सुपहतं तन्मात्रं परित्यज्य शेषस्य कण्डनप्रक्षालने कुर्य्यात्।
द्रोणाभ्यधिकं सिद्धमन्नमुपहतं न दुष्यति। तस्योपहतमात्र-
मपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भः। प्रक्षिपेत्। वस्तस्य
प्रदर्शयेदग्नेश्च॥ १—३७

पक्षिजग्धं गवाघ्रातमवधूतमवक्षुतम्।
दूषितं केशकीटैश्च मृत्प्रक्षेपेण शुध्यति॥ ३८
यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः।
तावन्मृद्वारि देयं स्यात् सर्वासु द्रव्यशुद्धिषु॥ ३९
अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः।
पन्थानश्च विशुध्यन्ति सोमसूर्य्यांशुमारुतैः॥ ४०
रथ्याकर्द्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च॥ ४१
प्राणिनामथ सर्वेषां मृद्भिरद्भिश्च कारयेत्।
अत्यन्तोपहतानां च शौचं नित्यमतन्द्रितः॥ ४२
भूमिष्ठमुदकं पुण्यं वैतृष्ण्यं यत्र गोर्भवेत्।
अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम्॥ ४३
मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा।
अपः समुद्धरेत् सर्वाः शेषं वस्त्रेण शोधयेत्॥ ४४
वह्निप्रज्वालनं कुर्य्यात् कूपे पक्वेष्टकाचिते।
पञ्चगव्यं न्यसेत् पश्चान्नवतोयसमुद्भवे॥ ४५
जलाशयेष्वथाल्पेषु स्थावरेषु वसुन्धरे।
कूपवत् कथिता शुद्धिर्महत्सु च न दूषणम्॥ ४६
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते॥ ४७

नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितम् ।
ब्राह्मणान्तरितं भैक्ष्यमाकराः सर्व एव च ॥ ४८
नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ ४९
श्वभिर्हतस्य यन्मांसं शुचि तत् परिकीर्त्तितम् ।
क्रव्याद्भिश्च हतस्यान्यैश्चाण्डालाद्यैश्च दस्युभिः ॥ ५०
ऊर्द्धं नाभेर्यानि खानि तानि मेध्यानि निर्दिशेत् ।
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥ ५१
मक्षिका विप्रुषश्छाया गौर्गजाश्वमरीचयः ।
रजोभूर्वायुरग्निश्च मार्ज्जारश्च सदा शुचिः ॥ ५२
नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गे पतन्ति याः ।
न श्मश्रूणि गतान्यास्यं न दन्तान्तरवेष्टितम् ॥ ५३
स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ।
भौमिकैस्ते समाज्ञेया न तैरप्रयतो भवेत् ॥ ५४
उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन ।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥ ५५
मार्ज्जनोपाञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकम् ।
सम्मार्ज्जनेनाञ्जनेन सेकेनोल्लेखनेन च ॥ ५६
दाहेन च भुवः शुद्धिर्वासेनाप्यथवा गवाम् ।
गावः पवित्रं मङ्गल्यं गोषु लोकाः प्रतिष्ठिताः ॥ ५७
गावो वितन्वते यज्ञं गावः सर्वाघसूदनाः ।
गोमूत्रं गोमयं सर्पिः क्षीरं दधि च रोचना ॥ ५८
षडङ्गमेतत् परमं मङ्गल्यं सर्वदा गवाम् ।
शृङ्गोदकं गवां पुण्यं सर्वाघविनिसूदनम् ॥ ५९

गवां कण्डूयनंचैव सर्वकल्मषनाशनम्।
गवां ग्रासप्रदानेन स्वर्गलोके महीयते॥ ६०

गवां हि तीर्थे वसतीह गङ्गा
पुष्टिस्तथासां रजसि प्रवृत्ता।
लक्ष्मीः करीषे प्रणतौ च धर्म्म-
स्तासां प्रणामं सततंच कुर्य्यात्॥ ६१

इति वैष्णवे धर्म्मशास्त्रे त्रयोविंशोऽध्यायः॥ २३॥

---

## चतुर्विंशोऽध्यायः।

अथ ब्राह्मणस्य वर्णानुक्रमेण चतस्रो भार्य्या भवन्ति। तिस्रः क्षत्रियस्य। द्वे वैश्यस्य। एका शूद्रस्य। तासां सवर्णावेदने पाणिग्राह्यः। असवर्णावेदने शरः क्षत्रिय-कन्यया। प्रतोदो वैश्यकन्यया। वसनदशान्तः शूद्रकन्यया। न सगोत्रां न समानार्षप्रवरां भार्य्यां विन्देत। मातृ-तस्वा पंचमात् पुरुषात् पितृतस्वा सप्तमात्। नाकुलीनाम्। न च व्याधिताम्। नाधिकाङ्गीम्। न हीनाङ्गीम्। नाति-कपिलाम्। न वाचाटाम्। अथाष्टौ विवाहा भवन्ति। ब्राह्मोदैव आर्षः प्राजापत्यो गन्धर्व आसुरो राक्षसः पैशाचश्चेति। आहूय गुणवते कन्यादानं ब्राह्मः। यज्ञस्य-ऋत्विजे दैवः। गोमिथुनग्रहणेनार्षः। प्रार्थितप्रदानेन प्राजापत्यः। द्वयोः सकामयोर्म्मातापितृरहितो योगो गान्धर्वः। क्रयेणासुरः। युद्धहरणेन राक्षसः। सुप्त-

असत्ताभिगमनात् पश्चाच्च: । एतेष्वाद्याश्चत्वारो धर्म्म्याः । गान्धर्वोऽपि राजन्यानाम् । ब्राह्मीपुत्रः पुरुषानेकविंशतिं पुनीते । दैवीपुत्रश्चतुर्द्दश । आर्षीपुत्रश्च सप्त । प्राजापत्यश्चतुरः । ब्राह्मेण विवाहेन कन्यां ददद्ब्रह्मलोकं गमयति । दैवेन स्वर्गम् । आर्षेण वैष्णवम् । प्राजापत्येन देवलोकम् । गान्धर्वेण गन्धर्वलोकं गच्छति । पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदाः । पूर्वाभावे प्रकृतिस्थः परः परः ॥ १—३९ ॥

ऋतुत्रयमुपास्यैव कन्या कुर्य्यात् स्वयंवरम् ।
ऋतुत्रये व्यतीते तु प्रभवत्यात्मनः सदा ॥ ४०
पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया हरंस्तां न विदुष्यति ॥ ४१

इति वैष्णवे धर्म्मशास्त्रे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ।

अथ स्त्रीणां धर्म्माः । भर्त्तुः समानव्रतचारित्वम् । श्वश्रूश्वशुरगुरुदेवतातिथिपूजनम् । सुसंस्कृतोपस्करता । अमुक्तहस्तता । सुगुप्तभाण्डता । मूलक्रियास्वनभिरतिः । मङ्गलाचारतत्परता । भर्त्तरि प्रवसितेऽप्रतिकर्म्मक्रिया । परगृहेष्वनभिगमनम् । द्वारदेशगवाक्षकेष्वनवस्थानम् । सर्व्वकर्म्मस्वस्वतन्त्रता । बाल्ययौवनवार्द्धकेष्वपि पितृभर्त्तृपुत्राधीनता । मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा ॥ १—१४ ॥

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम्।
पतिं शुश्रूयते यत्तु तेन स्वर्गे महीयते॥ १५
पत्यौ जीवति या योषिदुपवासव्रतं चरेत्।
आयुः सा हरते भर्त्तुर्नरकञ्चैव गच्छति॥ १६
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥ १७

इति वैष्णवे धर्म्मशास्त्रे पञ्चविंशोऽध्यायः॥ २५॥

---

## षड्विंशोऽध्यायः।

सवर्णासु बहुभार्य्यासु विद्यमानासु ज्येष्ठया सह धर्म्म-कार्य्यं कुर्य्यात्। मिश्रासु च कनिष्ठयापि समानवर्णया। समानवर्णाया अभावे त्वनन्तरयैवापदि च। न त्वेव द्विजः शूद्रया॥१—४॥

द्विजस्य भार्य्या शूद्रा तु धर्म्मार्थे न भवेत् क्वचित्।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता॥ ५
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्॥ ६
दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु।
नाश्नन्ति पितृदेवास्तु न च स्वर्गं स गच्छति॥ ७

इति वैष्णवे धर्म्मशास्त्रे षड्विंशोऽध्यायः॥ २६॥

---

## सप्तविंशोऽध्यायः ।

गर्भस्य स्पष्टताज्ञाने निषेककर्म्म । स्पन्दनात् पुरा पुंसवनम् । षष्ठेऽष्टमे वा सीमन्तोन्नयनम् । जाते च दारके जातकर्म्म । अशौचव्यपगमे नामधेयम् । माङ्गल्यं ब्राह्मणस्य । बलवत् क्षत्रियस्य । धनोपेतं वैश्यस्य । जुगुप्सितं शूद्रस्य । चतुर्थे मास्यादित्यदर्शनम् । षष्ठेऽन्नप्राशनम् । तृतीयेऽब्दे चूडाकरणम् । एता एव क्रियाः स्त्रीणाममन्त्रकाः । तासां समन्त्रको विवाहः । गर्भाष्टमेऽब्दे ब्राह्मणस्योपनयनम् । गर्भैकादशे राज्ञः । गर्भद्वादशे विशः । तेषां मुञ्जज्यावल्वजमय्यो मौञ्ज्यः । कार्पासशाणाविकान्युपवीतानि वासांसि च । मार्गवैयाघ्रवास्तानि चर्म्माणि । पालाशखादिरौदुम्बरा दण्डाः । केशान्तललाटनासादेशतुल्याः । सर्व एव वा । अकुटिलाः सत्वचश्च । भवदाद्यं भवन्मध्यं भवदन्तञ्च भैक्षचरणम् ॥ १—२५ ॥

आषोड़शाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आ द्वाविंशात् क्षत्रबन्धोरा चतुर्विंशतेर्विशः ॥ २६
अत ऊर्द्धं त्रयोऽप्येते यथाकालमसंस्कृता ।
सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिताः ॥ २७
यद्यस्य विहितं चर्म्म यत् सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ॥ २८
मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्राश्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ २९

इति वैष्णवे धर्म्मशास्त्रे सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः।

अथ ब्रह्मचारिणां गुरुकुलवासः। सन्ध्याद्वयोपासनम्। पूर्वां सन्ध्यां जपेत् तिष्ठन् पश्चिमामासीनः। कालद्वयमभिषेकाग्निकर्मकरणम्। अप्सु दण्डवन्मज्जनम्। आहूताध्ययनम्। गुरोः प्रियहिताचरणम्। मेखलादण्डाजिनोपवीतधारणम्। गुरुकुलवर्ज्जं गुणवत्सु भैक्षचरणम्। गुर्वनुज्ञातो भैक्षाभ्यवहरणम्। श्राद्धक्षारलवणाक्तपर्युषित-नृत्य-गीत-स्त्री-मधु-मांसाञ्जनोच्छिष्ट-प्राणि-हिंसाश्लीलपरिवर्ज्जनम्। अधःशय्या। गुरोः पूर्वोत्थानं चरमं संवेशनम्। कृतसन्ध्योपासनश्च गुर्वभिवादनं कुर्यात्। तस्य च व्यत्यस्तकरः पादावुपस्पृशेत्। दक्षिणं दक्षिणेनेतरमितरेण। स्वञ्च नाम अभिवादनान्ते भोःशब्दान्तं निवेदयेत्। तिष्ठन्नासीनः शयानो भुञ्जानः पराङ्मुखश्च नास्याभिभाषणं कुर्यात्॥ १—२८॥

आसीनस्य स्थितः कुर्यादभिगच्छंस्तु गच्छतः।
आगच्छतः प्रत्युद्गम्य पश्चाद्धावंस्तु धावतः॥ १८

पराङ्मुखस्याभिमुखः। दूरस्थस्यान्तिकमुपेत्य। शयानस्य प्रणम्य। तस्य च चक्षुर्विषये न यथेष्टासनः स्यात्। न चास्य केवलं नाम ब्रूयात्। गतिचेष्टाभाषितादिकं नास्यानुकुर्यात्। यत्रास्य निन्दापरीवादौ स्यातां न तत्र तिष्ठेत्। नास्यैकासनो भवेत्। ऋते शिलाफलकनौयानेभ्यः। गुरोर्गुरौ सन्निहिते गुरुवद्वर्त्तेत। अनिर्दिष्टो गुरुणा स्वान्

गुरुं नाभिवादयेत्। बाले समानवयसि वाध्यापके गुरुपुत्रे गुरुवद्वर्त्तेत। न च पादौ प्रक्षालयेत्। नोच्छिष्टमश्नीयात्। एवं वेदं वेदौ वेदान् वा स्वीकुर्य्यात्। ततो वेदाङ्गानि। यस्त्वनधीतवेदोऽन्यत्र श्रमं कुर्य्यादसौ ससन्तानः शूद्रत्वमेति। मातुरग्रे विजननं द्वितीयं मौञ्जीबन्धनम्। तत्रास्य माता सावित्री भवति पिता त्वाचार्य्यः। एतेनैव तेषां द्विजत्वम्। प्राङ्मौञ्जीबन्धनाद्द्विजः शूद्रसमो भवति। ब्रह्मचारिणा मुण्डेन जटिलेन वा भाव्यम्। वेदस्वीकरणादूर्द्ध्वं गुर्व्वनुज्ञातस्तस्मै वरं दत्त्वा स्नायात्। ततो गुरुकुल एव वा जन्मनः शेषं नयेत्। तत्राचार्य्ये प्रेते गुरुवद्गुरुपुत्रे वर्त्तेत। गुरुदारेषु सवर्णेषु वा। तदभावेऽग्निशुश्रूषुर्नैष्ठिको ब्रह्मचारी स्यात्॥ २०—४६॥

एवं चरति यो विप्रो ब्रह्मचर्य्यमतन्द्रितः।
स गच्छत्युत्तमं स्थानं न चेह जायते पुनः॥ ४७
कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः।
अतिक्रमं व्रतस्याहुर्धर्म्मज्ञा ब्रह्मवादिनः॥ ४८
एतस्मिन्नेनसि प्राप्ते वसित्वा गर्द्दभाजिनम्।
सप्तागारं चरेद्भैक्षं स्वकर्म्म परिकीर्त्तयन्॥ ४९
तेभ्यो लब्धेन भैक्षेण वर्त्तयन्नेककालिकम्।
उपस्पृशंस्त्रिषवणमब्देन स विशुध्यति॥ ५०
स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्म्मामित्यृचं जपेत्॥ ५१
अकृत्वा भैक्षचरणमसमिध्य च पावकम्।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्॥ ५२

तत्रैवत्युदियात् सूर्य्यः शयानं कामकारतः ।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ ५२

इति वैष्णवे धर्म्मशास्त्रेऽष्टाविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

यस्तूपनीयव्रतादेशं कृत्वा वेदमध्यापयेत् तमाचार्य्यं विद्यात्। यस्त्वेनं मूल्येनाध्यापयेत् तमुपाध्यायमेकदेशं वा। यो यस्य यज्ञकर्म्माणि कुर्य्यात् तमृत्विजं विद्यात्। नापरीक्षितं याजयेत्। नाध्यापयेत्। नोपनयेत् ॥ १—६ ॥

अधर्म्मेण च यः प्राह यश्चाधर्म्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ ७
धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ ८
विद्या ह वै ब्राह्मणमजागाम
गोपाय मा शेवधिस्तेऽहमस्मि ।
असूयकायानृजवेऽयताय
न मां ब्रूया वीर्य्यवती तथा स्याम् ॥ ९
यमेव विद्याः शुचिमप्रमत्तं
मेधाविनं ब्रह्मचर्य्योपपन्नम् ।
यस्ते नद्रुह्येत् कतमच्च नाह
तस्मै मां ब्रूया निधिपाय ब्रह्मन् ॥ १०

इति वैष्णवे धर्म्मशास्त्रे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

# त्रिंशोऽध्यायः ।

श्रावण्यां प्रौष्ठपद्यां वा छन्दांस्युपाकृत्यार्द्धपञ्चमान् मासानधीयीत। ततस्तेषामुत्सर्गं बहिः कुर्य्यादनुपाकृतानाम्। उत्सर्गोपाकर्म्मणोर्म्मध्ये वेदाङ्गाध्ययनं कुर्य्यात्। नाधीयीताहोरात्रं चतुर्द्दश्यष्टमीषु च। नच न्तरग्रहसूतके। नेन्द्रप्रयाणे। न वाति चण्डपवने। नाकालवर्षविद्युत्स्तनितेषु। न भूकम्पोल्कापातदिग्दाहेषु। नान्तःशवे ग्रामे। न शस्त्रसम्पाते। न श्वशृगालगर्द्दभनिर्ह्रादेषु। न वादित्रशब्दे। न शूद्रपतितयोः समीपे। न देवतायतनश्मशानचतुष्पथरथ्यासु। नोदकान्तः। न पीठोपहितपादः। न हस्त्यश्वोष्ट्रनौगोयानेषु। न वान्तः। न विरिक्तः। नाजीर्णे। न पशुनखान्तरागमने। न राजश्रोत्रियगोब्राह्मणव्यसने। नोपाकर्म्मणि। नोत्सर्गे। न सामध्वानावृग्यजुषी। नापररात्रमधीत्य शयीत। अभियुक्तोऽप्यनध्यायेष्वध्ययनं परिहरेत्। यस्मादनध्ययनाधीतं नेह नामुत्र फलदम्। तदध्ययनेनायुषः क्षयो गुरुशिष्ययोश्च। तस्मादनध्यायवर्ज्जं गुरुणा ब्रह्मलोककामेन विद्या सच्छिष्यक्षेत्रेषु वप्तव्या। शिष्येण ब्रह्मारम्भावसानयोर्गुरोः पादोपसंग्रहणं कार्य्यम्। प्रणवश्च व्याहर्त्तव्यः। तत्र च यदृचोऽधीते तेनाज्येन पितॄणां तृप्तिर्भवति। यद्यजूंषि तेन मधुना। यत् सामानि तेन पयसा। यदथर्व्वणां तेन मांसेन। यत् पुराणेतिहासवेदाङ्गधर्म्मशास्त्राण्यधीते तेनान्नेन। अथ

विद्यामासाद्यास्मिँल्लोके तया जीवेन्न सा तस्य परलोके फलप्रदा भवेत्। यश्च विद्याया यशः परेषां हन्ति। अननुज्ञातश्चाध्यमादधीयानान्न विद्यामाददात्। तदादानमस्य ब्रह्मस्तेयं नरकाय भवति॥ १—४२॥

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव वा।
आददीत यतो ज्ञानं न तं द्रुह्येत् कदाचन॥ ४३
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्॥ ४४
कामान्माता पिता चैनं यदुत्पादयतो मिथः।
सम्भूतिं तस्य तां विद्याद्यद्योनाविह जायते॥ ४५
आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।
उत्पादयति सावित्र्या सा सत्या साजरामरा॥ ४६
य आवृणोत्यवितथेन कर्णा-
वदुःखं कुर्व्वन्नमृतं संप्रयच्छन्।
तं वै मन्येत् पितरं मातरञ्च
तस्मै न द्रुह्येत् कृतमस्य जानन्॥ ४७
इति वैष्णवे धर्म्मशास्त्रे त्रिंशोऽध्यायः॥ ३०॥

---

## एकत्रिंशोऽध्यायः।

त्रयः पुरुषस्यातिगुरवो भवन्ति। माता पिता आचार्य्यश्च। तेषां नित्यमेव शुश्रूषणा भवितव्यं। यत् ते ब्रूयुस्तत् कुर्य्यात्। तेषां प्रियहितमाचरेत्। न तैरननुज्ञातः किञ्चिदपि कुर्य्यात्॥ १—६॥

एत एव त्रयो वेदा एत एव त्रयः सुराः।
एत एव त्रयो लोका एत एव त्रयोऽग्नयः॥ ७
पिता गार्हपत्योऽग्निर्दक्षिणाग्निर्माता गुरुराहवनीयः।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः॥ ८—९॥
इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते॥ १०

इति वैष्णवे धर्मशास्त्रे एकत्रिंशोऽध्यायः॥ ३१॥

---

## द्वात्रिंशोऽध्यायः।

राजर्त्विक्श्रोत्रियाधर्मप्रतिषेद्ध्रुपाध्यायपितृव्यमातामह-मातुलश्वशुरज्येष्ठभ्रातृसम्बन्धिनश्चाचार्य्यवत्। पत्न्य एतेषां सवर्णाः। मातृष्वसा पितृष्वसा ज्येष्ठा स्वसा च। श्वशुर-पितृव्यमातुलर्त्विजां कनीयसां प्रत्युत्थानमेवाभिवादनम्। हीनवर्णानां गुरुपत्नीनां दूरादभिवादनं न पादोपसंस्पर्शनम्। गुरुपत्नीनां गात्रोत्सादनाञ्जनकेशसंयमन-पादप्रक्षालनादीनि न कुर्य्यात्। असंस्तुताधि परपत्नी भगिनीति वाच्या पुत्रीति मातेति वा। न च गुरुणां त्वमिति ब्रूयात्। तदतिक्रमे निराहारो दिवसान्ते तं प्रसाद्याश्नीयात्। न च गुरुणा सह विग्रह्य कथां कुर्य्यात्। नैव चास्य परीवादम्। न चानाभिमतम्॥ १—१२॥

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता॥ १३

कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन ॥ १४
विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् ।
गुरुदारेषु कुर्वीत सतां धर्म्ममनुस्मरन् ॥ १५
वित्तं बन्धुर्वय कर्म्म विद्या भवति पञ्चमी ।
एतानि मानस्थानानिगरीयो यद्यदुत्तरम् ॥ १६
ब्राह्मणं दशवर्षञ्च शतवर्षञ्च भूमिपम् ।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥ १७
विप्राणां ज्ञानतो ज्यैष्ठं क्षत्रियाणान्तु वीर्य्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मनः ॥ १८

इति वैष्णवे धर्म्मशास्त्रे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ।

अथ पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरम् भवति। परिग्रहप्रसङ्गाद्विशेषेण गृहाश्रमिणः। तेनाय माक्रान्तोऽतिपातकमहापातकानुपातकोपपातकेषुः प्रवर्त्तते। जातिभ्रंशकरेषु सङ्करीकरणेष्वपात्रीकरणेषु च। मलावहेषु प्रकीर्णकेषु च ॥ १—५ ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ६

इति वैष्णवे धर्म्मशास्त्रे त्रयोस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ।

मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि ॥१

अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम् ।
न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन ॥ २

इति वैष्णवे धर्मशास्त्रे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः ।

ब्रह्महत्या सुरापानं ब्राह्मणसुवर्णहरणं गुरुदारगमनमिति महापातकानि । तत्संयोगश्च । संवत्सरेण पतति पतितेन सह चरन् । एकयानभोजनासनशयनैः । यौनस्रौवमौखसम्बन्धात् सद्य एव ॥ १—५ ॥

अश्वमेधेन शुध्येयुर्महापातकिनस्त्विमे ।
पृथिव्यां सर्वतीर्थानां तथानुसरणेन वा ॥ ६

इति वैष्णवे धर्मशास्त्रे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षड्त्रिंशोऽध्यायः ।

याजकस्य क्षत्रियस्य वैश्यस्य च रजस्वलायाश्चान्तर्वत्न्या-त्रिगोत्रायाश्चाविज्ञातस्य गर्भस्य शरणागतस्य च घातनं

ब्रह्महत्यासमानीति । कौटसाक्ष्यं सुहृद्वध एतौ सुरापान-
समौ । ब्राह्मणस्य भूम्यपहरणं निक्षेपापहरणं सुवर्णस्तेय-
समम् । पितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरु-
दारगमनसमम् । पितृष्वसृमातृष्वसृस्वसृगमनञ्च । श्रोत्रि-
यर्त्विगुपाध्यायमित्रपत्न्यभिगमनञ्च । स्वसुः सख्याः सगोत्रायाः
उत्तमवर्णायाः कुमार्य्या अन्त्यजाया रजस्वलायाः प्रव्रजि-
ताया निक्षिप्तायाश्च ॥ १—७ ॥

अनुपातकिनस्त्वेते महापातकिनो यथा ।
अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा ॥ ८

इति वैष्णवे धर्म्मशास्त्रे षड्विंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः ।

अनृतवचनमुत्कर्षे । राजगामि च पैशुन्यम् । गुरोश्चा-
लीकनिर्बन्धः । वेदनिन्दा । अधीतस्य च त्यागः । अग्नि-
मातृपितृसुतदाराणाञ्च । अभोज्यान्नाभक्ष्यभक्षणम् । परस्वा-
पहरणम् । परदाराभिगमनम् । अयाज्ययाजनम् । विकर्म्मा-
जीवनञ्च । असत्प्रतिग्रहश्च । क्षत्रविट्शूद्रगोवधः । अविक्रेय-
विक्रयः । परिवित्तितानुजेन ज्येष्ठस्य । परिवेदनम् । तस्य च
कन्यादानम् । याजनञ्च । व्रात्यता । भृतकाध्यापनम् । भृता-
ध्ययनादानम् । सर्वाकरेष्वधिकारः । महायन्त्रप्रवर्त्तनम् ।
द्रुमगुल्मवल्लीलतौषधीनां हिंसा । स्त्रीजीवनम् । अभिचार-
मूलकर्म्मसु प्रवृत्तिः । आत्मार्थे क्रियारम्भः । अनाहिता-

ग्निता । देवर्षिपितृऋणानामनपक्रिया । असच्छास्त्राभिगमनम् । नास्तिकता । कुशीलवता । मद्यपस्त्रीनिषेवणम् । इत्युपपातकानि ॥ १—२४ ॥

उपपातकिनस्त्वेते कुर्य्युश्चान्द्रायणं नराः ।
पराकञ्च तथा कुर्य्युर्यजेयुर्गोसवेन वा ॥ २५

इति वैष्णवे धर्म्मशास्त्रे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

## अष्टत्रिंशोऽध्यायः ।

ब्राह्मणस्य रुजाकरणम् । अघ्रेयमद्ययोर्घ्रातिः । जैह्म्यम् । पशुषु मैथुनाचरणम् । पुंसि च । इति जातिभ्रंशकराणि ॥ १—६ ॥

जातिभ्रंशकरं कर्म कृत्वान्यतममिच्छया ।
कुर्य्यात् सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ ७

इति वैष्णवे धर्म्मशास्त्रेऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः ।

ग्राम्यारण्यानां पशूनां हिंसा सङ्करीकरणम् ॥ १

सङ्करीकरणं कृत्वा मासमश्नीत यावकम् ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तन्तु कारयेत् ॥ २

इति वैष्णवे धर्म्मशास्त्रे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ।

निन्दितेभ्यो धनादानं वाणिज्यं कुसीदजीवनमसत्य-
भाषणं शूद्रसेवनमित्यपात्रीकरणम् ॥ १

अपात्रीकरणं कृत्वा तप्तकृच्छ्रेण शुध्यति ।
शीतकृच्छ्रेण वा भूयो महासान्तपनेन वा ॥ २

इति वैष्णवे धर्म्मशास्त्रे चत्वारिंशोऽध्यायः ॥ ४० ॥

---

## एकचत्वारिंशोऽध्यायः ।

पक्षिणां जलचराणां जलजानांच घातनम् । कृमि-
कीटानांच । मद्यानुगतभोजनम् । इति मलावहानि ॥ १—४

मलिनीकरणीयेषु तप्तकृच्छ्रं विशोधनम् ।
कृच्छ्रातिकृच्छ्रमथवा प्रायश्चित्तं विशोधनम ॥ ५

इति वैष्णवे धर्म्मशास्त्रे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः ।

यदनुक्तं तत्प्रकीर्णम् ॥ १

प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम् ।
प्रायश्चित्तं बुधः कुर्य्याद् ब्राह्मणानुमतः सदाः ॥ २

इति वैष्णवे धर्म्मशास्त्रे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

# त्रिचत्वारिंशोऽध्यायः।

अथ नरकाः। तामिस्रम्। अन्धतामिस्रम्। रौरवम्। महारौरवम्। कालसूत्रम्। महानरकम्। सञ्जीवनम्। अवीचिः। तपनम्। सम्प्रतापनम्। संहातकम्। काकोलम्। कुड्मलम्। कुट्टानम्। पूतिमृत्तिकम्। लोहशङ्कुः। ऋचीषम्। विषमपन्थानम्। कण्टकशाल्मलिः। दीपनदी। असिपत्रवनम्। लोहचारकमिति। एतेष्वकृतप्रायश्चित्ता अतिपातकिनः पर्यायेण कल्पं पच्यन्ते। महापातकिनो मन्वन्तरम्। अनुपातकिनश्च। उपपातकिनश्चतुर्युगम्। कृतसङ्करीकरणाश्च। कृतापात्रीकरणाश्च। कृतमलिनीकरणाश्च। प्रकीर्णकपातकिनश्च बहून् वर्षयुगान्॥ १—२२

कृतपातकिनः सर्वे प्राणत्यागादनन्तरम्।
याम्यं पन्थानमासाद्य दुःखमश्नन्ति दारुणम्॥ २३
यमस्य पुरुषैर्घोरैः कृष्यमाणा यतस्ततः।
सुकृच्छ्रेणानुकारेण नीयमानाश्च ते यथा॥ २४
श्वभिः शृगालैः क्रव्यादैः काककङ्कबकादिभिः।
अग्नितुण्डैर्भक्ष्यमाणा भुजङ्गैर्वृश्चिकैस्तथा॥ २५
अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः।
क्रकचैः पाट्यमानाश्च पीड्यमानाश्च तृष्णया॥ २६
क्षुधया व्यथमानाश्च घोरैर्व्याघ्रगणैस्तथा।
पूयशोणितगन्धेन मूर्च्छमाना पदे पदे॥ २७

परान्नपानं लिप्सन्तस्ताड्यमानाश्च किङ्करैः।
काककङ्कवकादीनां भीमानां सदृशाननैः॥ ३८
क्वचित् क्वाथ्यन्ति तैलेन ताड्यन्ते मुषलैः क्वचित्।
आयसीषु च पच्यन्ते शिलासु च तथा क्वचित्॥ ३९
क्वचिद्वान्तमथाश्नन्ति क्वचित् पूयमसृक् क्वचित्।
क्वचिद्विष्ठां क्वचिन्मांसं पूयगन्धि सुदारुणम्॥ ४०
अन्धकारेषु तिष्ठन्ति दारुणेषु तथा क्वचित्।
कृमिभिर्भक्ष्यमाणाश्च वह्नितुण्डैश्च दारुणैः॥ ४१
क्वचिच्छीतेन बाध्यन्ते क्वचिद्वामेध्यमध्यगः।
परस्परमथाश्नन्ति क्वचित् प्रेताः सुदारुणाः॥ ४२
क्वचिद्भूतेन ताड्यन्ते लम्बमानास्तथा क्वचित्।
क्वचित् क्षिप्यन्ति बाणौघैरुत्कृत्यन्ते तथा क्वचित्॥ ४३
कण्ठेषु हस्तपादाश्च भुजङ्गाभोगवेष्टिताः।
पीड्यमानास्तथा यन्त्रैः कृष्यमाणाश्च जानुभिः॥ ४४
भग्नपृष्ठशिरोग्रीवाः सूचीकण्ठाः सुदारुणाः।
कूटागारप्रमाणैश्च शरीरैर्यातनाक्षमैः॥ ४५
एवं पातकिनः पापमनुभूय सुदुःखिताः।
तिर्य्यग्योनौ प्रपद्यन्ते दुःखानि विविधानि च॥ ४६

इति वैष्णवे धर्म्मशास्त्रे त्रिचत्वारिंशोऽध्यायः॥ ४३॥

## चतुश्चत्वारिंशोऽध्यायः।

अथ पापात्मनां नरकेष्वनुभूतदुःखानां तिर्य्यग्योनयो भवन्ति। अतिपातकिनां पर्य्यायेण सर्वाः स्थावरयोनयः। महापातकिनाञ्च कृमियोनयः। अनुपातकिनां पक्षियोनयः। उपपातकिनां जलजयोनयः। कृतजातिभ्रंशकराणां जलचरयोनयः। कृतसङ्करीकरणकर्म्मणां मृगयोनयः। कृतापात्रीकरणकर्म्मणां पशुयोनयः। कृतमलिनीकरणकर्म्मणां मनुष्येष्वस्पृश्ययोनयः। प्रकीर्णेषु प्रकीर्णा हिंस्राः क्रव्यादा भवन्ति। अभोज्यान्नाभक्ष्याशी कृमिः। स्तेनः श्येनः। प्रकृष्टवस्त्रापहारी विलेशयः। आखुर्धान्यहारी। हंसः कांस्यापहारी। जलं हृत्वाभिल्पवः। मधु दंशः। पयः काकः। रसं श्वा। घृतं नकुलं। मांसं गृध्रः। वसां मद्गुः। तैलं तैलपायिकः। लवणं चीचिवाक्। दधि वलाका। कौशेयं हृत्वा भवति तित्तिरिः। क्षौमं दर्द्दुरः। कार्पास तान्तवं क्रौञ्चः। गोधा गाम्। वाग्गुदोगुड़म्। कुच्छुन्दरिर्गन्धान्। पत्रशाकं बर्हि। कृतान्नं श्वावित्। अकृतान्नं शल्लकः। अग्निं बकः। गृहकार्य्युपस्करम्। रक्तवासांसि जवञ्जीवकः। गजं कूर्म्मः। अश्वं व्याघ्रः। फलं पुष्पं वा मर्कटः। ऋक्षः स्त्रियम्। यानमुष्ट्रः। पशूनजः॥१—४३

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः।
अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः॥ ४४

स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः ।
एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः ॥ ४५

इति वैष्णवे धर्म्मशास्त्रे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशोऽध्यायः ।

अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मनुष्येषु लक्षणानि भवन्ति । कुष्ठ्यतिपातकी । ब्रह्महा यक्ष्मी । सुरापः श्यावदन्तकः । सुवर्णहारी कुनखः । गुरुतल्पगो दुश्चर्म्मा । पूतिनासः पिशुनः । पूतिवक्त्रः सूचकः । धान्यचौरोऽङ्गहीनः । मिश्रचौरोऽतिरिक्ताङ्गः । अन्नापहारकस्त्वामयावी । वागपहारको मूकः । वस्त्रापहारकः श्वित्री । अश्वापहारकः पङ्गुः । देवब्राह्मणाक्रोशको मूकः । लोलजिह्वो गरदः । उन्मत्तोऽग्निदः । गुरुप्रतिकूलोऽपस्मारी । गोघ्नस्त्वन्धः । दीपापहारकश्च । काणश्च दीपनिर्वापकः । त्रपुचामरसीसकविक्रयी रजकः । एकशफविक्रयी मृगव्याधः । कुण्डाशी भगास्यः । वाणिटकः स्तेन । वार्द्धुषिको भ्रामरी । मिष्टाश्येकाकी वातगुल्मी । समयभेत्ता खल्वाटः । श्लीपद्यवकीर्णी । परहन्तिघ्नो दरिद्रः । परपीड़ाकरी दीर्घरोगी ॥ १—३१ ॥

एवं कर्म्मविशेषेण जायन्ते लक्षणान्विताः ।
रोगान्वितास्तथान्धाश्च कुब्जखञ्जैकलोचनाः ॥ ३२

वामना बधिरा मूका दुर्बलाश्च तथापरे।
तस्मात् सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत् ॥ २२
इति वैष्णवे धर्म्मशास्त्रे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः।

अथ कृच्छ्राणि भवन्ति। त्र्यहं नाश्नीयात्। प्रत्यहञ्च
त्रिषवणं स्नानमाचरेत्। त्रिः प्रतिस्नानमप्सु मज्जनम्।
मग्नस्त्रिरघमर्षणं जपेत्। दिवा स्थितस्तिष्ठेत्। रात्रा-
वासीनः। कर्म्मणोऽन्ते [illegible]। इत्यघमर्षणम्।
त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमयाचितमश्नीयादेष प्राजापत्यः।
त्र्यहमुष्णाः पिबेदपस्त्र्यहमुष्णं घृतं त्र्यहमुष्णं पयस्त्र्यहञ्च
नाश्नीयादेष तप्तकृच्छ्रः। एष एव शीतैः शीतकृच्छ्रः कृच्छ्राति-
कृच्छ्रः। पयसा दिवसैकविंशतिक्षपणम्। उदकसक्तूनां मासा-
भ्यवहारेणोदककृच्छ्रः। बिसाभ्यवहारेण मूलकृच्छ्रः। बिल्वा-
भ्यवहारेण श्रीफलकृच्छ्रः। पद्माक्षैर्वा निराहारस्य द्वादशा-
हेन पराकः। गोमूत्रगोमयक्षीरदधिसर्पिःकुशोदकान्येकदि-
वसमश्नीयाद्द्वितीयमुपवसेदेतत् सान्तपनम्। गोमूत्रादिभिः
प्रत्यहाभ्यस्तैर्महान्तपनम्। त्र्यहाभ्यस्तैश्चातिसान्तपनम्।
पिण्याकाचामतक्रोदकसक्तूनामुपवासान्तरितोऽभ्यवहारस्तु-
लापुरुषः। कुशपलाशोडुम्बरपद्मशङ्खपुष्पीवटब्रह्मसुवर्च्चलापत्रैः
क्वथितस्याम्भस प्रत्येकं पानेन पर्णकृच्छ्रः ॥ १—२३

कृच्छ्राण्येतानि सर्वाणि कुर्वीत कृतपावनः।
नित्यं त्रिषवणस्नायोऽधःशायी जितेन्द्रियः ॥ २४

स्त्रीशूद्रपतितानांच वर्ज्जयेच्चाभिभाषणम्।
पवित्राणि जपेन्नित्यं जुहुयाच्चैव शक्तितः॥ १५

इति वैष्णवे धर्म्मशास्त्रे षट्चत्वारिंशोऽध्यायः॥ ४६॥

---

## सप्तचत्वारिंशोऽध्यायः।

अथ चान्द्रायणम्। ग्रासानविकारानश्नीयात्। तांश्च-कलाभिवृद्धौ क्रमेण वर्द्धयेद्धानौ ह्रासयेदमावास्यां नाश्नीयादेष चान्द्रायणो यवमध्यः। पिपीलिकामध्यो वा। यस्या-मामावस्या मध्ये भवति स पिपीलिका मध्यः। यस्य पौर्णमासी स यवमध्यः। अष्टौग्रासान् प्रतिदिवसं मास-मश्नीयात् स यतिचान्द्रायणः। सायं प्रातश्चतुरश्चतुरः स शिशुचान्द्रायणः। यथा कथञ्चित् षष्ठ्यौनां त्रिशतीं मासेना-श्नीयात् स सामान्यचान्द्रायणः॥ १—९॥

व्रतमेतत् पुरा भूमि कृत्वा सप्तर्षयोऽमलाः।
प्राप्तवन्तः परं स्थानं ब्रह्मा रुद्रस्तथैव च॥ १०

इति वैष्णवे धर्म्मशास्त्रे सप्तचत्वारिंशोऽध्यायः॥ ४७॥

---

## अष्टचत्वारिंशोऽध्यायः।

अथ कर्म्मभिरात्मकृतैर्गुरुमात्मानं मन्येतात्मार्थं प्रसृति-यावकं श्रपयेत्। न ततोऽग्नौ जुहुयात्। न चात्र बलिकर्म्म।

घमृतं श्रप्यमाणं शृतञ्चाभिमन्त्रयेत्। श्रप्यमाणे रक्षां कुर्य्यात्। ब्रह्मा देवानां पदवीः कवीनां ऋषिर्विप्राणां महिषो मृगाणां श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्निति दर्भान् बध्नाति। शृतञ्च तमश्नीयात् पात्रे निषिच्य। ये देवा मनोजाता मनोजुषः सुदक्षा दक्षपितरः ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेत्यात्मनि जुहुयात्। अथाचान्तो नाभिमालभेत। स्नाताः प्रीता भवत यूयमापोऽस्माकमुदरे यवाः। ता अस्मभ्यमनमी वा अयक्ष्मा अनागसः सन्तु देवीरमृता ऋता इध इति। त्रिरात्रं मेधावी। षड्रात्रं पापकृत्। सप्तरात्रं पीत्वा महापातकिनामन्यतमः पुनाति। द्वादशरात्रेण पूर्वपुरुषकृतमपि पापं निर्दहति। मासं पीत्वा सर्वपापानि। गोनिर्हारमुक्तानां यवानामेकविंशतिरात्रञ्च॥ १—१६॥

यवोऽसि धान्यराजोऽसि वारुणो मधुसंयुतः।
निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतम्॥ १७

घृतमेव मधु यवा आपो वा अमृतं यवाः।
सर्वं पुनीत मे पापं यन्मे किंचन दुष्कृतम्॥ १८

वाचा कृतं कर्मकृतं मनसा च विचिन्तितम्।
अलक्ष्मीं कालकर्णीञ्च नाशयध्वं यवा मम॥ १९

श्वशूकरावलीढञ्च उच्छिष्टोपहतं च यत्।
मातापित्रोरशुश्रूषां पुनीध्वञ्च यवा मम॥ २०

गणान्नं गणिकान्नं च शूद्रान्नं श्राद्धसूतकम्।
चौरस्यान्नं नवश्राद्धं पुनीध्वं च यवा मम॥ २१

वालधूर्त्तमधर्म्मञ्च राजद्वार कृतंच यत्।
सुवर्णस्तैन्यमव्रात्यमयाज्यस्य च याजनम्।
ब्राह्मणानां परीवादं पुनोध्व च यथा मम ॥ २१
इति वैष्णवे धर्म्मशास्त्रेऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः।

मार्गशीर्षशुक्लैकादश्यामुपोषितो द्वादश्यां भगवन्तं वासुदेवमर्च्चयेत्। पुष्पधूपानुलेपनदीपनैवेद्यैब्राह्मणतर्पणैश्च। व्रतमेतत् संवत्सरं कृत्वा पापेभ्यः पूतो भवति। यावज्जीवं कृत्वा श्वेतद्वीपमाप्नोति। उभयपक्षद्वादशीष्वेवं स्वर्गलोकं प्राप्नोति। यावज्जीवं कृत्वा विष्णोर्लोकमाप्नोति। एवमेव पं॰ल्यशीष्वापे ॥ १—७ ॥

ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च।
योगभूतं परिचरं केशवं महदाप्नुयात् ॥ ८
इश्चेते सहितौ यस्यां दिवि चन्द्रवृहस्पती।
पौर्णमासी तु महती प्रोक्ता संवत्रे तु सा ॥ ९
तस्यां दानोपवासाद्यमक्षयं परिकीर्त्तितम्।
तथैव द्वादशी शुक्ला या स्याच्छ्रवणसंयुता ॥ १०
इति वैष्णवे धर्म्मशास्त्रे एकोनपंचाशोऽध्यायः । ४९ ॥

---

# पञ्चाशोऽध्यायः।

वने पर्णकुटीं कृत्वा वसेत्। त्रिषवणं स्नायात्। स्वकर्म चाचक्षाणो ग्रामे भैक्षमाचरेत्। तृणशायी च स्यात्। एतन्महाव्रतम्। ब्राह्मणं हत्वा द्वादशसंवत्सरं कुर्यात्। यागस्थं क्षत्रियं वा। गुर्विणीं रजस्वलां वा। अत्रिगोत्रां वा नारीम्। मित्रं वा। नृपतिवधे महाव्रतमेव द्विगुणं कुर्यात्। पादोनं क्षत्रियवधे। अर्द्धं वैश्यवधे। तदर्द्धं शूद्रवधे। सर्वेषु शवशिरोध्वजी स्यात्। सर्वेषु जीवेषु चर्मी स्यात्। मासमेकं कृतवापनो गवानुगमनं कुर्यात्। आसीनास्वासीत। स्थितासु स्थितः स्यात्। अवसन्नां चोद्धरेत्। भयेभ्यश्च रक्षेत्। तासां शीतादिवारणमकृत्वा नात्मनः कुर्यात्। गोमूत्रेण स्नायात् गोरसैश्च वर्त्तेत। एतद्गोव्रतं गोवधे कुर्यात्। गजं हत्वा पंच नीलान् वृषभान् दद्यात्। तुरगं वासः। एकहायनमनड्वाहं खरवधे। मेषाजवधे च। सुवर्णकृष्णलमुष्ट्रवधे। श्वानं हत्वा त्रिरात्रमुपवसेत्। हत्वा मूषकमार्जारनकुलमण्डूकडुण्डुभाजगराणामन्यतममुपोषितः कृसरान्नं भोजयित्वा लोहदण्डं दक्षिणां दद्यात् गोधोलुककाकझषवधे त्रिरात्रमुपवसेत्। हंसबककबलाकमद्गुवानरश्येनभासचक्रवाकाणामन्यतमं हत्वा ब्राह्मणाय गां दद्यात्। सर्पं हत्वा आभ्रीं कार्ष्णायसीम्। षण्ढं हत्वा पलालभारकम्। वराहं हत्वा घृतकुम्भम्। तित्तिरिं तिलद्रोणम्। शुकं द्विहायनं वत्सम्। क्रौञ्चं

विहायणम्। क्रव्यादमृगवधे पयस्विनीं गां दद्यात्। अक्रव्यादमृगवधे वत्सतरीम्। अनुक्तमृगवधे त्रिरात्रं पयसा वर्त्तेत। पक्षिवधे नक्ताशी स्यात्। रूप्यमाषकं वा दद्यात्। हत्वा जलचरमुपवसेत्॥ १—४५॥

अस्थन्वतान्तु सत्त्वानां सहस्रस्य प्रमापणे।
पूर्णे चानस्थमस्थान्तु शूद्रहत्याव्रतं चरेत्॥ ४६
किंचिदेव तु विप्राय दद्यादस्थिमतां वधे।
अनस्थांचैव हिंसायां प्राणायामेन शुध्यति॥ ४७
फलदानान्तु वृक्षाणां छेदने जप्यमृक्शतम्।
गुल्मवल्लीलतानांच पुष्पितानांच वीरुधाम्॥ ४८
अन्नाद्यजानां सत्त्वानां रसजानांच सर्वशः।
फलपुष्पोद्भवानांच घृतप्राशो विशोधनम्॥ ४९
कृष्टजानामोषधीनां जातानांच स्वयं वने।
वृथालम्भे तु गच्छेद्गां दिनमेकं पयोव्रतः॥ ५०
इति वैष्णवे धर्मशास्त्रे पंचाशोऽध्यायः॥ ५०॥

---

## एकपञ्चाशोऽध्यायः।

सुरापः सर्वकर्मवर्ज्जितः कणान् वर्षमश्नीयात्। मलानां मद्यानांच अन्यतमस्य प्राशने चान्द्रायणं कुर्य्यात्। लशुनपलाण्डुगृञ्जनैतद्गन्धिविड्वराहग्राम्यकुक्कुटवानरगोमांसभक्षणे च। सर्व्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्य्यात्। वपनमेखलादण्डभैक्ष्यचर्य्याव्रतानि पुनःसंस्कारकर्म्मणि वर्ज्जनीयानि। शशकमल्लकगोधाखड्गकूर्म्मवर्ज्जं

पञ्चनखमांसाशने सप्तरात्रमुपवसेत्। गणगणिकास्तेन-गायनान्नानि भुक्त्वा सप्तरात्रं पयसा वर्त्तेत। तक्षकान्नं चर्म्मकर्त्तश्च। वार्द्धुषिककदर्य्यदीक्षितबद्धनिगडाभिशस्तषण्ढा-नाञ्च। पुंश्चलीदाम्भिकचिकित्सकलुब्धकक्रूरोग्रोच्छिष्टभोजि-नाञ्च। अवीरास्त्रीसुवर्णकारसपत्नपतितानाञ्च। पिशुनानृत-वादित्यक्तधर्म्मारसविक्रयिणाञ्च। शैलूषतन्तुवायकृतघ्न-रजकानाञ्च। कर्म्मकारनिषादरङ्गावतारिवेणुशस्त्रविक्रयि-णाञ्च। श्वजीविशौण्डिकतैलिकचैलनिर्णेजकानाञ्च। रज-स्वला सहोपपतिवेश्मनाञ्च। भ्रूणघ्नावेक्षितमुदक्यासंस्पृष्टं पतत्रिणावलीढं शुना संस्पृष्टं गवाघ्रातञ्च। कामतः पदा स्पृष्टमवक्षुतम्। मत्तक्रुद्धातुराणाञ्च। नार्च्चितं वृथा-मांसञ्च। पाठीनरोहितराजीवसिंहतुण्डशकुलवर्ज्जं सर्व-मत्स्यमांसाशने त्रिरात्रमुपवसेत्। सर्व्वजलजमांसाशने च। अपः सुराभाण्डस्थाः पीत्वा सप्तरात्रं शङ्खपुष्पीशृतं पयः पिबेत्। मद्यभाण्डस्थाश्च पञ्चरात्रम्। सोमपः सुरापस्या-घ्रायास्य-गन्धमुदकमग्नस्त्रिरघमर्षणं जप्त्वा घृतप्राशनो भवेत्। खरोष्ट्रकाकमांसाशने चान्द्रायणं कुर्य्यात्। प्राश्याज्ञातं सूनास्थं शुष्कमांसञ्च। क्रव्यादमृगपक्षिमांसाशने तप्तकृच्छ्रम्। कलविङ्कप्लवचक्रवाकहंसरज्जुदालसारसदात्यूहशुकसारिका-बकबलाकाकोकिलखञ्जरीटाशने त्रिरात्रमुपवसेत्। एक-शफोभयदन्ताशने च। तित्तिरिकपिञ्जललावकवर्त्तिका-मयूरवर्ज्जं सर्व्वपक्षिमांसाशने चाहोरात्रम्। कीटाशने दिन-मेकं ब्रह्मसुवर्च्चलां पिबेत्। शुनां मांसाशने च। छत्राक-कवकाशने सान्तपनम्। यवगोधूमपयोविकारं स्नेहाक्तं

शुक्तं खाण्डवं च वर्ज्जयित्वा पर्य्युषितं तत्प्राश्योपवेसत्।
अवनामेध्यप्रभवांल्लोहितांश्च वृक्षनिर्यासान्। शालुकवृथा-
कृसरसंयावपायसापूपशष्कुलीदेवान्नानि हवींषि च। गोऽ-
जामहिषीवर्ज्जं सर्व्वपयांसि च। अनिर्द्दशाहानि तान्यपि।
स्यन्दिनीसन्धिनीविवत्साक्षीरं च। अमेध्यभुजश्च। दधिवर्ज्जं
केवलानि च शुक्तानि। ब्रह्मचर्य्याश्रमी श्राद्धभोजने प्राजा-
पत्यम्। दिनमेकञ्चोदके वसेत्। मधुमांसाशने प्राजापत्यम्।
विड़ालकाकनकुलाखूच्छिष्टभक्षणे ब्रह्मसुवर्च्चलां पिबेत्।
श्वोच्छिष्टाशने दिनमेकमुपोषितः पञ्चगव्यं पिबेत्। पंचनख-
विणमूत्राशने सप्तरात्रम्। आमश्राद्धाशने त्रिरात्रं पयसा
वर्त्तेत। ब्राह्मणः शूद्रोच्छिष्टाशने सप्तरात्रम्। वैश्योच्छिष्टा-
शने पंचरात्रम्। राजन्योच्छिष्टाशने त्रिरात्रम्। ब्राह्मणो-
च्छिष्टाशने त्वेकाहम्। राजन्यः शूद्रोच्छिष्टाशी पंचरात्रम्।
वैश्योच्छिष्टाशी त्रिरात्रम्। वैश्यः शूद्रोच्छिष्टाशी च।
चाण्डालान्नं भुक्त्वा त्रिरात्रमुपवसेत्। सिद्धं भुक्त्वा
पराकः॥ १—५८॥

असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथञ्चन।
मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः॥ ५९
यावन्ति पशुरोमाणि तावत् कृत्वेह मारणम्।
वृथापशुघ्नः प्राप्नोति प्रेत्य चेह च निष्कृतिम्॥ ६०
यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा।
यज्ञोऽस्य भूत्यै सर्व्वस्य तस्माद्यज्ञे वधोऽवधः॥ ६१
न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः।
यादृशं भवति प्रेत्य वृथामांसानि खादतः॥ ६२

ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रिता पुनः॥ ६३
मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेति कथंचन॥ ६४
यज्ञार्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः।
आत्मानंच पशूंश्चैव गमयत्युत्तमां गतिम्॥ ६५
गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः।
नावेदविहितां हिंसामापद्यपि समाचरेत्॥ ६६
या वेदविहिता हिंसा नियतास्मिंश्चराचरे।
अहिंसामेव तां विद्याद्वेदाद्धर्म्मो हि निर्बभौ॥ ६७
योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।
स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते॥ ६८
यो बन्धनवधक्लेशान् प्राणिनां न चिकीर्षति।
स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते॥ ६९
यद्ध्यायति यत् कुरुते रतिं बध्नाति यत्र च।
तदवाप्नोति यत्नेन यो हिनस्ति न किंचन॥ ७०
नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्ज्जयेत्॥ ७१
समुत्पत्तिंच मांसस्य वधबन्धौ च देहिनाम्।
प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात्॥ ७२
न भक्षयति यो मांसं विधिं हित्वा पिशाचवत्।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते॥ ७३
अनुमन्ता विशसिता निहन्ता क्रयविक्रयी।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः॥ ७४

स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति।
अनभ्यर्च्य पितॄन् देवांस्ततोऽन्यो नास्त्यपुण्यकृत्॥ ७५
वर्षे वर्षेऽश्वमेधेन योऽयजेत शतं समाः।
मांसानि च न खादेद्यस्तस्य पुण्यफलं समम्॥ ७६
फलमूलाशनैर्मेध्यैर्मुन्यन्नानांच भोजनैः।
न तत् फलमवाप्नोति यन्मांसपरिवर्ज्जनात्॥ ७७
मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः॥ ७८
इति वैष्णवे धर्म्मशास्त्रे एकोनपंचाशोऽध्यायः॥ ५१॥

---

## द्विपञ्चाशोऽध्यायः।

सुवर्णस्तेयकृद्राज्ञे कर्म्माचक्षाणो मुषलमर्पयेत्। वधात् त्यागाद्वा प्रयतो भवति। महाव्रतं द्वादशाब्दानि वा कुर्य्यात्। निक्षेपापहारी च। धान्यधनापहारी च कृच्छ्रमब्दम्। मनुष्यस्त्रीकूपक्षेत्रवापीनामपहरणे चान्द्रायणम्। द्रव्याणामल्पसाराणां सान्तपनम्। भोज्यभोज्यपानशय्यासनपुष्पमूलफलानां पंचगव्यपानम्। तृणकाष्ठद्रुमशुष्कान्नगुड़वस्त्रचर्म्मामिषाणां त्रिरात्रमुपवसेत्। मणिमुक्ताप्रवालताम्ररजतायःकांस्यानां द्वादशाहं कणानश्नीयात्। कार्पासकीटजोर्णाद्यपहरणे त्रिरात्रमुपवसेत्। पक्षिगन्धौषधिरज्जुवैदलनामपहरणे दिनमुपवसेत्॥ १—१३॥

दत्त्वैवापहृतं द्रव्यं धनिकस्याप्युपायतः।
प्रायश्चित्तं ततः कुर्य्यात् कल्मषस्यापनुत्तये॥ १४

यद्यद् परेभ्य आदद्यात् पुरुषस्तु निरङ्कुशः।
तेन तेन विहीनः स्याद्यत्रयत्राभिजायते॥ १५
जीवितं धर्म्मकामौ च धने यस्मात् प्रतिष्ठितौ।
तस्मात् सर्व्वप्रयत्नेन धनहिंसां विवर्ज्जयेत्॥ १६
प्राणिहिंसापरो यस्तु धनहिंसापरस्तथा।
महादुःखमवाप्नोति धनहिंसापरस्तयोः॥ ॥ १७

इति वैष्णवे धर्म्मशास्त्रे द्विपंचाशोऽध्यायः॥ ५२॥

---

## त्रिपञ्चाशोऽध्यायः।

अथागम्यागमने महाव्रतविधानेनाब्दं चीरवासा वने प्राजापत्यं कुर्य्यात्। परदारगमने च। गोव्रतं गोगमने च। पुंस्ययोनावाकाशेऽप्सु दिवा गोयाने च सवासाः स्नानमाचरेत्। चाण्डालीगमने तत्साम्यमवाप्नुयात्। अज्ञानतश्चान्द्रायणद्वयं कुर्य्यात्। पशुवेश्यागमने प्राजापत्यम्। सकृद्दुष्टा स्त्री यत् पुरुषस्य परदारे तद्व्रतं कुर्य्यात्॥१—८॥
यत् करोत्येकरात्रेण वृषलीसेवनाद्द्विजः।
तद्भैक्ष्यभुग्जपन नित्यं त्रिभिर्व्वर्षैर्व्यपोहति॥ ९

इति वैष्णवे धर्म्मशास्त्रे त्रिपंचाशोऽध्यायः॥ ५३॥

---

## चतुःपंचाशोऽध्यायः ।

यः पापात्मा येन सह संयुज्यते स तस्यैव प्रायश्चित्तं कुर्य्यात् । अतःचनखात् कूपादत्यन्तोपहताच्चोदकं पीत्वा ब्राह्मणस्त्रिरात्रमुपवसेत् । द्व्यहं राजन्यः । एकाहं वैश्यः । शूद्रो नक्तम् । सर्व्वे चान्ते व्रतस्य पंचगव्यं पिबेयुः ॥ १—६ ॥

पंचगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत् ।
उभौ तौ नरकं यातो महारौरवसंज्ञितम् ॥ ७

मर्भीमारोग्यवर्ज्जमृतावगच्छन् पत्नीं त्रिरात्रमुपवसेत् । कूटसाक्षी ब्रह्महत्याव्रतं चरेत् । अनुदकमूत्रपुरीषकरणे सचैलस्नानं महाव्याहृतिहोमश्च । सूर्य्याभ्युदितनिर्म्मुक्तः सचैलस्नातः सावित्र्यष्टशतमावर्त्तयेत् । श्वसृगालविड्वराहखरवानरवायसपुंश्चलीभिर्दष्टः स्रवन्तीमासाद्य षोड़श प्राणायामान् कुर्य्यात् । वेदाग्न्युत्सादी त्रिषवणस्नाय्यधःशायी संवत्सरं सकृद्भैक्ष्येण वर्त्तेत । समुत्कर्षानृते गुरोश्चालीकनिर्बन्धे तदाक्षेपणे च मासं पयसा वर्त्तेत । नास्तिको नास्तिकवृत्तिः कृतघ्नः कूटव्यवहारी ब्राह्मणवृत्तिघ्नश्चैते संवत्सरं भैक्ष्येण वर्त्तेरन् । परिवित्तिः परिवेत्ता यया च परिविन्दते दाता याजकश्च चान्द्रायणं कुर्य्यात् । प्राणिभूपुष्पसोमविक्रयी तप्तकृच्छ्रं कुर्य्यात् । आर्द्रौषधिगन्धपुष्पफलमूलचर्म्मवैत्रवैदलतुषकपालकेशभस्मास्थिगोरसपिण्याकतिलतैलविक्रयी प्राजापत्यम् । श्लेष्मजतुमधूच्छिष्टशङ्खपुशुक्तिमौक्तिककाष्ठोडुम्बरखड्गपात्रविक्रयी चान्द्रायणं

शुध्यति। रक्तवस्त्ररङ्गरत्नगन्धगुड़मधुरसोर्णाविक्रयी त्रिरात्र-
मुपवसेत्। मांसलवणलाक्षाक्षीरविक्रयी चान्द्रायणं कुर्य्यात्।
तंच भूयश्चोपनयेत्। उष्ट्रेण खरेण वा गत्वा नग्नः स्नात्वा
सुप्त्वा भुक्त्वा प्राणायामत्रयं कुर्य्यात्॥ १—२३॥

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्॥ २४
अयाज्ययाजनं कृत्वा परेषामन्त्यकर्म्म च।
अभिचारमहीनंच त्रिभिः कृच्छ्रैर्व्यपोहति॥ २५
येषां द्विजाना सावित्री नानूच्येत यथाविधि।
तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत्॥ २६
प्रायश्चित्तं चिकीर्षन्ति विकर्म्मस्थास्तु ये द्विजाः।
ब्राह्मणाश्च परित्यक्तास्तेषामप्येतदादिशेत्॥ २७
यद्‌गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुध्यन्ति जप्येन तपसा तथा॥ २८
वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्॥ २९
अवगूर्य्यचरेत् कृच्छ्रमतिकृच्छ्रं निपातने।
कृच्छ्रातिकृच्छ्रं कुर्वीत विप्रस्योत्पाद्य शोणितम्॥ ३०
एनस्विभिरनिर्णिक्तैर्नार्थं किंचित् समाचरेत्।
कृतनिर्णेजनांश्चैतान्न जुगुप्सेत धर्म्मवित्॥ ३१
बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्म्मतः।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्॥ ३२
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोड़शः।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च॥ ३३

अनुक्तनिष्कृतीनाञ्च पापानामपनुत्तये।
शक्तिं चावेक्ष्य पापं च प्रायश्चित्तं प्रकल्पयेत्॥ ३४

इति वैष्णवे धर्म्मशास्त्रे चतुःपंचाशोऽध्यायः॥ ५४॥

---

## पंचपंचाशोऽध्यायः।

अथ रहस्यप्रायश्चित्तानि भवन्ति। स्रवन्तीमासाद्य स्नातः प्रत्यहं षोड़श प्राणायामान् कृत्वैककालं हविष्याशी मासेन ब्रह्महा पूतो भवति। कर्म्मणोऽन्ते पयस्विनीं गां दद्यात्। व्रतेनाघमर्षणेन च सुरापः पूतो भवति। गायत्री-दशसाहस्रजपेन सुवर्णस्तेयकृत्। त्रिरात्रोपोषितः पुरुष सूक्तजपहोमाभ्यां गुरुतल्पगः॥ १—६॥

यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः।
तथाघमर्षणं सूक्तं सर्वपापापनोदनम्॥ ७
प्राणायामं द्विजः कुर्य्यात् सर्वपापापनुत्तये।
दह्यन्ते सर्वपापाणि प्राणायामैर्द्विजस्य तु॥ ८
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते॥ ९
अकारंचाप्युकारंच मकारंच प्रजापतिः।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीति च॥ १०
त्रिभ्य एव च वेदेभ्यः पादं पादमदूदुहत्।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः॥ ११
एतदक्षरमेतांच जपन् व्याहृतिपूर्व्विकाम्।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते॥ १२

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।
महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते ॥ १३
एतत्त्रयविसंयुक्ता काले च क्रियया स्वया ।
विप्रक्षत्रियविड्जातिर्गर्हणां याति साधुषु ॥ १४
ओङ्कारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥ १५
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान् ॥ १६
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः ।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते ॥ १७
क्षरन्ति सर्व्ववैदिक्यो जुहोति यजति क्रियाः ।
अक्षरन्त्वक्षयं ज्ञेयं ब्रह्मा चैव प्रजापतिः ॥ १८
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशु स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विता ।
सर्व्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥ २०
जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यन्नवा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥ २१
इति वैष्णवे धर्म्मशास्त्रे पंचपंचाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः।

अथातः सर्ववेदपवित्राणि भवन्ति। येषां जपैश्च होमैश्च द्विजातयः पापेभ्यः पूयन्ते। अघमर्षणम्। देवकृतम्। शुद्धवत्यः। तरत्समन्दीयम्। कूष्माण्ड्यः। पावमान्यः। दुर्गासावित्री। अतिषङ्गाः। पदस्तोभाः। सामानि व्याहृतयः। आज्यदोहानि। चन्द्रसाम। पुरुषव्रते सामनी। आब्लिङ्गम्। बार्हस्पत्यम्। गोसूक्तम्। अश्वसूक्तम्। सामनी चन्द्रसूक्ते च। शतरुद्रियम्। अथर्वशिरः। त्रिसुपर्णम्। महाव्रतम्। नारायणीयम्। पुरुषसूक्तं च।१—२६॥

गीताज्यदोहानि रथन्तरं च
अग्निव्रतं वामदेव्यं बृहच्च।
एतानि गीतानि पुनन्ति जन्तून्
जातिस्मरत्वं लभते य इच्छेत्॥ २७

इति वैष्णवे धर्मशास्त्रे षट्पञ्चाशोऽध्यायः॥ ५६॥

---

## सप्तपञ्चाशोऽध्यायः।

अथ त्याज्याः। व्रात्याः। पतिताः। त्रिपुरुषं मातृतः पितृतश्चाशुद्धाः। सर्व एवाभोज्याश्चाप्रतिग्राह्याः। अप्रतिग्राह्येभ्यश्च प्रतिग्रहप्रसङ्गं वर्जयेत्। प्रतिग्रहेण ब्राह्मणानां ब्राह्मं तेजः प्रणश्यति। द्रव्याणां वाविज्ञाय प्रतिग्रहविधिं यः प्रतिग्रहं कुर्यात् स दात्रा सह निमज्जति। प्रतिग्रह-

समर्थश्च यः प्रतिग्रहं वर्ज्जयेत् स दातृलोकमाप्नोति।
एधोदकमूलफलाभयामिषमधुशय्यासनगृहपुष्पदधिशाकां-
श्चाभ्युद्यतान् न निर्णुदेत्॥ १—१०॥

आहृयाभ्युद्यतां भिक्षां पुरस्तादनुचोदिताम्।
ग्राह्यां प्रजापतिर्मेने अपि दुष्कृतकर्म्मणः॥ ११

नाश्नन्ति पितरस्तस्य दशवर्षाणि पंच च।
न च हव्यं वहत्यग्निर्यस्तामभ्यवमन्यते॥ १२

गुरून् भृत्यांश्चोज्जिहीर्षुरर्चिष्यन् पितृदेवताः।
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत् स्वयं ततः॥ १३

एतेष्वपि च कार्य्येषु समर्थस्तत्प्रतिग्रहे।
नादद्यात् कुलटाषण्ढपतितेभ्यस्तथा द्विषः॥ १४

गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन्।
आत्मनो वृत्तिमन्विच्छन् गृह्णीयात् साधुतः सदा॥ १५

आर्द्धिकः कुलमित्रं च दासगोपालनापिताः।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्॥ १६

इति वैष्णवे धर्म्मशास्त्रे सप्तपञ्चाशोऽध्यायः॥ ५७॥

---

## अष्टपञ्चाशोऽध्यायः।

अथ गृहाश्रमिणस्त्रिविधोऽर्थो भवति। शुक्लः शब-
लोऽसितश्च। शुक्लेनार्थेन यदौर्द्धदेहिकं करोति तद्देवत्वमा-
सादयति। यच्छबलेन तन्मानुष्यम्। यत् कृष्णेन तत्
तिर्य्यक्त्वम्। स्ववृत्त्युपार्ज्जितं सर्व्वं सर्व्वेषां शुक्लम्। अनन्तर-
वृत्त्युपात्तं शबलम्। अन्तरितवृत्त्युपात्तंच कृष्णम्॥१—८॥

क्रमागतं प्रीतिदायः प्राप्तं च सह भार्य्यया ।
अविशेषेण सर्व्वेषां धनं शुक्लं प्रकीर्त्तितम् ॥ ९
उत्कोचशुल्कसम्प्राप्तमविक्रेयस्य विक्रयैः ।
कृतोपकारादाप्तं च शवलं समुदाहृतम् ॥ १०
पार्श्विकद्यूतचौर्य्याप्तप्रतिरूपकसाहसैः ।
व्याजेनोपार्ज्जितं यच्च तत् कृष्णं समुदाहृतम् ॥ ११
यथाविधेन द्रव्येण यत्किञ्चित् कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥ १२
इति वैष्णवे धर्म्मशास्त्रेऽष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

## एकोनषष्टितमोऽध्यायः ।

गृहाश्रमी वैवाहिकाग्नौ पाकयज्ञान् कुर्य्यात् । सायं प्रातश्चाग्निहोत्रम् । देवताभ्यो जुहुयात् । चन्द्रार्कसन्निकर्ष-विप्रकर्षयोर्द्दर्शपूर्णमासाभ्यां यजेत । प्रत्ययनं पशुना । शरद्ग्रीष्मयोश्चाग्रयणेन । व्रीहियवयोर्वा पाके । त्रैवार्षिकाभ्यधिकान्नः । प्रत्यब्दं सोमेन । वित्ताभावे इष्ट्या वैश्वानर्य्या । शूद्रान्नं यागी परिहरेत् । यज्ञार्थं भिक्षितमवाप्तमर्थं सकलमेव वितरेत् । सायं प्रातर्वैश्वदेवं जुहुयात् । भिक्षां च भिक्षवे दद्यात् । अर्च्चितभिक्षादानेन गोदानफलमवाप्नोति । भिक्षाभावे तस्मात् गवां दद्यात् । वह्नौ वा प्रक्षिपेत् । भुक्तेऽप्यन्ने विद्यमाने न भिक्षुकः प्रत्याचक्षीत । कण्डनी पेषणी चुल्ली कुम्भ उपस्कर इति पंचसूना गृहस्थस्य । तन्निष्कृत्यर्थञ्च ब्रह्मदेवभूतपितृमनुष्ययज्ञान् कुर्य्यात् । स्वाध्यायो

ब्रह्मयज्ञः। होमो दैवः। बलिर्भौतः। पितृतर्पणं पित्र्यः।
नृयज्ञश्चातिथिपूजनम् ॥ १—२५ ॥

देवतातिथिभृत्यानां पितॄणामात्मनस्तथा।
न निर्वपति पंचानामुच्छ्वसन् न स जीवति ॥ २६
ब्रह्मचारी यतिर्भिक्षुर्जीवन्त्येते गृहाश्रमात्।
तस्मादभ्यागतानेतान् गृहस्थो नावमानयेत् ॥ २७
गृहस्थ एव यजते गृहस्थस्तप्यते तपः।
ददाति च गृहस्थस्तु तस्माज्ज्येष्ठो गृहाश्रमी ॥ २८
ऋषयः पितरो देवाः भूतान्यतिथयस्तथा।
आशासते कुटुम्बिभ्यस्तस्माच्छ्रेष्ठो गृहाश्रमी ॥ २९
त्रिवर्गसेवां सततान्नदानं, सुरार्चनं ब्राह्मणपूजनंच।
स्वाध्यायसेवां पितृतर्पणंच, कृत्वा गृही शक्रपदं प्रयाति।

इति वैष्णवे धर्मशास्त्रे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः।

ब्राह्मे मुहूर्त्ते उत्थाय मूत्रपुरीषोत्सर्गं कुर्य्यात्। दक्षिणाभिमुखो रात्रौ दिवा चोदङ्मुखः सन्ध्ययोश्च। नान्तर्द्धापितायां भूमौ। न फालकृष्टायाम्। न छायायाम्। नचोषरे। न शाद्वले। न ससत्त्वे। न गर्त्ते। न वल्मीके। न पथि। न रथ्यायाम्। न पराशुचौ। नोद्याने। नोद्यानोदकसमीपयो। नाङ्गारे। न भस्मनि। न गोमये। न गोव्रजे। नाकाशे। नोदके। न प्रत्यनिलानलेन्दर्कस्त्रीगुरुब्राह्मणानांच। नैवावगुण्ठितशिराः। लोष्टेष्टकाभिः

परिमृज्य गुदं गृहीतशिश्नश्चोत्थायाद्भिर्मृद्भिश्चोद्धृताभिर्गन्ध-
लेपक्षयकरं शौचं कुर्य्यात्॥ १—२४॥

एका लिङ्गे गुदे तिस्रस्तथैकत्र करे दश।
उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः॥ २५
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्।
त्रिगुणञ्च वनस्थानां यतीनाञ्च चतुर्गुणम्॥ २६

इति वैष्णवे धर्म्मशास्त्रे षष्टितमोऽध्यायः॥ ६०॥

---

## एकषष्टितमोऽध्यायः।

अथ पालाशं दन्तधावनं नाद्यात्। नैवश्लेष्मातकारिष्ट-
विभीतकधवधन्वनजम्। न च बन्धुकनिर्गुण्डीशिग्रुतिल्व
तिन्दुकजम्। न च कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलु-
जम्। न पारिभद्राम्लिकामोचकशाल्मलीशणजम्। न मधु-
रम्। नाम्लम्। नोर्द्ध्वशुष्कम्। न शुषिरम्। न पूतिगन्धि।
न पिच्छिलम्। न दक्षिणापराभिमुखः। उदङ्मुखः
प्राङ्मुखो वा। वटासनार्कखदिरकरञ्जबदरसर्ज्जनिम्बारि-
मेदापामार्गमालतीककुभविल्वानामन्यतमम्। कषायं तिक्तं
कटुकञ्च॥ १—१५॥

कनीन्यग्रसमस्थौल्यं सकूर्चं द्वादशाङ्गुलम्।
प्रातर्भुक्त्वा च यतवाग्भक्षयेद्दन्तधावनम्॥ १६
प्रक्षाल्य भुक्त्वा तज्जह्याच्छुचौ देशे प्रयत्नतः।
अमावास्यां न चाश्नीयाद्दन्तकाष्ठं कदाचन॥ १७

इति वैष्णवे धर्म्मशास्त्रे एकषष्टितमोऽध्यायः॥ ६१॥

## द्विषष्टितमोऽध्यायः।

अथ द्विजातीनां कनीनिकामूले प्राजापत्यं नाम तीर्थम्। अङ्गुष्ठमूले ब्राह्मम्। अङ्गुल्यग्रे दैवम्। तर्ज्जनी-मूले पित्र्यम्। अनन्युष्णाभिरफेनिलाभिर्नशूद्रैकवाराकर्जिताभिरक्षाराभिरद्भिः शुचौ देशे स्वासीनोऽन्तर्जानुः प्राङ्मुखश्चोदङ्मुखो वा तन्मनाः सुमनाश्चाचामेत्। ब्राह्मेण तीर्थेन त्रिराचामेत्। द्विः प्रमृज्यात्। खान्यद्भिर्मूर्द्धानं हृदयं स्पृशेत्॥ १—८॥

हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः।
शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः॥ ९

इति वैष्णवे धर्मशास्त्रे द्विषष्टितमोऽध्यायः॥ ६२॥

---

## त्रिषष्टितमोऽध्यायः।

अथ योगक्षेमार्थमीश्वरमुपगच्छेत्। नैकोऽध्वानं प्रपद्येत। नाधार्मिकैः सार्द्धम्। न वृषलैः। न द्विषद्भिः। नातिप्रत्यूषसि। नातिसायम्। न सन्ध्ययोः। न मध्याह्ने। न सन्निहितपानीयम्। नातितूर्णम्। न रात्रौ। न सततं व्यालव्याधितार्त्तैर्वाहनैः। न हीनाङ्गैः। न दीनैः। न गोभिः। नादान्तैः। यवसोदके वाहनानामदत्त्वात्मनः क्षुत्तृष्णापनोदनं न कुर्य्यात्। न चतुष्पथमधितिष्ठेत्। न रात्रौ वृक्षमूलम्। न शून्यालयम्। न वनम्। न पशूनां

बन्धनागारम्। न केशतुषकपालास्थिभस्माङ्गारान्। न कार्पासास्थि। चतुष्पथं प्रदक्षिणीकुर्य्यात्। देवतार्चाश्च। प्रज्ञातांश्च वनस्पतीन्। अग्निब्राह्मणगणिकापूर्णकुम्भादर्श-च्छत्रध्वजपताकाश्रीवृक्षवर्द्धमाननन्द्यावर्त्तांश्च। तालवृन्त-चामराश्व-गजाजगोदधिक्षीर-मधुसिद्धार्थकांश्च। वीणा-चन्दनायुधार्द्रगोमय पुष्प-शाक-गोरोचना दूर्वाप्ररोहांश्च। उष्णीषालङ्कार-मणि-कनक-रजत-वस्त्रासन-यानामिषांश्च। भृङ्गारोद्धृतोर्वरारज्जुबद्धैकपशुकुमारीमीनांश्च दृष्ट्वा प्रयाया-दिति। अथ मत्तोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत। वान्तविरिक्त मुण्डितमलिन-वसनजटिलवामनांश्च॥ काषायिप्रव्रजित-मलिनांश्च। तैलगुड़शुष्कगोमयेन्धनतृणपलाशभस्माङ्गारांश्च। लवणक्लीबासवनपुंसककार्पासरज्जुनिगड़मुक्तकेशांश्च। वीणा-चन्दनार्द्रशाकोष्णीषालङ्करणकुमारीः प्रस्थानकालेऽभिनन्द-येदिति। देवब्राह्मणगुरुबभ्रुदीक्षितानां छायां नाक्रामेत्। निष्ठ्यूतवान्तरुधिरविण्मूत्रस्नानोदकानि च। न वत्सतन्त्रीं लङ्घयेत्। प्रवर्षति न धावेत्। न वृथा नदीं तरेत्। न देवताभ्य पितृभ्यश्चोदकमप्रदाय। न बाहुभ्याम्। न भिन्नया नावा। न कक्ष (कूल) मधितिष्ठेत्। न कूपमवलो-कयेत्। न लङ्घयेत्॥ १—५०॥

वृषभारिष्टपस्नात-स्त्रीरोगिवरचक्रिणाम्।
पन्था देयो नृपस्त्वेषां मान्यः स्नातश्च भूपतेः॥ ६३॥

इति वैष्णवे धर्मशास्त्रे त्रिषष्टितमोऽध्यायः॥ ६३॥

## चतुःषष्ठितमोऽध्यायः ।

परनिपानेषु न स्नानमाचरेत्। आचरेत् पञ्चपिण्डान् उद्धृत्यापस्तथापदि। नाजीर्णी। न चातुरः। न नग्नः। न रात्रौ। राहुदर्शनवर्ज्जम्। न सन्ध्ययोः। प्रातः-स्नाय्य-कृताभिरणग्रस्तां प्राचीमवलोक्य स्नायात्। स्नातः शिरो नावधूनेत्। नाङ्गेभ्यस्तोयमुद्धरेत्। न तैलवत् संस्पृशेत्। नाप्रक्षालितं पूर्व्वधृतं वसनं बिभृयात्। स्नातः स्वोष्णीषो धौतवाससी बिभृयात्। न म्लेच्छान्त्यजपतितैः सह सम्भाषणं कुर्य्यात्। स्नायात् प्रस्रवण-देवखातसरोवरेषु। उद्धृताद्भूमिष्ठमुदकं पुण्यं, स्थावरात् प्रस्रवत्, तस्मान्नादेयं, तस्मादपि साधुपरिगृहीतं, सर्व्वत एव गाङ्गम्। स्तोयैः कृतमलापकर्षोऽप्सु निमज्ज्यापो हि ष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिरिदमापः प्रवहत इति च तीर्थमभिमन्त्रयेत्। ततोऽप्सु निमग्नस्त्रिरघमर्षणं जपेत्। तद्विष्णोः परमं पदमिति वा। द्रुपदां सावित्रीं वा। युञ्जते मन इत्यनुवाक्यं वा। पुरुषसूक्तं वा। स्नातश्चार्द्रवासा देवपितृतर्पणमम्भःस्थ एव कुर्य्यात्। परिवर्त्तितवासाश्चेत् तीर्थमुत्तीर्य्य। अकृत्वा देवपितृतर्पणं स्नानशाटीं न पीड़येत्। स्नात्वानन्तरं विधिवदुपस्पृशेत्। पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पा[illegible]द्यात्। उदकाञ्जलिं पश्चात्। आदावेव दिव्येन तीर्थेन देवतानां कुर्य्यात्। तदनन्तरं पित्र्येण पितॄणाम्। तत्रादौ स्वव-श्यानां तर्पणं कुर्य्यात्। ततः सम्बन्धिबान्धवानाम्। ततः

सुहृदाम्। एवं नित्यस्नायी स्यात्। स्नातश्च पवित्राणि यथाशक्ति जपेत्। विशेषतः सावित्रीन्त्ववश्यं जपेत्। पुरुष-सूक्तञ्च। नैताभ्यामधिकमस्ति॥ १—३९॥

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्म्मणि।
पवित्राणां तथा जप्ये दाने च विधिनोदिते॥ ४०
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्।
अम्भात्रेणाभिषिक्तस्य नश्यन्त इति धारणा॥ ४१
याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो नराः॥ ४२
इति वैष्णवे धर्म्मशास्त्रे चतुःषष्ठितमोऽध्यायः॥ ६४

---

## पंचषष्ठितमोऽध्यायः।

अथातः सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तो देवतार्च्चायां स्थले वा भगवन्तमनादिनिधनं वासुदेवमभ्यर्च्चयेत्। अश्विनोः प्राणस्तौत इति जीवादानं दत्त्वा युञ्जते मन इत्यनुवाकेनावाहनं कृत्वा जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्य्यात्। आपोहिष्ठेति तिसृभिरर्घ्यं निवेदयेत्। हिरण्यवर्णा इति चतसृभिः पाद्यम्। शन्न आपो धन्वन्या इत्याचमनीयम्। इदमापः प्रवहत इति स्नानीयम्। रथे अक्षेषु वृषभराजा इत्यनुलेपनालङ्कारौ। युवा सुवासा इति वासः। पुष्पावतीरिति पुष्पम्। धूरसि धूर्पमिति धूपम्। तेजोऽसि शुक्रमिति दीपम्। दधिक्राव्ण इति मधुपर्कः। हिरण्यगर्भ इत्यष्टाभिर्नैवेद्यम्॥ १—११॥

चामरं व्यजनं मात्रं छत्रं यानासने तथा।
सावित्रेणैव तत् सर्वं देवाय विनिवेदयेत्॥ १४
एवमभ्यर्च्य चाजपेत् सूक्तं वै पौरुषं ततः।
तेनैव जुहुयादाज्यं य इच्छेच्छाश्वतं पदम्॥ १५
इति वैष्णवे धर्मशास्त्रे पञ्चषष्ठितमोऽध्यायः॥ ६५॥

---

## षट्षष्ठितमोऽध्यायः।

न नक्तं गृहीतेनोदकेन देवपितृकर्म कुर्य्यात्। चन्दन-मृगमदागुरुदारुकर्पूरकुङ्कुमजातीफलवर्ज्जमनुलेपनं न दद्यात्। न वासो नीलीरक्तम्। न मणिसुवर्णयोः प्रतिरूपमलङ्करणम्। नोग्रगन्धि। नागन्धि। न कण्टकिजम्। कण्टकिजमपि शुक्लं सुगन्धिकं दद्यात्। रक्तमपि कुङ्कुमं जलजंच दद्यात्। न धूपार्थे जीवजातम्। न घृततैलं विना किंचन दीपार्थे। नाभक्ष्यं नैवेद्यार्थे। न भक्ष्ये ष्वप्यजाम-हिषीक्षीरे। पंचनखमत्स्यवराहमांसानि च॥ १—१४॥
प्रयतश्च शुचिर्भूत्वा सर्वमेव निवेदयेत्।
तन्मनाः सुमना भूत्वा त्वराक्रोधविवर्ज्जितः॥ १५
इति वैष्णवे धर्मशास्त्रे षट्षष्ठितमोऽध्यायः॥ ६६॥

---

## सप्तषष्ठितमोऽध्यायः।

अथाग्निं परिसमुह्य पर्य्युक्ष्य परिस्तीर्य परिषिच्य सर्वतः पाकादग्रमुद्धृत्य जुहुयात्। वासुदेवाय सङ्कर्षणाय प्रद्युम्नाया-

निरुद्धाय पुरुषाय सत्यायाच्युताय वासुदेवाय। अथाग्नये सोमाय मित्राय वरुणाय इन्द्रायेन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यः प्रजापतये अनुमत्यै धन्वन्तरये वास्तोष्पतये अग्नये, स्विष्टिकृते च। ततोऽन्नशेषेण बलिमुपहरेत्। भच्च्योपभच्च्याभ्याम्। अभितः पूर्वेणाग्नेः। अम्बानामासीतिदुलानामासीति नितत्नीनामासीति चुपुणिकानामासीति सर्वासाम्॥ नन्दिनि सुभगे सुमङ्गलि भद्रकालीति स्वस्तिष्वभिप्रदक्षिणम्। स्थूणायां ध्रुवायां श्रियै। गिरस्वन्त्यै वनस्पतिभ्यश्च। धर्माधर्मयोर्द्वारे मृत्यवे च। उदधाने वरुणाय। विष्णव इत्युलूखले। मरुद्भ्य इति दृषदि। उपरिशरणे वैश्रवणाय राज्ञे भूतेभ्यश्च। इन्द्रायेन्द्रपुरुषेभ्य इति पूर्वार्द्धे। यमाय यमपुरुषेभ्य इति दक्षिणार्द्धे। वरुणाय वरुणपुरुषेभ्य इति पश्चार्द्धे। सोमाय सोमपुरुषेभ्य इत्युत्तरार्द्धे। ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये। ऊर्द्ध्वमाकाशाय। दिवाचरेभ्यो भूतेभ्य इति स्थण्डिले। नक्तंचरेभ्य इति नक्तम्। ततो दक्षिणाग्रेषु दर्भेषु पित्रे पितामहाय प्रपितामहाय मात्रे पितामह्यै प्रपितामह्यै स्वनामगोत्राभ्याञ्च पिण्डनिर्वपणं कुर्य्यात्। पिण्डानांचानुलेपनपुष्पधूपनैवेद्यादि दद्यात्। उदकपात्रसमुपनिधाय स्वस्त्ययनं वाचयेत्। श्वकाकश्वपचानां भुवि निर्वपेत्। भिक्षांच दद्यात्। अतिथिपूजने च परं फलमधितिष्ठेत्। सायमतिथिं प्राप्तं प्रयत्नेनार्च्चयेत्। अनाशितमतिथिं गृहे न वासयेत्। यथा वर्णानां ब्राह्मणः प्रभुर्यथा स्त्रीणां भर्त्ता तथा गृहस्थस्यातिथिः। तत्पूजायां स्वर्गमाप्नोति॥ १—३२॥

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते।
तस्मात् सुकृतमादाय दुष्कृतन्तु प्रयच्छति ॥ ३३
एकरात्रं हि निवसन्नतिथिर्ब्राह्मणः स्मृतः।
अनित्या हि स्थितिर्यस्मात् तस्मादतिथिरुच्यते ॥ ३४
नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा।
उपस्थितं गृहे विद्याद्भार्य्या यत्राग्नयोऽपि वा ॥ ३५
यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमागतः।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ॥ ३६
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ।
भोजयेत् सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥ ३७
इतराण्यपि सख्यादीन् सम्प्रीत्या गृहमागतान्।
प्रकृतान्नं यथाशक्ति भोजयेत् सह भार्य्यया ॥ ३८
सुवासिनीं कुमारींच रोगिणीं गुर्व्विणीं तथा।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥ ३९
अदत्त्वा यस्तु एतेभ्यः पूर्वं भुङ्क्तेऽविचक्षणः।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥ ४०
भुक्तवत्सु च विप्रेषु भृत्येषु स्वेषु चैव हि।
भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती ॥ ४१
देवान् पितॄन् मनुष्यांश्च भृत्यान् गृह्याश्च देवताः।
पूजयित्वा ततः पश्चाद्गृहस्थः शेषभुग्भवेत् ॥ ४२
अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते ॥ ४३
स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा।
न चाप्नोति गृही लोकान् यथा त्वतिथिपूजनात् ॥ ४४

सायंप्रातःप्रतिथिं प्रदद्यादासनोदके।
अन्नञ्चैव यथाशक्त्या सत्कृत्य विधिपूर्वकम्॥ ४५
प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम्।
प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम्॥ ४६
इति वैष्णवे धर्मशास्त्रे सप्तषष्टितमोऽध्यायः॥ ६७॥

---

## अष्टषष्टितमोऽध्यायः।

चन्द्रार्कोपरागे नाश्नीयात्। स्नात्वा मुक्तयोरश्नीयात्। अमुक्तयोरस्तंगतयोर्दृष्ट्वा स्नात्वा चापरेऽह्नि। न गोब्राह्मणोपरागेऽश्नीयात्। न राज्ञ्यव्यसने। प्रवसिताग्निहोत्री यदाग्निहोत्रं हुतं मन्येत तदाश्नीयात्। यदा हुतं मन्येत वैश्वदेवमपि। पर्वणि च यदा ज्ञातं मन्येत पर्व। नाश्नीयादजीर्णे। नार्धरात्रे। न मध्याह्ने। न सन्ध्ययोः। नार्द्रवासाः। नैकवासाः। न नग्नः। न जलस्थः। नोत्कुटकः। न भिन्नासनगतः। न च शयनगतः। न भिन्नभाजने। नोत्सङ्गे। न भुवि। न पाणौ। लवणञ्च यत्र दद्यात् तन्नाश्नीयात्। न बालकान् निर्भर्त्सयेत्। नैको मिष्टम्। नोद्धृतस्नेहम्। न दिवा धानाः। न रात्रौ तिलसंयुक्तम्। न दधि सक्तुन्। न कोविदारवटपिप्पलशणशाकम्। नादत्त्वा। नाहुत्वा। नानार्द्रपादः। नानार्द्रकरमुखश्च। नोच्छिष्टश्च घृतमादद्यात्। न चन्द्रार्कतारका निरीक्षेत। न मूर्धानं स्पृशेत्। न ब्रह्म कीर्तयेत्। प्राङ्मुखोऽश्नीयात्। दक्षिणामुखो वा। अभि-

पूर्ब्बाशनम्। सुमनाः सब्वप्रमुलिशः। न निःशेषकृत् स्यात्।
अन्यत्र दधिमधुसर्पिःपयःसक्तुपललमोदकेभ्यः॥ १—४५।

नाश्नीयाद्भार्य्यया सार्द्धं नाकाशे न तथोत्थितः।
बहूनां प्रेक्षमाणानां नैकस्मिन् बहवस्तथा॥ ४६
शून्यागारे वह्निगृहे देवागारे कथञ्चन।
पिबेन्नाञ्जलिना तोयं नातिसौहित्यमाचरेत्॥ ४७
न तृतीयमथाश्नीयान्न चापथ्यं कथञ्चन्।
नातिप्रगे नातिसायं न सायं प्रातराशितः॥ ४८
न भावदुष्टमश्नीयान्न भाण्डे भावदूषिते।
शयानः प्रौढ़पादश्च कृत्वा चैवावसक्थिकाम्॥ ४९

इति वैष्णवे धर्मशास्त्रेऽष्टषष्ठितमोऽध्यायः॥ ६८॥

---

## एकोनसप्ततितमोऽध्यायः।

नाष्टमीचतुर्द्दशीपञ्चदशीषु स्त्रियमुपेयात्। न श्राद्धं
भुक्त्वा। न श्राद्धं दत्त्वा। नोपनिमन्त्रितः श्राद्धे। (न
स्नात्वा न हुत्वा।) न व्रती। (नोपोष्य भुक्त्वा वा।) न
दीक्षितः। न देवायतनश्मशानशून्यालयेषु। न वृक्षमूलेषु।
न दिवा। न सन्ध्ययोः। न मलिनाम्। न मलिनः।
नाभ्यक्ताम्। नाभ्यक्तः। न रोगार्त्ताम्। न रोगार्त्तः॥१—१६॥

न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम्।
नोपेयाद्गुर्व्विणीं नारीं दीर्घमायुर्जिजीविषुः॥ १७॥

इति वैष्णवे धर्मशास्त्रे एकोनसप्ततितमोऽध्यायः॥ ६९॥

## सप्ततितमोऽध्यायः ।

नार्द्रपादः स्वप्यात् । नोत्तरापरगवाकशिराः । न नग्नः । नार्द्रवंशे । नाकाशे । न पलाशशयने । न पंचदारुकृते । न गजभग्नकृते । न विद्युद्दग्धकृते । न भिन्ने । नाग्निप्लुष्टे । न घटासिक्तद्रुमजे । न श्मशानशून्यालयदेवतायतनेषु । न चपलमध्ये । न नारीमध्ये । न धान्यगोगुरुहुताशनसुराणामुपरि ॥ १—१६ ॥

नोच्छिष्टो न दिवा स्वप्यात् सन्ध्ययोर्न न भस्मनि ।
देशे न चाशुचौ नार्द्रो न च पर्वतमस्तके ॥ १७

इति वैष्णवे धर्मशास्त्रे सप्ततितमोऽध्यायः ॥ ७० ॥

---

## एकसप्ततितमोऽध्यायः ।

अथ न कंच नावमन्येत । न च हीनाङ्गाधिकाङ्गान् मूर्खान् धनहीनानवहसेत् । न हीनान् सेवेत । स्वाध्यायविरोधि कर्म नाचरेत् । वयोऽनुरूपं वेशं कुर्यात् श्रुतस्याभिजनस्य धनस्य देशस्य च । नोद्धतः । नित्यं शास्त्राद्यवेक्षी स्यात् । सति विभवे न जीर्णमलवद्वासाः स्यात् । न नास्तीत्यभिभाषेत । न निर्गन्धोग्रगन्धि रक्तां च माल्यं बिभृयात् । बिभृयाज्जलजं रक्तमपि । यष्टिं च वैणवीम् । कमण्डलुञ्च सोदकम् । कार्पाससमुपवीतम् । रौक्मे च कुण्डले । नादित्यमुद्यन्तमीक्षेत । नास्तं यान्तम् । न वाससा तिरोहितम् । न चादर्शजलमध्यगतम् । न मध्याह्ने । न क्रुद्धस्य

गुरोर्मुखम्। न तैलोदकयोः स्वच्छायाम्। न मलवत्यादर्शे। न पत्नीं भोजनसमये। न स्त्रियं नग्नाम्। न कञ्चन् मेहन्तम्। न चालानभ्रष्टकुञ्जरम्। न च विषमस्थो वृषादियुद्धम्। नोन्मत्तम्। न मत्तम्। नामेध्यमग्नौ प्रक्षिपेत्। नासृक्। न विषम्। नाप्स्वपि। नाग्निं लङ्घयेत्। न पादौ प्रतापयेत्। कुर्य्यात्तेषु वा पाद्… । न कांस्यभाजने चार्पयेत्। न पादं पादेन। न भुवमालिखेत्। न लोष्ट्रमर्द्दी स्यात्। न तृणच्छेदी स्यात्। न दन्तैर्नखलोमानि छिन्द्यात्। द्यूतं वर्ज्जयेत्। बालातपसेवाञ्च। वस्त्रोपानद्माल्योपवीतान्यन्यधृतानि न धारयेत्। न शूद्राय मतिं दद्यात्। नोच्छिष्टं हविषी। न तिलान्। न चास्योपदिशेद्धर्म्मम्। न व्रतम्। न संहताभ्यां पाणिभ्यां शिर उदरं च कण्डूयेत्। न हविस्सुमनसो प्रत्याचक्षीत। नात्मनः स्रजमपकर्षयेत्। सुप्तं न प्रबोधयेत्। नोदक्यामभिभाषेत। न म्लेच्छान्त्यजान्। अग्निदेवब्राह्मणसन्निधौ दक्षिणं पाणिमुद्धरेत्। न परक्षेत्रे चरन्तीं गामाचक्षीत। न पिबन्तं वत्सकम्। नोद्धतान् प्रहर्षयेत्। न शूद्रराज्ये निवसेत्। नाधार्म्मिकजनाकीर्णे। न संवसेद्वैद्यहीने। नोपसृष्टे। न चिरं पर्व्वते। न वृथाचेष्टां कुर्य्यात्। न नृत्यगीते। नास्फोटनकार्य्यम्। नाश्लीलं कीर्त्तयेत्। नानृतम्। नाप्रियम्। न कंचिन्मर्म्मणि स्पृशेत्। नात्मानमवजानीयाद्दीर्घमायुर्जिजीविषुः। चिरं सन्ध्योपासनं कुर्य्यात्। न सर्पशस्त्रैः क्रीडेत्। अनिमित्ततः खानि न स्पृशेत्। परस्य दण्डं नोद्यच्छेत्। शास्यं शासनार्थं ताड़येत्। देवब्राह्मणशास्त्र-

महात्मनां परीवादं परिहरेत्। धर्मविरुद्धौ चार्थकामौ। लोकविद्विष्टंच धर्ममपि। पर्वसु शान्तिहोमं कुर्य्यात्। न तृणमपि छिन्द्यात्। अलङ्कृतश्च तिष्ठेत्। एवमाचारसंवी स्यात्॥ १—८९॥

श्रुतिस्मृत्युदितं सम्यक् साधुभिश्च निषेवितम्।
तमाचारं निषेवेत धर्मकामो जितेन्द्रियः॥ ९०
आचाराल्लभते चायुराचारादीप्सितां गतिम्।
आचाराद्धनमक्षय्यमाचाराद्धन्त्यलक्षणम्॥ ९१
सर्वलक्षणहीनोऽपि यः सदाचारवान् नरः।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥ ९२

इति वैष्णवे धर्मशास्त्रे एकसप्ततितमोऽध्यायः॥ ७१

---

## द्विसप्ततितमोऽध्यायः।

दमयमेन तिष्ठेत्। दमश्चेन्द्रियाणां प्रकीर्त्तितः। दान्तस्यायं लोकः परश्च। नादान्तस्य क्रिया काचित् सम्बध्यति॥ १—४॥

दमः पवित्रं परमं मङ्गल्यं परमं दमः।
दमेन सर्वमाप्नोति यत्किंचिन्मनसेच्छति॥ ५

दमार्द्दयुक्तेन रथेन याति
मनोवशेनार्थपथानुवर्त्तिना।
तंचेद्रथं नापहरन्ति वाजिन
स्तथागतं नावजयन्ति शत्रवः॥ ६

आपूर्य्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी॥ ७

इति वैष्णवे धर्म्मशास्त्रे द्विसप्ततितमोऽध्यायः॥ ७२॥

---

## त्रिसप्ततितमोऽध्यायः।

अथ श्राद्धेप्सुः पूर्वेद्युर्ब्राह्मणानामन्त्रयेत्। द्वितीयेऽह्नि शुक्लपक्षस्य पूर्वाह्णे कृष्णपक्षस्यापराह्णे विप्रान् सुस्नातान् स्वाचान्तान् यथाभूयो विद्याक्रमेण कुशोत्तरेष्वासनेषूपवेशयेत्। द्वौ दैवे प्राङ्मुखौ त्रींश्च पित्र्ये उदङ्मुखान्। एकैकमुभयत्र वेति। आमश्राद्धेषु काम्येषु च प्रथमपंचकेनाग्निं हुत्वा। पशुश्राद्धेषु मध्यमपंचकेन। अमावास्यासूत्तमपंचकेन। आग्रहायण्या ऊर्द्धं कृष्णाष्टकासु च क्रमेणैव प्रथममध्यमोत्तमपंचकैः। अन्वष्टकासु च। ततो ब्राह्मणानुज्ञातः पितॄनावाहयेत्। अपयान्त्वसुरा इति द्वाभ्यां तिलैर्यातुधानानां विसर्ज्जनं कृत्वा एत पितरः सर्वांस्तानग्न आ मे यन्त्वेतद्वः पितर इत्यावाहनं कृत्वा कुशतिलमिश्रेण गन्धोदकेन यास्तिष्ठन्त्यमृता वागिति यन्मे मातेति च पाद्यं निर्वर्त्त्य निवेद्यार्घ्यं कृत्वा निवेद्य चानुलेपनं कृत्वा कुशतिलवस्त्रपुष्पालङ्कारधूपदीपैर्यथाशक्त्या विप्रान् समभ्यर्च्य घृतप्लुतमन्नमादायादित्या रुद्रा वसव इति वीक्ष्याग्नौ करवाणीत्युक्त्वा तत्रविप्रैः कुर्वित्युक्ते आहुतित्रयं दद्यात्। ये मामकाः

पितर एतद्‌: पितरोऽयं यज्ञ इति च हविरनुमन्त्रणं कृत्वा यथोपपन्नेषु पात्रेषु विशेषाद्रजतमयेष्वन्नं नमो विश्वेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत्। पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु। तदद्दत्सु ब्राह्मणेषु यन्मे प्रकामा अहोरात्रैर्यन्न: क्रव्यादिति जपेत्। इतिहासपुराणधर्म्मशास्त्राणि चेति। उच्छिष्टसन्निधौ दक्षिणाग्रेषु दर्भेषु पृथिवी दर्वि रक्षतेत्येकं पिण्डं पित्रे निदध्यात्। अन्तरीक्षं दर्वि रक्षतेति द्वितीयं पितामहाय। द्यौर्दर्वि रक्षतेति तृतीयं प्रपितामहाय। येऽत्र पितर: प्रेता इति वासो देयम्। वीराश्च: पितरो धत्त इत्यन्नम्। अत्र पितरो मादयध्वं यथाभागमावृषायध्वमिति दर्भमूले करघर्षणम्। ऊर्ज्जं वहन्तीरित्यनेन सोदकेन प्रदक्षिणं पिण्डानां विकरणं सेचनं कृत्वा अर्घ्यपुष्पधूपालेपनान्नादि-भक्ष्यभोज्यानि च निवेदयेत्। उदकपात्रं मधुघृततिलैः संयुक्तञ्च। भुक्तवत्सु ब्राह्मणेषु तृप्तिमागतेषु मा मेध्येष्ठेत्यन्नं सतृणमभ्युक्ष्यान्नविकिरमुच्छिष्टाग्रत: कृत्वा तृप्ता भवन्त: सम्पन्नमिति पृष्ट्वोदङ्मुखेष्वाचमनमादौ दत्त्वा तत: प्राङ्मुखेषु दत्त्वा ततश्च सुप्रोक्षितमिति श्राद्धदेशं सम्प्रोक्ष्य दर्भपाणि: सर्वं कुर्य्यात्। तत: प्राङ्मुखाग्रतो यन्मे राम इति प्रदक्षिणं कृत्वा प्रत्येत्य च यथाशक्ति दक्षिणाभि: समभ्यर्च्याभिरमन्तु भवन्त इत्युक्ता तैरुक्तोऽभिरता: स्म इति देवाश्च पितरश्चेत्यभिजपेत्। अक्षय्योदकञ्च नामगोत्राभ्यां दत्त्वा विश्वेदेवा: प्रीयन्तामिति प्राङ्मुखेभ्यस्तत: प्राञ्जलिरिदं तन्मना: सुमना याचेत॥ १—२६

दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च।
श्रद्धा च नो मा व्यगमद्बहु देयञ्च नोऽस्त्विति ॥ २७
तथास्त्विति ब्रूयुः ॥ २८
अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥ २९
इत्येताभ्यामाशिषः प्रतिगृह्य ॥ ३०
वाजेवाजे इति ततो ब्राह्मणांश्च विसर्ज्जयेत्।
पूजयित्वा यथान्यायमनुव्रज्याभिवाद्य च ॥ ३१
इति वैष्णवे धर्म्मशास्त्रे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## चतुःसप्ततितमोऽध्यायः।

अष्टकासु दैवपूर्वं शाकमांसापूपैः श्राद्धं कृत्वा त्वन्वष्टकास्वष्टकावदग्नौ दैवपूर्वमेव हुत्वा मातृ पितामही प्रपितामह्यै च पूर्ववद्ब्राह्मणान् भोजयित्वा दक्षिणाभिश्चाभ्यर्च्यानुव्रज्य विसर्ज्जयेत। ततः कर्षूः कुर्य्यात्। तन्मूले प्रागुदगग्न्युपसमाधानं कृत्वा पिण्डनिर्वपणम्। कर्षूत्रय-मूले पुरुषाणां कर्षूत्रयमूले स्त्रीणाम्। पुरुषकर्षूत्रयं सान्नेनोदकेन पूरयेत्। स्त्रीकर्षूत्रयं सान्नेन पयसा। दध्ना मांसेन पयसा च प्रत्येकं कर्षूत्रयम्। पूरयित्वा जपेदेतद्वस्त्रो भवतीभ्योऽस्तु चाक्षयम् ॥ १—८ ॥

इति वैष्णवे धर्म्मशास्त्रे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

## पञ्चसप्ततितमोऽध्यायः ।

पितरि जीवति यः श्राद्धं कुर्य्यात् स येषां पिता कुर्य्यात् तेषां कुर्य्यात् । पितरि पितामहे च जीवति येषां पितामहः । पितरि पितामहे प्रपितामहे च जीवति नैव कुर्य्यात् । यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात् । यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात् । यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात् परं द्वाभ्यां दद्यात् । यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे पिण्डं निधाय पितामहात् परं द्वाभ्यां दद्यात् ॥ १—७ ॥

मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्ज्जितम् ॥ ८

इति वैष्णवे धर्म्मशास्त्रे पंचसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## षटसप्ततितमोऽध्यायः ।

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी प्रोष्ठपद्यूर्द्ध्वं कृष्णा त्रयोदशी व्रीहियवपाकौ चेति ॥ १

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ॥ २

इति वैष्णवे धर्म्मशास्त्रे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ।

आदित्यसंक्रमणम् । विषुवद्वयम् । विशेषेणायनद्वयम् । व्यतीपातः । जन्मर्क्षम् । अभ्युदयश्च ॥ १—६ ॥

एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते ॥ ७
सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥ ८
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत् सर्वकामीयं पितॄणामुपतिष्ठते ॥ ९

इति वैष्णवे धर्मशास्त्रे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

## अष्टसप्ततितमोऽध्यायः ।

सततमादित्येऽह्नि श्राद्धं कुर्वन्नारोग्यमाप्नोति । सौभाग्यं चान्द्रे । समरविजयं कौजे । सर्वान् कामान् बौधे । विद्यामभीष्टां जैवे । धनं शौक्रे । जीवितं शनैश्चरे । स्वर्गं कृत्तिकासु । अपत्यं रोहिणीषु । ब्रह्मवर्चस्यं सौम्ये । कर्मसिद्धिं रौद्रे । भुवं पुनर्वसौ । पुष्टिं पुष्ये । श्रियं सार्पे । सर्वान् कामान् पैत्रे । सौभाग्यं भाग्ये । धनमार्यमणे । ज्ञातिश्रैष्ठ्यं हस्ते । रूपवतः सुतांस्त्वाष्ट्रे । वाणिज्यसिद्धिं स्वातौ । कनकं विशाखासु । मित्राणि मैत्रे । राज्यं

आर्द्रे। कृषिं मूले। समुद्रयानसिद्धिमाप्ये। सर्वान् कामान् वैश्वदेवे। श्रैष्ठ्यमभिजिति। सर्वान् कामान् श्रवणे। लवणं वासवे। आरोग्यं वारुणे। कुप्यद्रव्यमाजे। गृहमाहिर्बुध्ने। गाः पौष्णे। तुरङ्गमाश्विने। जीवितं याम्ये। गृहं सुरूपाः स्त्रियः प्रतिपदि। कन्यां वरदां द्वितीयायाम्। सर्वान् कामां स्तृतीयायाम्। पशूंश्चतुर्थ्याम्। श्रियं (सुरूपान् सुतान्) पञ्चम्याम्। द्यूतविषयं षष्ठ्याम्। कृषिं सप्तम्याम्। वाणिज्यमष्टम्याम्। पशून् नवम्याम्। वाजिनो दशम्याम्। ब्रह्मवर्चस्विनः सुतानेकादश्याम्। आयुःसुराज्यजयान् (कनकरजतं) द्वादश्याम्। सौभाग्यं त्रयोदश्याम्। सर्वकामान् पञ्चदश्याम्। शस्त्रहतानां श्राद्धकर्मणि चतुर्दशी शस्ता। अपि पितृगीते गाथे भवतः॥ १—५१॥

अपि जायते सोऽस्माकं कुले कश्चिन्नरोत्तमः।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः॥ ५२
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत्।
कार्त्तिकं सकलं मासं प्राक्छाये कुञ्जरस्य च॥ ५३

इति वैष्णवे धर्मशास्त्रे अष्टसप्ततितमोऽध्यायः॥ ७८॥

---

## एकोनाशीतितमोऽध्यायः।

अथ न नक्तं गृहीतेनोदकेन श्राद्धं कुर्यात्। कुशाभावे कुशस्थाने काशान् दूर्वां वा दद्यात्। वाससोऽर्थे कार्पासोत्थं

सूत्रम्। दशां विसर्ज्जयेद्दूयद्यप्याहतवस्त्रजा स्यात्। उग्र-गन्धीन्यगन्धीनि कण्टकिजातानि रक्तानि च पुष्पाणि। शुक्लानि सुगन्धीनि कण्टकिजातान्यपि जलजानि रक्तान्यपि दद्यात्। वसां मेदश्च दीपार्थे न दद्यात्। घृतं तैलं वा दद्यात्। जीवजं सर्वं धूपार्थे न दद्यात्। मधुघृतसंयुक्तं गुग्गुलं दद्यात्। चन्दनकुङ्कुमकर्पूरागुरुपद्मकान्यनुलेपनार्थे। न प्रत्यक्षलवणं दद्यात्। हस्तेन च घृतव्यञ्जनादि। तैजसानि पात्राणि दद्यात्। विशेषतो राजतानि। खड्गकृतपक्षणाजिन तिलसिद्धार्थक्षाक्षतानि च पवित्राणि रक्षोघ्नानि च निदध्यात्। पिप्पलीमुकुन्दकभूस्तृणशिग्रु-सर्षपसुरसासर्ज्जक-सुवर्च्चल कूष्माण्डालाबुवार्त्ताकु-पालक्यो-पोदकीतण्डुलीयककुसुम्भपिण्डालुकमहिषीक्षीराणि वर्ज्जयेत्। राजमाषमसूरपर्य्युषितकृतलवणानि च। कोपं परिहरेत्। नाश्रु पातयेत्। न त्वरां कुर्य्यात्। घृतादिदाने तैजसानि पात्राणि खड्गपात्राणि फल्गुपात्राणि च प्रशस्तानि। अत्र च श्लोको भवति॥ १—२३॥

सौवर्णराजताभ्यांच खड्गेनौडुम्बरेण च।
दत्तमक्षय्यतां याति फल्गुपात्रेण चाप्यथ॥ २४

इति वैष्णवे धर्मशास्त्रे एकोनाशीतितमोऽध्यायः॥ ७९॥

---

## अशीतितमोऽध्यायः।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः शाकैः श्यामाकैः प्रियङ्गुभिर्नीवारैर्मुद्गैर्गोधूमैश्च मासं प्रीयन्ते। द्वौ मासौ मत्स्य-

मांसेन । त्रीन् हारिणेन । चतुरश्चौरभ्रेण । पंच शाकुनेन । षट् छागेन । सप्तरौरवेण । अष्टौ पार्षतेन । नव गवयेन । दश माहिषेण । एकादश कौर्म्मेण । संवत्सरं गव्येन पयसा तद्विकारैर्वा । अत्र पितृगीता गाथा भवति ॥ १—१३ ॥

कालशाका महाशल्कं मांसं वार्ध्रीणसस्य च ।
विषाणवर्ज्ज्या ये खड्गास्तांस्तु भक्ष्यामहे सदा ॥ १४

इति वैष्णवे धर्म्मशास्त्रेऽशीतितमोऽध्यायः ॥ ८० ॥

---

## एकाशीतितमोऽध्यायः ।

नान्नमासनमारोपयेत् । न पदा स्पृशेत् । नावक्षुतं कुर्य्यात् । तिलैः सर्षपैर्वा यातुधानान् विसर्ज्जयेत् । संहते न श्राद्धं कुर्य्यात् । न रजस्वलां पश्येत् । न श्वानम् । न विड्वराहम् । न ग्राम्यकुक्कुटम् । प्रयत्नाच्छ्राद्धमजस्य दर्शयेत् । अश्नीयुर्ब्राह्मणाश्च वाग्यताः । न वेष्टितशिरसः । न सोपानत्काः । न पीठोपहितपादाः । न हीनाङ्गाधिकाङ्गाः श्राद्धं पश्येयुः । न शूद्राः । न पतिताः । तत्काले ब्राह्मणं ब्राह्मणानुमतेन वा भिक्षुकं भोजयेत् । हविर्गुणान् न ब्रूयुर्द्दाता पृष्टाः ॥ १—१९ ॥

यावदुष्णं भवत्यन्नं यावद्भुञ्जन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥ २०
सार्व्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा ।
समुत्सृजेद्भुक्तवतामग्रतो विकिरन् भुवि ॥ २१

असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः॥ २२
उच्छेषणं भूमिगतमजिह्मस्याशठस्य वा।
दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते॥ २३
इति वैष्णवे धर्म्मशास्त्रे एकाशीतितमोऽध्यायः॥ ८१॥

---

## द्व्यशीतितमोऽध्यायः।

दैवे कर्म्मणि ब्राह्मणं न परीक्षेत। प्रयत्नात् पित्र्ये परीक्षेत। हीनाधिकाङ्गान् विवर्ज्जयेत्। विकर्म्मस्थांश्च। वैड़ालव्रतिकान्। वृथालिङ्गिनः। नक्षत्रजीविनः। देवलकांश्च। चिकित्सकान्। अनूढ़ापुत्रान्। तत्पुत्रान्। बहुयाजिनः। ग्रामयाजिनः। शूद्रयाजिनः। अयाज्ययाजिनः। व्रात्यान्। तद्याजिनः। पर्वकारान्। सूचकान्। भृतकाध्यापकान्। भृतकाध्यापितान्। शूद्रान्नपुष्टान्। पतितसंसर्गान्। अनधीयानान्। सन्ध्योपासनभ्रष्टान्। राजसेवकान्। नग्नान्। पित्रा विवदमानान्। पितृमातृगुर्व्वग्निस्वाध्यायत्यागिनश्चेति॥ १—२९॥

ब्राह्मणापसदा ह्येते कथिताः पङ्क्तिदूषकाः।
एतान् विवर्ज्जयेद्यत्नाच्छ्राद्ध कर्म्मणि पण्डितः॥ ३०
इति वैष्णवे धर्म्मशास्त्रे द्व्यशीतितमोऽध्यायः॥ ८२॥

---

## त्र्यशीतितमोऽध्यायः।

अथ पङ्क्तिपावनाः। त्रिणाचिकेतः। पञ्चाग्निः। ज्येष्ठसामगः। वेदपारगः। वेदाङ्गस्याप्येकस्य पारगः। पुराणेतिहासव्याकरणपारगः। धर्मशास्त्रस्याप्येकस्य पारगः। तीर्थपूतः। यज्ञपूतः। तपःपुतः। सत्यपूतः। मन्त्रपूतः। गायत्रीजपनिरतः। ब्रह्मदेयानुसन्तानः। त्रिसुपर्णः। जामाता। दौहित्रश्चेति पात्रम्। विशेषेण च योगिनः। अत्र पितृगीता गाथा भवति॥ १—२०॥

अपि स स्यात् कुलेऽस्माकं भोजयेद्यस्तु योगिनम्।
विप्रं श्राद्धे प्रयत्नेन येन तृप्यामहे वयम्॥ २१

इति वैष्णवे धर्मशास्त्रे त्र्यशीतितमोऽध्यायः॥ ८३॥

---

## चतुरशीतितमोऽध्यायः।

न म्लेच्छविषये श्राद्धं कुर्य्यात्। न गच्छेन्म्लेच्छविषयम्। परनिपानेष्वपः पीत्वा तत्साम्यमुपगच्छतीति॥ १—३॥

चातुर्वर्ण्यव्यवस्थानं यस्मिन् देशे न विद्यते।
स म्लेच्छदेशो विज्ञेय आर्य्यावर्त्तस्ततः परः॥ ४

इति वैष्णवे धर्मशास्त्रे चतुरशीतितमोऽध्यायः॥ ८४।

---

# पञ्चाशीतितमोऽध्यायः।

अथ पुष्करेष्वक्षयश्राद्धम्। जप्यहोमतपांसि च। पुष्करे स्नानमात्रतः सर्वपापेभ्यः पूतो भवति। एवमेव गयाशीर्षे। अक्षयवटे। अमरकण्टकपर्वते। वराहपर्वते। यत्र क्वचन नर्म्मदातीरे। यमुनातीरे। गङ्गायां विशेषतः। कुशावर्त्ते। बिन्दुके। नीलपर्वते। कनखले। कुब्जाम्रे। भृगुतुङ्गे। केदारे। महालये। नडन्तिकायाम्। सुगन्धायाम्। शाकम्भर्याम्। फल्गुतीर्थे। महागङ्गायाम्। त्रिहलिकाग्रामे। कुमारधारायाम्। प्रभासे। यत्र क्वचन सरस्वत्यां विशेषतः॥ १—२७॥

गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे।
सततं नैमिषारण्ये वाराणस्यां विशेषतः॥ २८

अगस्त्याश्रमे। कण्वाश्रमे। कौशिक्याम्। सरयूतीरे। शोणस्य ज्योतिषायाश्च सङ्गमे। श्रीपर्वते। कालोदके। उत्तरमानसे। वड़वायाम्। मतङ्गवाप्याम्। सप्तार्षे। विष्णुपदे। स्वर्गमार्गपदे। गोदावर्य्याम्। गोमत्याम्। वेत्रवत्याम्। विपाशायाम्। वितस्तायाम्। शतद्रुतीरे। चन्द्रभागायाम्। इरावत्याम्। सिन्धोस्तीरे। दक्षिणे पञ्चनदे। औसजे। एवमादिष्वथान्येषु तीर्थेषु। सरिद्वरासु। सर्व्वेष्वपि स्वभावेषु। पुलिनेषु। प्रस्रवणेषु। पर्वते। निकुञ्जेषु। वनेषु। उपवनेषु। गोमयलिप्तेषु। मनोज्ञेषु। अत्र च पितृगीता गाथा भवन्ति॥ २९—६४॥

कुलेऽस्माकं स जन्तुः स्याद्यो नो दद्याज्जलाञ्जलीन् ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥ ६५
अपि जायते सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नः कुर्य्यात् समाहितः ॥ ६६
एष्टव्या बहवः पुत्रायद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ ६७
इति वैष्णवे धर्म्मशास्त्रे पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

## षड़शीतितमोऽध्यायः ।

अथ वृषोत्सर्गः । कार्त्तिक्यामाश्वयुज्यां वा । तत्रादावेव वृषभं परीक्षेत । जीवद्वत्सायाः पयस्विन्याः पुत्रम् । सर्वलक्षणोपेतम । नीलम । लोहितं वा मुखपुच्छपादशृङ्गशुक्लम् । यूथस्याच्छादकम् । ततो गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य्य पौष्णचरं पयसा श्रपयित्वा पूषा गा अन्वेतु न इह रतिरिति च हुत्वा वृषमयस्कारस्त्वङ्कयेत् । एकस्मिन् पार्श्वे चक्रेणापरस्मिन् पार्श्वे शूलेन । अंकितञ्च [illegible] इति चतसृभिः शन्नोदेवीरिति च स्नापयेत् । स्नातमलङ्कृतं स्नातालङ्कृताभिश्चतसृभिर्वत्सतरीभिः सार्द्धमानीय रुद्रान् पुरुषसूक्तं कुष्माण्डीश्च जपेत् । पिता वत्सेति वृषभस्य दक्षिणे कर्णे पठेत् । इमञ्च ॥ १—१४ ॥

वृषो हि भगवान् धर्म्मश्चतुष्पादः प्रकीर्त्तितः ।

एनं युवानं पतिं वो ददाम्य-
नेन क्रीड़न्तीश्चरथ प्रियेण।
मा ह्वास्महि प्रजया मा तनूभि-
र्म्मारधाम द्विषते सोम राजन्॥ १६
वृषं वत्सतरीयुक्तमैशान्यां कारयेद्दिशि।
होतुर्वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च॥ १७
अयस्कारस्य दातव्यं वेतनं मनसेप्सितम्।
भोजनं बहुसर्पिष्कं ब्राह्मणांश्चात्र भोजयेत्॥ १८
उत्सृष्टो वृषभो यस्मिन् पिबत्यथ जलाशये।
जलाशयं तत् सकलं पितॄंस्तस्योपतिष्ठति॥ १९
शृङ्गेणोल्लिखते भूमिं यत्र क्वचन दर्पितः।
पितणामन्नपानं तत् प्रभूतमुपतिष्ठति॥ २०
इति वैष्णवे धर्म्मशास्त्रे षड़शीतितमोऽध्यायः॥ ८६

---

## सप्ताशीतितमोऽध्यायः।

अथ वैशाख्यां पौर्णमास्यां कृष्णाजिनं सुवर्णशृङ्गं रौप्यखुरं मौक्तिकलाङ्गूलभूषितं कृत्वा आविके वस्त्रे च प्रसारयेत्। ततस्तिलैः प्रच्छादयेत्। सुवर्णनाभिञ्च कुर्य्यात्। अहतेन वासोयुगेन प्रच्छादयेत्। सर्व्वगन्धरत्नैश्चालङ्कृतं कुर्य्यात्। चतसृषु दिक्षु चत्वारि तैजसपात्राणि क्षीरदधिमधुघृतपूर्णानि निधायाहिताग्नये ब्राह्मणायालङ्कृताय वासोयुगेन प्रच्छादिताय दद्यात्। अत्र च गाथा भवन्ति॥ १—७॥

यस्तु कृष्णाजिनं दद्यात् सखुरं शृङ्गसंयुतम्।
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम्॥ ८
ससमुद्रगुहा तेन सशैलवनकानना।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः॥ ९
कृष्णाजिने तिलान् कृत्वा हिरण्यं मधुसर्पिषी।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम्॥ १०

इति वैष्णवे धर्मशास्त्रे सप्ताशीतितमोऽध्यायः॥ ८७॥

---

## अष्टाशीतितमोऽध्यायः।

अथ प्रसूयमाना गौः पृथिवी भवति। तामलङ्कृतां ब्राह्मणाय दत्त्वा पृथिवीदानफलमाप्नोति। अत्र च गाथा भवति॥ १—३॥

सवत्सारोमतुल्यानि युगान्युभयतोमुखीम्।
दत्त्वा स्वर्गमवाप्नोति श्रद्दधानः समाहितः॥ ४

इति वैष्णवे धर्मशास्त्रेऽष्टाशीतितमोऽध्यायः॥ ८८॥

---

## एकोननवतितमोऽध्यायः।

मासः कार्त्तिकोऽग्निदैवत्यः। अग्निश्च सर्वदेवानां मुखम्। तस्मात् कार्त्तिकं मासं वहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात् पापात् पूतो भवति॥ १—३॥

कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः।
जपन् हविष्यभुग्दान्तः सर्व्वपापैः प्रमुच्यते॥ ४

इति वैष्णवे धर्म्मशास्त्रे एकोननवतितमोऽध्यायः॥ ८९

---

## नवतितमोऽध्यायः।

मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरःसंयुक्तायां चूर्णितलवणस्य सुवर्णनाभं प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रदापयेत्। अनेन कर्म्मणा रूपसौभाग्यवानभिजायते। पौषी चेत् पुष्ययुक्ता स्यात् तस्यां गौरसर्षपकल्कोद्वर्त्तितशरीरो गव्यघृतपूर्णकुम्भेनाभिषिक्तः सर्व्वौषधिभिः सर्व्वगन्धैः सर्व्वबीजैश्च स्नातो घृतेन भगवन्तं वासुदेवं स्नापयित्वा गन्धपुष्पधूपदीपनैवेद्यादिभिश्चाभ्यर्च्च्य वैष्णवैः शाक्रैर्बार्हस्पत्यैश्च मन्त्रैः पावके हुत्वा ससुवर्णेन घृतेन ब्राह्मणान् स्वस्ति वाचयेत्। वासोयुगं कर्त्रे दद्यात्। अनेन कर्म्मणा पुष्यति। माघी मघायुता चेत् तस्यां तिलैः श्राद्धं कृत्वा पूतो भवति। फाल्गुनी फाल्गुनीयुता चेत् स्यात् तस्यां ब्राह्मणाय सुसंस्कृतं स्वास्तीर्णं शयनं निवेद्य भार्य्यां मनोज्ञां रूपवतीं द्रविणवतीञ्चाप्नोति। नार्य्यपि भर्त्तारम्। चैत्री चित्रायुता चेत् स्यात् तस्यां चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति। वैशाखी विशाखायुता चेत् तस्यां ब्राह्मणसप्तकं क्षौद्रयुक्तैस्तिलैः सन्तर्प्य धर्म्मराजानं प्रीणयित्वा पापेभ्यः पूतो भवति। ज्यैष्ठी ज्येष्ठायुता चेत् तस्यां छत्रोपानत्प्रदानेन गवाधिपत्यं

प्राप्नोति। आषाढ़ामाषाढ़ायुक्तायामन्नपानदानेन तदे-वाक्षय्यमाप्नोति। श्रावण्यां श्रवणायुक्तायां जलधेनुं सान्नां वासोयुगाच्छादितां दत्त्वा स्वर्गमाप्नोति। प्रौष्ठपदायुक्तायां गोदानेन सर्व्वपापविनिर्म्मुक्तो भवति। आश्वयुज्यामश्विनी-गते चन्द्रमसि घृतपूर्णं भाजनं सुवर्णयुतं विप्राय दत्त्वा दीप्ताग्निर्भवति। कार्त्तिकी कृत्तिकायुता चेत् तस्यां सित-मुक्षाणमन्यवर्णं वा शशाङ्कोदये सर्व्वशस्यरत्नगन्धोपेतं दीप-मध्ये ब्राह्मणाय दत्त्वा कान्तारभयं नश्यति। वैशाखशुक्ल-तृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा च सर्व्वपापेभ्यः पूतो भवति। यच्च तस्मिन्नहनि प्रयच्छति तदक्षय्यमाप्नोति। पौष्यां समतीतायां कृष्णपक्षद्वादश्यां सोपवासस्तिलैः स्नातस्तिलोदकं दत्त्वा तिलैर्वासुदेवमभ्यर्च्य तानेव हुत्वा भुक्त्वा च पापेभ्यः पूतो भवति। माघ्यां सम-तीतायां कृष्णद्वादश्यां सोपवासः श्रवणं प्राप्य वासुदेवाग्रतो महावर्त्तिद्वयेन दीपद्वयं दद्यात्। दक्षिणपार्श्वे महारजन-रक्तेन समग्रेण वाससा घृततुलामष्टाधिकां दत्त्वा। वाम-पार्श्वे तिलतैलतुलां साष्टां दत्त्वा श्वेतेन समग्रेण वाससा। एतत् कृत्वा कृतकृत्यो यस्मिन् राष्ट्रेऽभिजायते यस्मिन् देशे यस्मिन् कुले स तत्रोज्ज्वलो भवति। आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदद्यादश्विनौ प्रीणयित्वा रूपभाग् भवति। तस्मिन्नेव मासे प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा राज्यभाग् भवति। प्रतिमासं रेवतीयुते चन्द्रमसि मधुघृत-युतं रेवतीप्रीत्यै परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपभाग् भवति। माघे मास्यग्निं प्रत्यहं

तिलैर्हुत्वा सघृतं कुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्नि-र्भवति। सर्व्वां चतुर्द्दशीं नदीजले स्नात्वा धर्म्मराजानं पूजयित्वा सर्व्वपापेभ्यः पूतो भवति॥ १—२७॥

यदीच्छेद्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपगान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ॥ २८

इति वैष्णवे धर्म्मशास्त्रे नवतितमोऽध्यायः॥ ९०॥

---

## एकनवतितमोऽध्यायः।

अथ कूपकर्त्तुस्तत्प्रवृत्ते पानीये दुष्कृतस्यार्द्धं विनश्यति। तड़ागकृन्नित्यतृप्तो वारुणं लोकमश्नुते। जलप्रदः सदा तृप्तो भवति। वृक्षारोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति। वृक्षप्रदो वृक्षप्रसूनैर्द्देवान् प्रीणयन्ति। फलैश्चातिथीन्। छायया चाभ्यागतान्। देवे वर्षत्युदकेन पितॄन्। सेतुकृत् स्वर्ग-माप्नोति। देवायतनकारयितुस्य देवायतनं करोति तस्यैव लोकमाप्नोति सुधासिक्तं कृत्वा यशसा विराजते। विचित्रां कृत्वा गन्धर्व्वलोकमाप्नोति। पुष्पप्रदानेन श्रीमान् भवति। अनुलेपनप्रदानेन कीर्त्तिमान् भवति। दीपप्रदानेन चक्षुष्मान् सर्व्वतोज्ज्वलश्च। अन्नप्रदानेन बलवान्। (धूपप्रदानेनोर्द्ध्वं गच्छति। देवनिर्म्माल्यापनयनाद्गोप्रदानफलमाप्नोति। देवायतनमार्ज्जनात् तदुपलेपनाद्ब्राह्मणोच्छिष्टमार्ज्जनात् पादादिधौचादकश्यपरिचरणाच्च॥ १—१८॥

कूपारामतड़ागेषु देवतायतनेषु च।
पुनःसंस्कारकर्त्ता च लभते मौलिकं फलम्॥ १०

इति वैष्णवे धर्म्मशास्त्रे एकनवतितमोऽध्यायः॥ ९१॥

---

## द्विनवतितमोऽध्यायः।

सर्व्वदानाधिकमभयप्रदानम्। तत्प्रदानेनाभीप्सितं लोकमाप्नोति। भूमिप्रदानेन च। गोचर्म्ममात्रामपि भुवं प्रदाय सर्व्वपापेभ्यः पूतो भवति। गोप्रदानेन स्वर्गलोकमाप्नोति। दशधेनुप्रदो गोलोकान्। शतधेनुप्रदो ब्रह्मलोकान्। सुवर्णशृङ्गीं रौप्यखुरां मुक्तालाङ्गूलां कांस्योपदोह्यां वस्त्रोत्तरीयां दत्त्वा धेनुरोमसङ्ख्यानि वर्षाणि स्वर्गलोकमाप्नोति। विशेषतः कपिलाम्। दान्तं धुरन्धरं दत्त्वा दशधेनुप्रदो भवति। अश्वदः सूर्य्यसालोक्यमाप्नोति। वासोदश्चन्द्रसालोक्यम्। सुवर्णदानेनाग्निसालोक्यम्। रूप्यप्रदानेन रूपम्। तैजसानां पात्र प्रदानेन पात्रं भवेत् सर्व्वकामानाम्। घृतमधुतैलप्रदानेनारोग्यम्। औषधप्रदानेन च। लवणप्रदानेन च लावण्यम्। धान्यप्रदानेन तृप्तिम्। शस्यप्रदानेन च। अन्नदः सर्व्वम्। धान्यप्रदानेन सौभाग्यम्। चकोर्त्तितानामन्येषां दानात् स्वर्गमवाप्नुयादिति। तिलप्रदः प्रजामिष्टाम्। इन्धनप्रदानेन दीप्ताग्निर्भवति। संग्रामे च सर्व्वजयमाप्नोति। आसनप्रदानेन स्थानम्। शय्याप्रदानेन भार्य्याम्। उपानत्प्रदानेनाश्वतरीयुक्तं रथम्। छत्रप्रदानेन स्वर्गम्।

तालवृन्तचामरप्रदानेनाध्वसुखित्वम् । वास्तुप्रदानेन नगराधिपत्यम् ॥ १—२१

यद्यदिष्टतमं लोके यच्चास्ति दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षय्यमिच्छता ॥ २२

इति वैष्णवे धर्म्मशास्त्रे द्विनवतितमोऽध्यायः ॥ ९२

---

## त्रिनवतितमोऽध्यायः ।

अब्राह्मणे दत्तं तत्समेव पारलौकिकम् । द्विगुणं ब्राह्मणब्रुवे । सहस्रगुणं प्राप्नोति । अनन्तं वेदपारगे ॥ पुरोहितस्तावन एव पालन् स्वसा दुहिता जामातरश्च पात्रम् ॥ १—६ ॥

न वार्य्यपि प्रयच्छेत वैड़ालव्रतिके द्विजे ।
न वकव्रतिके पापे नावेदविदि धर्म्मवित् ॥ ७
धर्म्मध्वजी सदालुब्धश्छाद्मिको लोकदाम्भिकः ।
वैड़ालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धिकः ॥ ८
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकव्रतपरो द्विजः ॥ ९
ये वकव्रतिनो लोके ये च मार्ज्जारलिङ्गिनः ।
ते पतन्त्यन्धतामिस्रे तेन पापेन कर्म्मणा ॥ १०
न धर्म्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रदम्भनम ॥ ११

प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः।
छद्मनाचरितं यच्च तद्वै रक्षांसि गच्छति॥ १२
अलिङ्गी लिङ्गिवेषेण यो वृत्तिमुपजीवति।
स लिङ्गिनां हरत्येनस्तिर्य्यग्योनौ प्रजायते॥ १३
न दानं यशसे दद्यान्न भयान्नोपकारिणे।
न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चितम्॥ १४
इति वैष्णवे धर्मशास्त्रे त्रिनवतितमोऽध्यायः॥ ९३॥

---

## चतुःनवतितमोऽध्यायः।

गृही वलीपलितदर्शने वनाश्रयो भवेत्। अपत्यस्य
चापत्यदर्शनेन वा। पुत्रेषु भार्य्यां निक्षिप्य तयानुगम्यमानो
वा। तत्राप्यग्नीनुपचरेत्। अफालकृष्टेन पञ्चयज्ञान् न
हापयेत्। स्वाध्यायञ्च न जह्यात्। ब्रह्मचर्य्यं पालयेत्।
चर्म्मचीरवासाः स्यात्। जटाश्मश्रुलोमनखांश्च बिभृयात्।
त्रिषवणस्नायी स्यात्। कपोतवृत्तिर्मासनिचयः संवत्सर-
निचयो वा। संवत्सरनिचयो पूर्वनिचितमाश्वयुज्यां
जह्यात्॥ १—१२॥

ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान् वने वसन्।
पुटेनैव पलाशेन पाणिना शकलेन वा॥ १३
इति वैष्णवे धर्मशास्त्रे चतुःनवतितमोऽध्यायः॥ ९४॥

---

## पञ्चनवतितमोऽध्यायः ।

वानप्रस्थस्तपसा शरीरं शोषयेत् । ग्रीष्मे पञ्चतपाः स्यात् । आकाशशायी प्रावृषि । आर्द्रवासा हेमन्ते । नक्ताशी स्यात् । एकान्तरद्व्यन्तरत्र्यन्तराशी वा स्यात् । पुष्पाशी । फलाशी । शाकाशी । पर्णाशी । मूलाशी । यवान्नं पक्षान्तयोर्वा सकृदश्नीयात् । चान्द्रायणैर्वा वर्त्तेत । अश्मकुट्टः । दन्तोलूखलिको वा ॥ १—१५ ॥

तपोमूलमिदं सर्वं दैवमानुषजं जगत् ।
तपोमध्यं तपोऽन्तञ्च तपसा च तथा धृतम् ॥ १६

यद्दुश्चरं यद्दुरापं यद्दूरं यच्च दुष्करम् ।
सर्वं तत्तपसा साध्यं तपो हि दुरतिक्रमम् ॥ १७

इति वैष्णवे धर्मशास्त्रे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः ।

अथ त्रिष्वाश्रमेषु पक्वकषायः प्राजापत्यामिष्टिं कृत्वा सर्वं वेदं दक्षिणां दत्त्वा प्रव्रज्याश्रमी स्यात् । आत्मन्यग्नीनारोप्य भिक्षार्थं ग्राममियात् । सप्तागारिकं भैक्ष्यमादद्यात् । अलाभे न व्यथेत । न भिक्षुकं भिक्षेत । भुक्तवति जनेऽतीते पात्रसम्पाते भैक्ष्यमादद्यात् । मृन्मये दारुपात्रेऽलाबुपात्रे

वा । तेषाञ्च त त्र्याङ्गिः शुद्धिः स्यात् । अभिपूजितलाभादुद्विजेत ॥ शून्यागारनिकेतनः स्यात् । वृक्षमूलनिकेतनो वा । न ग्रामे द्वितीयं रात्रिमावसेत् । कौपीनाच्छादनमात्रमेव वसनमाददात् । दृष्टिपूतं न्यसेत् पादम् । वस्त्रपूतं जलमाददात् । सत्यपूतं वदेत् । मनःपूतं समाचरेत् । मरणं नाभिकामयेत् जीवितञ्च । अतिवादांस्तितिक्षेत । न कञ्चनावमन्येत । निराशीः स्यात् । निर्नमस्कारः ॥ १—२२ ॥

वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं तयोरपि च चिन्तयेत् ॥ २३

प्राणायामधारणाध्याननित्यः स्यात् । संसारस्यानित्यतां पश्येत् । शरीरस्याशुचिभावम् । जरया रूपविपर्य्ययम् । शारीरमानसागन्तुकव्याधिभिश्चोपतापम् । सहजैश्च । नित्यान्धकारे गर्भे वसतिम् । मूत्रपुरीषमध्ये च । तत्र च शीतोष्णदुःखानुभवनम् । जन्मसमये योनिसङ्कटनिर्गमान्महादुःखानुभवनम् । बाल्ये मोहं गुरुपरवश्यताम् । अध्ययनादनेकक्लेशम् । यौवने च विषयप्राप्तावप्राप्तौ तदव्याप्तौ विषयसेवनान्नरके पतनम् । अप्रियैः सितं प्रियैश्च विप्रयोगम् । नरकेषु च सुमहद्दुःखम् । संसारसंसृतौ तिर्य्यग्योनिषु च । एवमस्मिन् सततपायिनि संसारे न किञ्चित् सुखम् । यदपि किञ्चिद्दुःखापेक्षया सुखसंज्ञं तदप्यनित्यम् । तत्मेवाशक्तावलम्भने वा महद्दुःखम् । शरीरञ्चेदं सप्तधातुकं पश्येत् । वसारुधिरमांसास्थिमेदोमज्जाशुक्रात्मकम् ॥ चर्मावनद्धम् । दुर्गन्धि च । मलायतनम् । सुखशतैरपि दृष्टं विकारि । प्रयत्नाद्धृतमपि विनाशि ॥

कामक्रोधलोभमोहमदमातसर्य्यस्थानम्। पृथिव्यामेजोवाय्वा-काशात्मकम्। अस्थिशिराधमनिस्नायुयुतम्। रजस्वलम्। षट्त्वचम्। अस्थां त्रिभिः शतैः षष्ठ्यधिकैर्धार्य्यमाणम्। तेषां विभागः। सूक्ष्मैः सह चतुःषष्टिर्दशनाः। विंशति-र्नखाः। पाणिपादशलाकाश्च। षष्टिरङ्गुलीनां पर्वाणि। द्वे पार्ष्णोः। चतुष्टयं गुल्फेषु। चत्वार्य्यरत्न्योः। चत्वारि जङ्घयोः। द्वे द्वे जानु-कपोलयोः। द्वे द्वे अक्षतालूषक-श्रोणिफलकेषु। भगास्थ्येकम्। पृष्ठास्थि पञ्चचत्वारिंशद्भागम्। पञ्चदशास्थीनि ग्रीवा। जत्र्वेकम्॥ तथा हनुः। तन्मूले च द्वे। द्वे ललाटाक्षिगण्डे। नासा घनास्थिका। अर्बुदैः स्थानकैश्च सार्द्धं द्विसप्ततिः पार्श्वकाः। उरः सप्तदश। द्वौ शङ्खकौ। चत्वारि कपालानि शिरसश्चेति। शरीरेऽस्मिन् सप्तशिराशतानि। नव स्नायुशतानि। धमनीशते द्वे। पञ्चपेशीशतानि। क्षुद्रधमनीनामेकोनत्रिंशल्लक्षाणि नव-शतानि षट्पंचाशच्चमन्यः। लक्षत्रयं श्मश्रुकेशकूपानाम्। सप्तोत्तरं मर्म्मशतम्। सन्धिशते द्वे। चतुःपंचाशद्रोमकोटयः सप्तषष्टिश्च लक्षाणि। नाभिरोजोगुदं शुक्रं शोणितं शङ्खकौ मूर्द्धा कण्ठो हृदयंचेति प्राणायतनानि। बाहुद्वयं जङ्घाद्वयं मध्यं शीर्षमिति षड़ङ्गानि। वसा वपा अवहननं नाभिः क्लोमा यकृत् प्लीहा क्षुद्रान्त्रं वृक्कौ वस्तिः पुरीषाधानमा-माशयो हृदयं स्थूलान्त्रं गुदमुदरं गुदकोष्ठम्। कनीनिके अक्षिकूटे शष्कुली कर्णौ कर्णपत्रकौ गण्डौ भ्रुवौ शङ्खकौ दन्तवेष्टावोष्ठौ ककुन्दरे वङ्क्षणौ वृषणौ वृक्कौ श्लेष्मसंज्ञा-तकौ स्तनौ उपजिह्वा स्फिचौ बाहू जङ्घे ऊरू पिण्डिके

तालूदरं वस्तिशीर्षौ चिवुकं गलगुण्डिके अवटश्चेत्यस्मिन् शरीरके स्थानानि। शब्दस्पर्शरसरूपगन्धाश्च विषयाः। नासिकालोचनत्वग्जिह्वाश्रोत्रमिति बुद्धीन्द्रियाणि। हस्तौ पादौ पायूपस्थं जिह्वेति कर्म्मेन्द्रियाणि। मनोबुद्धिरात्मा चाव्यक्तमितीन्द्रियातीताः॥ १—८६॥

इदं शरीरं वसुधे क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः॥ ८७
क्षेत्रज्ञमेव मां विद्धि सर्व्वक्षेत्रेषु भाविनि।
क्षेत्रक्षेत्रज्ञविज्ञानं ज्ञेयं नित्यं मुमुक्षुणा॥ ८८

इति वैष्णवे धर्म्मशास्त्रे षण्नवतितमोऽध्यायः॥ ९६॥

---

## सप्तनवतितमोऽध्यायः।

ऊरुस्थोत्तानचरणः सव्ये करे करमितरं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तानसंस्पृशन् स्वं नासिकाग्रं पश्यन् दिशश्चानवलोकयन् विभीः प्रशान्तात्मा चतुर्विंशत्या तत्त्वैर्व्यतीतं चिन्तयेत्। नित्यमतीन्द्रियमगुणं शब्दस्पर्शरसरूपगन्धातीतं सर्व्वज्ञमतिस्थूलम्। सर्व्वगमतिसूक्ष्मम्। सर्व्वतः पाणिपादं सर्व्वतोऽक्षिशिरोमुखं सर्व्वतः सर्व्वेन्द्रियशक्तिम्। एवं ध्यायेत्। ध्याननिरतस्य च संवत्सरेण योगाविर्भावो भवति। अथ निराकारे लक्ष्यबन्धं कर्त्तुं न शक्नोति तदा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यात्माव्यक्तपुरुषाणां पूर्व्वं पूर्व्वं ध्यात्वा तत्र लब्धलक्ष्यस्तत् परित्यज्यापरमपरं ध्यायेत्। एवं पुरुषध्यानमारभेत। तत्राप्यसमर्थः स्वहृदयपद्मस्थाया-

ख,खस्य मध्ये दीपवत् पुरुषं ध्यायेत्। तत्राप्यसमर्थो भगवन्तं वासुदेवं किरीटिनं कुण्डलिनमङ्गदिनं श्रीवत्साङ्कं वनमालाविभूषितोरस्कं सौम्यरूपं चतुर्भुजं शङ्खचक्रगदापद्मधरं चरणमध्यगतभुवं ध्यायेत्। यद्ध्यायति तदाप्नोति ध्यानगुह्यम्। तस्मात् सर्वमेव क्षरं त्यक्त्वा अक्षरमेव ध्यायेत्। न च पुरुषं विना किंचिदप्यक्षरमस्ति। तं प्राप्य मुक्तो भवति॥ १—१४॥

पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः।
तस्मात् पुरुष इत्येवं प्रोच्यते तत्त्वचिन्तकैः॥ १५
प्राणायामपरो भूत्वा योगी नित्यमतन्द्रितः।
ध्यायते पुरुषं विष्णुं निर्गुणं पंचविंशकम्॥ १६
तत्त्वात्मानमगम्यंच सर्वतत्त्वविवर्ज्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च॥ १७
वहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थंचान्तिके च तत्॥ १८
अविभक्तंच भूतेन विभक्तमिव च स्थितम्।
भूतभव्यभवद्रूपं ग्रसिष्णु प्रभविष्णु च॥ १९
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य तिष्ठितम्॥ २०
इति चैवं तथा ज्ञानं ज्ञेयंचोक्तं समासतः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥ २१

इति वैष्णवे धर्म्मशास्त्रे सप्तनवतितमोऽध्यायः॥ ९७॥

---

## अष्टनवतितमोऽध्यायः ।

इत्येवमुक्ता वसुमती जानुभ्यां शिरसा च नमस्कारं कृत्वोवाच । भगवंस्त्वत्समीपे सततमेवं चत्वारि महाभूतानि कृतालयान्याकाशः शङ्खरूपी वायुश्चक्ररूपी तेजश्च गदारूप्यम्भोऽम्भोरुहरूपी अहमप्यनेनैव रूपेण भगवत्पादमध्यपरिवर्त्तिनी भवितुमिच्छामि । इत्येवमुक्तोभगवांस्तथेत्युवाच । वसुधापि लब्धकामा तथा चक्रे । देवदेवञ्च तुष्टाव । ओँ नमस्ते । देवदेव । वासुदेव । आदिदेव । कामदेव । कामपाल । महीपाल । अनादिमध्यनिधन । प्रजापते । सुप्रजापते । महाप्रजापते । ऊर्ज्जस्पते । वाचस्पते । जगत्पते । दिवस्पते । वनस्पते । पयस्पते । पृथीवीपते । सलिलपते । दिक्पते । महत्पते । मरुत्पते । लक्ष्मीपते । ब्रह्मरूप । ब्राह्मणप्रिय । सर्वग । अचिन्त्य । ज्ञानगम्य । पुरुहूत । पुरुष्टुत । ब्रह्मण्य । ब्रह्मप्रिय । ब्रह्मकायिक । महाकायिक । महाराजिक । चतुर्महाराजिक । भास्वर । महाभास्वर । सप्त । महाभाग । स्वर । तुषित । महातुषित । प्रतर्द्दन । परिनिर्म्मित । अपरिनिर्म्मित । वशवर्त्तिन् । यज्ञ । महायज्ञ । यज्ञयोग । यज्ञगम्य । यज्ञनिधन । अजित । वैकुण्ठ । अपार । पर । पुराण । लेख्य । प्रजाधर । चित्रशिखण्डधर । यज्ञभागहर । पुरोडाशहर । विश्वेश्वर । विश्वधर । शुचिश्रवः । अच्युतार्द्दन । हुताशिः । खण्डपरशो । पद्मनाभ । पद्मधर । पद्मधाराधर । हृषीकेश । एकशृङ्ग । महावराह । दुहिण । अच्युत । अनन्त । पुरुष ।

महापुरुष। कपिल। साङ्ख्याचार्य्य। विष्वक्सेन। धर्म्म।
धर्म्मद। धर्म्माङ्ग। धर्म्मवसुप्रद। वरप्रद। विष्णो। जिष्णो।
सहिष्णो। कृष्ण। पुण्डरीकाक्ष। नारायण। परायण।
जगत्परायण। नमो नम इति॥ १—१०१॥

स्तुत्वा त्वेवं प्रसन्नेन मनसा पृथिवी तदा।
उवाच सम्मुखं देवं लब्धकामा वसुन्धरा॥ १०२

इति वैष्णवे धर्म्मशास्त्रेऽष्टनवतितमोऽध्यायः॥ ९८॥

---

## नवनवतितमोऽध्यायः।

दृष्ट्वा श्रियं देवदेवस्य विष्णोर्गृहीतपादां तपसा ज्वलन्तीम।
सुतप्तजाम्बुनदचारुवर्णां पप्रच्छ देवीं वसुधा प्रहृष्टा॥ १

उन्निद्रकोकनदचारुकरे वरेण्ये
उन्निद्रकोकनदनाभिगृहीतपादे।
उन्निद्रकोकनदसद्मसदास्थितीते
उन्निद्रकोकनदमध्यसमानवर्णे॥ २

नीलाञ्जनेत्वे तपनीयवर्णे शुक्लाम्बरे रत्नविभूषिताङ्गि।
चन्द्रानने सूर्य्यसमानभासे महाप्रभावे जगतः प्रधाने॥ ३

त्वमेव निद्रा जगतः प्रधाना लक्ष्मीर्धृतिः श्रीविरतिर्जया च।
कान्तिः प्रजा कीर्त्तिरथो विभूतिः सरस्वती वागथ पावनी च॥

स्वधा तितिक्षा वसुधा प्रतिष्ठा
स्थिति सुदीक्षा च तथा सुनीति।
ख्यातिर्विशाला च तथानसूया
स्वाहा च मेधा च तथैव बुद्धिः॥ ५

आक्रम्य सर्वांस्तु यथा त्रिलोकीं
तिष्ठत्ययं देववरोऽसिताक्षि।
तथा स्थिता त्वं वरदे तथापि
इच्छाम्यहं वसति विभूत्याः॥ ६

इत्येवमुक्ता वसुधां बभाषे लक्ष्मीस्तदा देववराग्रतःस्था।
सदा स्थिताहं मधुसूदनस्य देवस्य पार्श्वे तपनीय वर्णे॥ ७

अस्यात्मया यं मनसा स्मरामि
श्रियायुतं तं प्रवदन्ति सन्तः।
संस्मारणे वाप्यथ तत्र चाहं
स्थिता सदा तच्छृणु लोकधात्रि॥ ८

मसाम्यथ र्कें च निशाकरे च तारागणाढ्ये गगने विमेघे।
मेघे तथालम्बपयोधरे च शक्रायुधाढ्ये च तड़ित्प्रकाशे॥ ९
तथा सुवर्णे विमले च रूप्ये रत्नेषु वस्त्रेष्वमलेषु भूमे।
प्रसादमालासु च पाण्डुरासु देवालयेषु ध्वजभूषितेषु॥ १०
सद्यः कृते चाप्यथ गोमये च मत्ते गजेन्द्रे तुरगे प्रहृष्टे।
वृषे तथा दर्पसमन्विते च विप्रे तथैवाध्ययनप्रपन्ने॥ ११

सिंहासने चामलके च बिल्वे
छत्रे च शङ्खे च तथैव पद्मे।
दीप्ते हुताशे विमले च खड्गे
आदर्शबिम्बे च तथा स्थिताहम्॥ १२

पूर्णोदकुम्भेषु सचामरेषु
सतालवृन्तेषु विभूषितेषु।
भृङ्गारपात्रेषु मनोहरेषु
हृदि स्थिताहञ्च नमोद्धतायाम्॥ १३